सम्पुटः—५ [सङ्कीर्णग्रन्थाः]

# सर्वमूलग्रन्थाः

श्रीमदानन्दतीर्थभगवत्पादाः

अखिलभारतमाध्वमहामण्डलप्रकाशनम्

**VOLUME—5**

# SARVA-MŪLA-GRANTHĀḤ

*[SAṄKĪRṆA GRANTHAS]*

PRAKARAṆAS

ĀCĀRA GRANTHAS

&

STOTRAS

*[With the oldest and authentic version and various readings]*


**SRI ĀNANDATĪRTHA BHAGAVATPĀDA**

*[SRI MADHVACHARYA]*

*Edited by*

BANNANJE GOVINDACHARYA


*


**AKHILA BHĀRATA MĀDHVA MAHĀ MAṆḌALA**

**PUBLICATION**

**1974**

**SARVA-MŪLA-GRANTHĀH**
*[WORKS OF SRI MADHVA]*
*VOLUME—5 [SANKIRNA GRANTHAS]*

This is an Akhila Bharata
Madhva Maha Mandala Publication

1974, January



Edited by
**Bannanje Govindacharya**
Isavasyam, Udupi–576 103

Financing by
**K. Narayana Rao**
Gadag

Printed at
Sri Dharmabodha Vidyunmudranalaya
Car Street, Udupi–576 101

Copies available at:
(1) S. M. S. P. Sanskrit College
Sales & Publications Division
Udupi–576 101
(2) Poornaprajna Vidyapeetha
Poornaprajna Nagara
Bangalore–560 028

175/-

Rs. [illegible]/— (Complete set)

सम्पुटः—५ [सङ्कीर्णग्रन्थाः]

# सर्वमूलग्रन्थाः

प्रकरणानि, आचारग्रन्थाः, स्तोत्राणि च ।

[मूलकोशानुसारेण पाठान्तरटिप्पण्यादिना शोधितः पाठः]


## श्रीमदानन्दतीर्थभगवत्पादाः

टिप्पण्यादिसंयोजनेन

शोधयिता सम्पादकश्च

**बन्नञ्जे गोविन्दाचार्यः**



अखिलभारतमाध्वमहामण्डलप्रकाशनम्

1974

सर्वमूलग्रन्थाः
[पञ्चमो भागः]
सङ्कीर्णग्रन्थाः

शोधयिता सम्पादकश्च
बन्नञ्जे गोविन्दाचार्यः
ईशावास्यम्
उडुपी-५७६ १०३

आर्थिकनिर्वहणम्
के. नारायण राव
गदग



प्राप्तिस्थानम्

१. एस्. एम्. एस्. पि. संस्कृतमहापाठशाला
सेल्स् अण्ड् पब्लिकेशन्स् डिविशन्
उडुपी–५७६ १०१

२. पूर्णप्रज्ञविद्यापीठम्
पूर्णप्रज्ञनगरम्
बेङ्गळूर–५६० ०२८

अशीती रूप्यकाणि
(समग्रस्य सम्पुटपञ्चकस्य)

स्वामी गुरुपादानन्दः सरस्वती
वेदान्तशास्त्राचार्य, अनुसंधाता —

## सम्पादकीयम्

श्रीमदानन्दतीर्थभगवत्पादप्रणीतानां ग्रन्थरत्नानामयं पञ्चमः पश्चिमश्च भागः सम्प्रति सामोदं तत्र-भवतां पुर उपनीयते। तथाच प्रथमो द्वितीयश्चेत्याद्यौ द्वौ, चतुर्थः पञ्चमश्चेत्यन्त्यौ द्वौ, आहत्य चत्वारो भागाः साम्प्रतं समवसिताः। तृतीयस्तु भागः, यत्र सभागवतं भागवततात्पर्यं भवति, सत्वरमेव मुद्रणालया-न्निर्जिगमिषतीति प्रत्याशयामः।

सूत्रसम्बद्धाश्चत्वारः, गीतासङ्गतौ द्वौ, उपनिषत्सु च भाष्याणि दशेति षोडश ग्रन्थाः प्रथमभागे गताः। तेन च प्रस्थानत्रयमवसितम्। द्वितीयभागे चेतिहासप्रस्थाने महाभारततात्पर्यनिर्णयः, महाभारत-तात्पर्य (यमकभारतम्) चेति द्वौ गतौ। मध्यमे च भागे सम्पत्स्यमाने भागवततात्पर्यमेकं पुराणप्रस्थानं नाम। चतुर्थभागे श्रुतिप्रस्थाने ऋग्भाष्यं च खण्डार्थनिर्णयश्च कर्म्मनिर्णयापरनामा। अयं च चरमो भागः सङ्कीर्ण-ग्रन्थमयोऽवशिष्टान् भगवत्पादनिबन्धानन्तर्भावयति। तदेवं सर्वोऽपि सर्वमूलग्रन्थसन्दर्भः सम्पन्नः।

तथाह्यत्र सङ्गृहीता ग्रन्थाः —

दशसु प्रकरणतया प्रसिद्धेषु कर्म्मनिर्णयापरनामानं खण्डार्थनिर्णयमेकं विहाय नव प्रकरणानि प्रक-रणप्रस्थानम्, कृष्णामृतमहार्णवतन्त्रसारसङ्ग्रहौ, सदाचारस्मृतिः, ओन्तत्सत्प्रणवकल्प(यतिप्रणवकल्प)-जयन्तीनिर्णयौ, न्यासपद्धतिः तिथिनिर्णयश्चेत्यपूर्वकृतिद्वयं चेति सप्ताऽचारप्रस्थानम्। तृतीयं स्तोत्रप्रस्था-नम्— द्वादशस्तोत्रमिति नखस्तुतिरिति च प्रसिद्धः स्तोत्रभागो यत्र गतः। एवमाहत्य एकोनचत्वारिंशद् ग्रन्थाः। अन्ते चाऽचार्यैरेव बाल्ये कन्दुकक्रीडावेलायां तल्लयानुसारिच्छन्दसा प्रगीतमिति प्रथितं श्रीकृष्णपद्यम्; कन्दुकस्तुतिरिति च यस्यापरं नामधेयं गदन्ति। तदेवं चत्वारिंशद् ग्रन्थरत्नानि भगवत्पादजलधेरधिगतानि।

यद्यप्यद्ययावत् सप्तत्रिंशदेव ग्रन्थानाचार्यपादो निबबन्धेति बहुजनप्रत्ययः। न्यासपद्धतिः तिथिनिर्ण-यश्चेति द्वौ नैतावत्पर्यन्तं प्रसिद्धौ। तावेतावपूर्वावनर्घावनल्पविषयाकारावप्यल्पाकृती कृतिमणी इदमुपज्ञमस्माभिः प्राकश्यमुपनीयत इति नः स्थाने महानभिमानः। अनयोराचार्यकृतितानिर्णयस्तु तत्रैव टिप्पण्यां विवृतो वेदितव्यः।

तत्र तावदत्रानुसृता या ग्रन्थसम्पादनरीतिः, या चापूर्वता टिप्पणीसंयोजने, ते अन्तरेण किञ्चिन्नि-वेदनीयम्। नवापि प्रकरणानि समग्रमविकलं च श्रीहृषीकेशतीर्थलिखिते मूलकोश उपलभ्यन्त इति महद्भाग-धेयम्। स मूलपाठः ऐदम्प्राथम्येनात्र प्रकाशितः। अन्ये च पाठभेदा अन्यत्रान्यत्र परिदृष्टा अधस्तान्निर्दिष्टा न केवलम्; किन्तु प्रकरणानां श्रीपद्मनाभतीर्थविरचिता या प्रथमटीका; या च तत्त्वनिर्णयटीका तत्वमञ्जरी श्रीनारायणपण्डिताचार्यविरचिता, एतयोरमुद्रितयोरपूर्वयोश्च प्राचीनटीकयोः मूलस्य प्रदर्शिता अपूर्वतमा अप्यर्था अत्र टिप्पण्यां निवेशिताः। तेन च प्राचीनटीकाभागोऽपीदम्प्रथमं प्रकटितः प्रतनजिज्ञासूनामुपहारीक्रियत इति।

आचारप्रकरणे च सदाचारस्मृतिमपहायापरे ग्रन्था न प्रतनकोशे हृषीकेशतीर्थीये सम्प्रत्युपलभ्यन्ते। तेन च मूलकोशानुसारेण लिपिबद्धं श्रीरघुवर्यतीर्थैः श्रीपलिमारुमठाधीशैर्लिखितं कोशान्तरमादायात्र मूलपाटनिर्णयः कृतः। तन्त्रसारसङ्ग्रहे पुनः साङ्गोपाङ्गः सर्वेषामपि मन्त्राणामुद्धारष्टिप्पण्यां कृतः। स च मन्त्रशास्त्रबुभुत्सूनां विशेषत उपकाराय भवेत्।

तिथिनिर्णयस्तु दैवज्ञानां दिनस्फुटविधानमभिदधत् अतिजटिलां गणितप्रक्रियां निरूपयतीति स्फुटव्याख्यानमृते दुर्बोधतम एव। मुद्रितोऽप्यमुद्रित इव यत्रत्यर्थ एव नावाबुद्ध्यत। तदर्थं सगणितप्रक्रियं विस्तृतं व्याख्यानमेवात्र समयोजि। तेनैतद्ग्रन्थसंशोधने महद् द्वारं विवृतं मन्यामहे। एतद्ग्रन्थसम्पादने टिप्पणीसंयोजने च नितरां कृतसहकाराणां ज्योतिर्विदामग्रणीनां श्रीमतां नरसिंहोपाध्यायानामयं सम्पादकश्चिरमृणी येषां साहाय्यमन्तरा चेदमसम्भवप्रायमेव समभविष्यत्।

अथ स्तोत्राणि मूलकोशे चोपलब्धानि। परं तु मूलपाटस्य प्रचलितस्य च पाठस्यान्तरं सागरोपमम्। अन्य एव पाठः; अन्यैवानुपूर्वी; क्वचिदन्यदेव स्तोत्रम्। एतद्विषये यद् वक्तव्यं तदपि तत्रैव टिप्पण्यां निर्दिष्टमिति न पुनराम्रेडितव्यम्।

बहुव्ययसाध्ये मुद्रणकर्म्मणि यथापूर्वं समग्रार्थिकनिर्वहणेन निरन्तरमाचार्यसेवालोलुपस्य श्रीमतः गदग नारायणराव् महोदयस्य सौजन्यं वदान्यतां च कथं न स्मरामः। परन्त्वेतस्मिन् महति पुण्यकर्म्मणि बद्धादरे तस्मिन्नास्माकीनं कृतज्ञतार्पणमप्यल्पमेव, केवलं भगवत्तमो गुरुतमश्च तं महाभागं समृद्धेन श्रेयसा प्रेयसा च संयोजयतामिति तावेव निरन्तरं प्रार्थयामहे।

धर्म्मबोधविद्युन्मुद्रणालयाधिकृताः कर्म्मकराश्चास्मिन् पुण्यतमे कर्म्मणि सश्रद्धं स्वं कर्त्तव्यमशून्यं निरुदवहन्निति तेऽपि सश्लाघमभिनन्दनीया इति शम्।

ईशावास्यम्
उडुपी – ३

भगवत्पादकृपालेशाकाङ्क्षी
बन्नञ्जे गोविन्दाचार्यः



भुजगभोगाभमुद्यम्य हृद्यं निजभुजं दक्षिणं लक्ष्मगाढ्यम् ।
ललितमुद्रिक्तविज्ञानमुद्रं भज भजानन्तमित्यालपन्तम् ।
भवदवोष्णेन तातप्यमानान् भुवि परं नाथमप्रेक्षमाणान् ।
भुवनमान्येन चान्येन दोष्णा भवतु भीर्मेति नः सान्त्वयन्तम् ।
प्रणतवान् प्राणिनां प्राणभूतं प्रणतिभिः प्रीणये पूर्णबोधम् ॥

# विष्णुतत्वनिर्णयः

ॐ ॥ सदागमैकविज्ञेयं[1] समतीतक्षराक्षरम् ।
नारायणं सदा वन्दे निर्द्दोषाशेषसद्गुणम ॥ * ॥

विशेषणानि यानीह कथितानि सदुक्तिभिः[2] ।
साधयिष्यामि तान्येव क्रमात् सज्जनसंविदे ॥ * ॥

"ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम् । मूलरामायणं चैव पुराणं चैतदात्मकम् । ये चानुयायिनस्त्वेषां सर्वे ते च सदागमाः । दुरागमास्तदन्ये ये तैर्न्न ज्ञेयो जनार्द्दनः । ज्ञेय एतैः सदा युक्तैर्भक्तिमद्भिः सुनिष्ठितैः । नच केवलतर्केण नाक्षजेन न केनचित्[3] । केवलागमविज्ञेयो भक्तैरेव[4] नचान्यथा" इति ब्रह्माण्डे । "नावेदविन्मनुते तं[5] बृहन्तं सर्वानुभुमात्मानं[6] साम्पराये[7]" इति हि श्रुतिः[8] ।

---

१ "सदागमा निर्द्दोषागमाः । दोषास्त्वज्ञानमूलत्वादयः । सदागमैरेकविज्ञेयं प्रधानविज्ञेयम् । यद्यपि सदागमैः कर्म्मदेवतादिकमपि विज्ञेयम्; तथाऽपि तत्र महातात्पर्याभावान्नारायण एव मुख्यज्ञेय इत्यर्थः। अथवा सर्वचेतनाचेतनेभ्य एकत्वेन मुख्यत्वेन ज्ञेयम् । एकशब्दः प्रधानेऽपि प्रसिद्धः— "एकः प्रधान उद्दिष्टः" इति। अथवा, सदागमेनैकेनैव विज्ञेयम्; नतु दुरागमेन । नापि सदागमाननुगृहीतप्रत्यक्षानुमानाभ्याम् । तयोराभासत्वनियमात्" इति तत्वमञ्जरीकारा नारायणपण्डिताचार्याः ।

२ "सदुक्तिभिः सदागमैः । निर्द्दोषोपपत्त्युक्तिभिश्च" इति च तत्वमञ्जरी ।

३ "न केनचित् अर्थापत्त्यादिना" इति च ।

४ "सदायुक्तैर्भक्तिमद्भिरित्युक्तिरयोगव्यवच्छेदाय । भक्तैरेव नचान्यथेत्यन्ययोगव्यवच्छेदाय" इति च ।

५ "–मनुते दम्–" इति प्र. पाठः । सूत्रभाष्येऽपि "मनुते तम्" इत्येव पाठः ।

६ "सर्वानुभुं सर्वस्यानुभवितारम् । आत्मानम् स्वामिनम्" इति च ।

७ "सम्पराये" इति प्राचीनकोशे पठ्यते । "सम्यक् परस्मिन्नयनम्" इति निर्वचनं च तत्वदीपिकायाम् । इतरत्र कोशेषु सर्वत्र "साम्पराये" इत्येव ।

८ "इति तैत्तिरीयश्रुतिः" इति प्र. पाठः।

"नैषा तर्केण मतिरापनेया[1] प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ" इति च[2]। "नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदा इति" इति पिप्पलादश्रुतिः[3]।

नचैतेषां वचनानामेवाप्रामाण्यम् । अपौरुषेयत्वाद् वेदस्य । "इतिहासपुराणः पञ्चमो वेदानां वेदः" इति तद्गृहीतत्वाच्च । नचापौरुषेयं वाक्यमेव नास्तीति वाच्यम् । तदभावे सर्वसमयाभिमतधर्म्माद्यसिद्धेः । यस्य तौ नाभिमतौ नासौ समयी,[4] समयप्रयोजनाभावात् । नच तेन लोकोपकारः । धर्म्माधर्म्माभावज्ञाने[5] परस्परहिंसादिनाऽपकारस्यैव प्राप्तेः । नचोपकारेण तस्य प्रयोजनम्, अदृष्टाभावात् । अतो धर्म्माद्यभावं वदता स्वसमयस्याऽनर्थक्य[6]मङ्गीकृतमेवेति नासौ समयी ।

नच पौरुषेयेण वाक्येन तत्सिद्धिः । अज्ञानविप्रलम्भयोः प्राप्तेः । नच तदर्थत्वेन सर्वज्ञः कल्प्येत । अन्यत्रादृष्टस्य सर्वज्ञत्वस्य कल्पनम्, तस्याविप्रलम्भकल्पनम्[7], तत्कृतत्वकल्पनं चेति कल्पनागौरवप्राप्तेः । अपौरुषेयवाक्याङ्गीकारे न किञ्चित् कल्प्यम्[8] । अपौरुषेयत्वं च स्वत एव सिद्धम् । वेदकर्त्तुरप्रसिद्धेः । अप्रसिद्धौ च कर्त्तुस्तत्कल्पने कल्पनागौरवम् । अकल्पने चाकर्त्तृकत्वं सिद्धमेव ॥ * ॥

नच लौकिकवाक्यवत् सकर्त्तृकत्वम् । तस्याकर्त्तृकत्वप्रसिद्ध्यभावात् । नच केनचित् कृत्वा वेद इत्युक्तं वेदसमम्, परम्पराभावात् । नच स्वयम्प्रतिभातवेदैर्दृष्टमवेदवाक्यं भवति । परम्परासिद्धवेदवाक्यानुसारित्वात् । वेदद्रष्टॄणामुक्तगुणवत्त्वाच्च तेषाम् । उक्तं च ब्रह्माण्डे—

"विंशल्लक्षणतोऽनूनस्तपस्वी बहुवेदवित् । वेद इत्येव यं पश्येत् स वेदो ज्ञानदर्शनात्" इति ॥ * ॥

---

१ "आपनेया प्रापणीया" इति तत्वमञ्जरी । एतेन नेदं नयते रूपं किन्त्वाप्नोतेरित्युक्तं भवति ।

२ "इति कठश्रुतिः" प्र. पाठः ।

३ "वेदा इति पिप्पलादश्रुतिः" इत्येकेतिकारः प्र. पाठः प्रामादिकः ।

४ "प्रत्यक्षेणानवगतमप्यर्थं समाययति अवगमयतीति हि समयः" इति तत्वमञ्जरी ।

५ "धर्म्माद्यभावज्ञाने" इति प्र. पाठः । ६ "स्वसमयानर्थक्य-" इति क्वचित् ।

७ "तस्याविप्रलम्भकत्वकल्पनम्, तस्य तत्कृतत्व-" इत्यादि प्र. पाठः ।

८ "पौरुषेयवाक्यप्रामाण्यवदपौरुषेयवाक्यप्रामाण्यार्थं न किञ्चित् कल्पनीयमस्ति । अपौरुषेयवाक्यकर्त्तुरभावेन तत्सर्वज्ञत्वादिकल्पनाभावात् । नन्वेतन्न युज्यते । वेदप्रामाण्यार्थं तदपौरुषेयत्वस्य कल्पनीयत्वात् । अत आह—अपौरुषेयत्वं चेति । शशविषाणानुपलम्भेन यथा शशस्य विषाणरहितत्वं सिद्धमेव, न कल्प्यम्, एवं वेदस्यापौरुषेयत्वं कर्त्रप्रसिद्ध्या सिद्धमेव न कल्प्यमित्यर्थः" इति पद्मनाभतीर्थाः प्राचीनटीकाकाराः ।

प्रामाण्यं च स्वत एव । अन्यथाऽनवस्थानात् । [1]नचोक्तयुक्त्यधीनत्वं प्रामाण्यस्य । बुद्धिदोषनिरासमात्रकारणत्वाद् युक्तीनाम् । अदुष्टबुद्धीनां स्वत एव सिद्धत्वाच्च प्रामाण्यस्य । नचाऽकाङ्क्षायामेव प्रमाणान्तरापेक्षत्वादनवस्थाभाव इति वाच्यम् । आकाङ्क्षाया एव बुद्धिदोषात्मकत्वात् । दुष्टबुद्धीनामेवाप्रामाण्याशङ्केति[2] परतोऽप्रामाण्यं [3]प्रामाण्यं स्वत एवेति सिद्धम् ॥ * ॥

नचोच्चारणकाल एव वर्णानामुत्पत्तिरिति वाच्यम्; तदेवेदं वचनमिति प्रत्यभिज्ञाविरोधात् नच सादृश्यात् प्रत्यभिज्ञा भ्रान्तिरिति वाच्यम्; 'सोयं देवदत्तः' इत्यादेरपि तथात्वप्राप्तेः[4] । सर्वक्षणिकत्वं [5]वदताऽपि बौद्धेन सेयं दिगित्यादिप्रत्यभिज्ञाया[6] न भ्रान्तित्वं वाच्यम्; पञ्चस्कन्धेभ्योऽन्यत्वात् । नच दिश एव भ्रान्तिकल्पिताः; विज्ञानशून्ययोरपि साम्यात् । नचाऽदित्योदयेनैव[7] दिक्कल्पना; अन्धकारेऽपि दिङ्मात्रप्रतीतेः । कादाचित्कभ्रान्तिरेवा[8]ऽदित्यदर्शनान्निवार्यते । सा च विज्ञानशून्ययोरपि भवतीति तेषां मतम्; वादिविप्रतिपत्तेः । अतो दिशः स्थिरा एवेति सिद्ध्यति शून्यवदेव । अतस्तद्वद् वेदस्यापि स्थैर्यं सिद्धम्; 'तदेवेदं वाक्यम्' इति प्रत्यभिज्ञानात् ॥ * ॥

[9]नचानुमानादीनामागमं विना प्रामाण्यं धर्म्मादिषु; तदगोचरत्वात् । अतोऽपौरुषेयवाक्येनैव धर्म्मादिसिद्धेः सर्ववादिनामपि तदङ्गीकार्यम् । तत्प्रामाण्यं च सिद्धम्[10] । अप्रामाण्यस्य च परतस्त्वानङ्गीकारे दुष्टेन्द्रियादेरप्यप्रामाण्यहेतुत्वं न स्यात् । तदनङ्गीकारे चानुभवविरोधः । अतः प्रामाण्यं स्वतः परतोऽप्रामाण्यमिति च सिद्धम्[11] ॥ * ॥

---

१ "प्रामाण्यं परतश्चेदनवस्थेति ह्युक्तम् । एवञ्चानवस्थापरिहारान्यथानुपपत्तियुक्त्यधीनत्वं प्रामाण्यस्येत्यत आह–नचोक्तेति" इति तत्वमञ्जरी । "परतःप्रामाण्येऽनवस्था स्यादित्यनया युक्त्या परतःप्रामाण्यशङ्कादोष एव निरस्यते । नतु स्वतः प्रामाण्यं साध्यते । तच्छङ्काभावे अनवस्थोक्तेरनपेक्षितत्वात्" इति च प्राचीनटीका ।

२ "–माण्यशङ्केति" इति प्र. पाठः ।

३ "प्रामाण्यं च स्वत एव सिद्धम्" इति प्र. पाठः । "प्रामाण्यं स्वत एवेति च सिद्धम्" इति क्वचित् ।

४ "बाधरहितस्य भ्रान्तित्वकल्पने तु एवमतिप्रसङ्गः स्यादित्याशयः" इति तत्वमञ्जरी ।

५ "वदता बौद्धेन" इति प्र. पाठः ।

६ "–भिज्ञाया भ्रान्तित्वं न वाच्यम्" इति प्र. पाठः ।

७ "नचाऽदित्योदयादिनैव" इति प्र पाठः ।

८ "–रेवाऽदित्योदयादिदर्शना–" इति प्र. पाठः ।

९ "नचानुमादीनाम्–" इत्यादिः पण्डिताचार्यसम्मतः पाठ इति भाति । तथाहि तत्वमञ्जरी––"नचानुमेति । तदगोचरत्वात् अनुमाद्यगोचरत्वाद् धर्म्मादीनाम् । व्याप्तिदर्शनपूर्वकं ह्यनुमानम् । धर्म्मादौ साध्ये सति कस्यचित् साधनस्य व्याप्यत्वं चात्र नोपलभ्यते । तस्मात् कथमनुमानस्य धर्म्मादिगोचरत्वम्" इति । "केवलानुमानादिना धर्म्मादिसिद्धावग्निहोत्रादिर्वा चैत्यवन्दनादिर्वा धर्म्म इति संशयितो धर्म्मः स्यात् । नह्ययमेव धर्म्मो नान्य इत्येतन्निश्चेतुं अनुमानादिकं शक्नोति" इति प्राचीनटीका ।

१० "च स्वत एव सिद्धम्" इति प्र. पाठः ।

११ "–मिति सिद्धम्" इति प्र. पाठः ।

"वाचा विरूप नित्यया[१]", "नित्ययाऽनित्यया स्तौमि ब्रह्म तत् परमं पदमिति श्रुतिर्वाव नित्याऽनित्या वाव स्मृतयो याश्चान्या वाचः" इति पैङ्गिश्रुतिः[२]। "विज्ञेयं परमं ब्रह्म ज्ञापिका परमा श्रुतिः। अनादिनित्या सा तच्च विना तां न स गम्यते" इति कात्यायनश्रुतिः[३]। "सहस्रधा महिमानः सहस्रं यावद् ब्रह्म विष्ठितं तावती वाक्। कश्छन्दसां योगमा वेद धीरः को धिष्ण्यां प्रति वाचं पपाद" इति च[४]॥

"नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः। सर्गे सर्गेऽमुनैवैत उद्गीर्यन्ते तथैव च। तत्क्रमेण च[५] तैर्वर्णैस्तैः स्वरैरेव नान्यथा। अतः श्रुतित्वमेतासां श्रुता एव यतोऽखिलैः। जन्मान्तरे श्रुतास्तास्तु वासुदेवप्रसादतः। मुनीनां प्रतिभास्यन्ति भागेनैव न सर्वशः। यतस्ता हरिणा दृष्टाः श्रुता एवापरैर्जनैः। श्रुतयो दृष्टयश्चेति

---

१ "तस्मै नूनमभिद्यवे वाचा विरूप नित्यया। वृष्णे चोदस्व सुष्टुतिम्" इत्यृग्वेदे (८. ७५. ६.) विरूपदृष्टमग्नि सूक्तम्। अत एव हि प्राचीनटीका—"तस्मै पूर्वप्रकृताय अग्रणीत्वादग्निनाम्ने, अभिद्यवे अभितो द्योतमानाय, द्यामभितो वर्तमानाय वा, वृष्णे वर्षित्रे विष्णवे, नित्यया वाचा स्तुतिं चोदस्व प्रेरयेति विरुपमृषिं प्रत्युच्यते" इति। "हे विरूप, नूनमिदानीं अभितो द्योतकाय, तस्मै वृष्णे समर्थाय नित्यया वाचा (प्र)स्तुतिं चोदयस्व" इति तत्वमञ्जरी। अत्र विरूपेति ऋषिः स्वात्मानमेव सम्बोधयन्नाह। अथ तैत्तिरीयसंहितायामप्ययं मन्त्रः पठ्यते। तत्र च विश्वे देवा ऋषयः। ततश्च तैर्विरूपमृषिं प्रत्युच्यत इति वा। विरूपं प्रति यमवचनमेतदिति तु सूत्रभाष्यटीकायां पद्मनाभतीर्थाः। "सुष्टु स्तुतिं प्रेरयेति प्रार्थनं विरूपस्य ऋषेरन्तर्यामिविषयम्" इति तत्त्वदीपिकायां पण्डिताचार्याः।

२ "पैङ्गीश्रुतिः" इति प्र. पाठः प्रामादिकः।

३ "कात्यायनश्रुतिः" इति प्र. पाठः। "विज्ञेयं परमं ब्रह्म। अत्र लक्ष्मीहिरण्यगर्भादिकं अपरमत्वेन श्रुत्या विज्ञेयमित्यभिप्रेतम्। यथा तद्ब्रह्म अनन्याधीनत्वेन अनादिनित्यत्वेन परमं विज्ञेयम्, एवमितिहासादेर्ज्ञापकत्वेऽपि अनाद्यनन्तत्वेन श्रुतिः परमा ज्ञापिकेत्युच्यते। तद् ब्रह्मेत्युक्तेऽपि न नपुंसकं ब्रह्मेति दर्शयितुं स इत्युक्तम्। तां श्रुतिं विना स ब्रह्मशब्दार्थो विष्णुः न बुद्ध्यते" इति प्राचीनटीका। "यद्यपि कर्मदेवाद्यपि श्रुत्या विज्ञेम्। तथाऽपि परमं विज्ञेयं ब्रह्म। यद्यपि वेदानुकूलतर्कादिकमपि ज्ञापकं ब्रह्मणः। तथाऽपि परमा ज्ञापिका श्रुतिः" इति तत्वमञ्जरी।

४ "इत्यादि च" इति प्र. पाठः। "यस्य सहस्रं महिमानः प्रत्येकं सहस्रधा भवन्ति, तदपरिमितं ब्रह्म देशतः कालतो यावत्पर्यन्तं विशेषेण स्थितं वेदवागपि तावती, तावद्देशकालव्यापिनी विष्ठिता। छन्दसां सर्ववेदानां योगं प्रतिपदमर्थसम्बन्धं लोके कः आवेद। न कोऽपीत्यर्थः। धिषणा बुद्धिः। तत्पूर्विकां धिष्ण्यां छन्दोलक्षणां वाचं लोके कः प्रतिपपाद अर्थेषु कः सङ्केतितवान् न कोऽपीत्यर्थः" इति प्राचीनटीका। "ब्रह्मणः सहस्रं स्वातन्त्र्यसार्वज्ञ्यादिमहिमानः, एकैकशोऽपि सहस्रधा। अत्र सहस्रशब्दोऽनन्तवाची। ईदृशमहिम्नि ब्रह्मणि किं प्रमाणमित्याशङ्कायामाह—यावदिति। यावत्कालं ब्रह्म विशेषेण स्थितं वागपि कालतस्तावती विद्यते। छन्दसां वेदानां योगं ब्रह्माख्याभिधेयसम्बन्धं क आवेद? धिष्ण्यमाधारः। धिष्ण्यं चायमश्वेति धिष्ण्याः परमः। अन्यार्थतया प्रतीयमानमपि वाचं तं धिष्ण्यामुद्दिश्य कः प्रतिपपाद। क इति ब्रह्मा। कर्ताक्षेपो वा" इति तु तत्वमञ्जरी।

५ "तत्क्रमेणैव" इति प्र. पाठः।

तेनोच्यन्ते पुरातनैः । तदुत्पत्तिलयश्चैव भवेद् व्यक्तिमपेक्ष्य तु । चेतनस्य जनिर्य-द्वदुच्यते सर्वलौकिकैः । पुराणानि तदर्थानि सर्गेसर्गेऽन्यथैव तु । क्रियन्तेऽतस्त्व-नित्यानि तदर्थाः पूर्वसर्गवत् । [1]वेदानां सृष्टिवाक्यानि भवेयुर्व्यक्त्यपेक्षया । अवा-न्तराभिमानानां देवानां वा व्यपेक्षया । नानित्यत्वात् कुतस्तेषामनित्यत्वं स्थिरा-त्मनाम्" इति ब्रह्माण्डे ।

नचानित्यत्वे श्रुतिर्वेद इत्यादिविशेषशब्दो युज्यते[2]—

"वेदास्ते[3] नित्यविन्नत्वाच्छ्रुतयश्चाखिलैः श्रुतेः । आम्नायोऽनन्यथापाठादीशबुद्धि-स्थितः सदा" इति महावराहे[4] ।

नच नित्यत्वं विना वेदानां दर्शनव्यवहारो युज्यते । नच वर्णपदादीनामनित्यत्वं वक्तुं युक्तम् । सर्वज्ञत्वादीश्वरस्य, तद्बुद्धौ सर्वदा प्रतीयमानत्वात् । नच घटादिवत् संस्कारमात्रत्वं वक्तुं युक्तम् । प्रत्यभिज्ञाविरोधस्योक्तत्वात् । पुराणानामप्यन्यथाशब्दरचनमेवानित्यत्वम् । अत आकाशगुणे शब्दे व्यज्यमाना वर्णादयस्तत्क्रमात्मको वेदश्च नित्य एवेति सिद्धम् ॥ * ॥

नच केवलसिद्धेऽर्थे व्युत्पत्त्यभावादप्रामाण्यम् । सिद्धान्वित एव व्युत्पत्तिगृहीतेः । 'इयं माता', 'अयं पिता' इत्यादावङ्गुलिप्रसारणादिपूर्वकनिर्देशेनैव हि तज्जानाति । [5]कार्यान्विते व्युत्पत्तिरिति वदतः कार्यस्य कार्यान्वयाभावात् कल्पनागौरवम् । 'इयं माता', 'अयं पिता', 'सुरूपोऽसि' इत्यादौ सिद्धमात्रज्ञापनेन पर्यवसितत्वाद् वाक्यस्य; ह्यः तत्र प्रामाण्यानुभ-वाच्च । नच कुत्रचित् सिद्धज्ञापनादन्यद् वाक्यप्रयोजनं दृष्टम्[6] । ज्ञात्वैव हीष्ट[7]साधनतां प्रव-र्त्तते; निवर्त्तते च विपर्ययेण । अतः सिद्ध एव सर्ववाक्यानां प्रामाण्यं सिद्धम् ॥ * ॥

प्रसिद्धं च व्याकरणनिरुक्तादीनां सिद्धमात्रे प्रामाण्यं सर्ववादिनाम् । तदनङ्गीकारे च सर्व-शाब्दव्यवहारासिद्धिः । उक्तं च नारदीये —

"सर्वेशं सर्वकर्त्तारं नारायणमनामयम् । सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि । सर्वेषामपि वेदानामितिहासपुराणयोः । प्रमाणानां च सर्वेषां तदर्थं चान्य-दुच्यते[8]" इति ॥ * ॥

---

१ "वेदानामित्यादिना सृष्टिवाक्यानां गतेः पुनरुक्तिस्तात्पर्यात् । विषयान्तरस्याप्युक्त्यर्थं च । वेदानां मुख्या-भिमानिन्याः श्रीदेव्या अनुत्पत्तेरवान्तराभिमानानामित्युक्तम्" इति तत्वमञ्जरी ।

२ "–शब्द उपपद्यते" इति प्र. पाठः ।

३ "नित्यविन्नत्वादिति । नित्यसिद्धत्वादित्यर्थः । विद सत्तायामिति धातोः" इति प्राचीनटीका । "नित्यविन्न-त्वात् नित्यलब्धत्वात् । विद्लृ लाभ इति धातोः" इति तत्वमञ्जरी । 'आम्नायः सम्प्रदायः । तत्सम्बन्धी चाऽम्नाय एव" इति च ।

४ "महावाराहे" इति प्र. पाठः ।

५ "कार्यान्वित एव व्युत्पत्ति–" इति प्र. पाठः ।

६ "वाक्यस्य प्रयोजनम् ।" इति प्र. पाठः ।

७ "ज्ञात्वैवाभीष्ट–" इति क्वचित् ।

८ "ब्रह्मादिसर्वजगदभावे विष्णुसर्वोत्तमत्वानुपपत्तेः सर्वजगदपि विष्णुसर्वोत्तमत्वसिद्ध्यर्थं वेदादिपूच्यत इत्यर्थः" इति प्राचीनटीका ।

नच जीवेश्वराभेद एव तात्पर्यमागमस्य; तत्र प्रमाणाभावात् । नच जीवेश्वरभेदः सिद्ध इत्यनुवादकत्वं भेदवाक्यानाम्; आगमं विनेश्वरस्यैवासिद्धेः[१] । नचानुमानात् तत्सिद्धिः; विपर्ययेणाप्यनुमातुं शक्यत्वात् । विमतं सकर्तृकं कार्यत्वात् घटवदित्युक्ते, विमतं विकर्तृकम्, अस्मत्सम्मतकर्तृरहितत्वात्, आत्मवदित्यनुमानविरोधात्[२] । प्रत्यक्षानुमानसिद्धत्वे च भेदस्य तद्विरोधादेवाप्रामाण्यमभेदागमस्य । [३]तेनाभेदवाक्यस्याप्राण्याभावे च नानुवादकत्वं भेदवाक्यानाम् । नहि बलवतोऽनुवादकत्वम्; दार्ढ्यहेतुत्वात् । प्रत्यक्षादेरागमस्य प्राबल्येऽपि नोपजीव्यप्रमाणविरोधे प्रामाण्यम् । विषयाभावे स्वस्यैवाप्रामाण्यप्राप्तेः । तेनैव ह्यनुमानादिनाऽऽगमस्य विषयः सिद्ध्यति तत्पक्षेऽपि । अनुमानेन ह्यनुवादित्वपक्ष ईश्वरो बोद्धव्यः, प्रत्यक्षेण चाऽऽगमः[४] । अतस्तयोर्विरोधे प्रामाण्यं न स्यात् ।

अनुमानसिद्धेश्वराच्च भेदोऽनुभवत एव सिद्धो जीवस्य; असर्वकर्तृत्वेनानुभवात् । नचानुभवविरोध आगमस्य प्रामाण्यम्; आगमप्रामाण्यानुभवस्याप्यप्रामाण्यप्राप्तेः ।

बहुप्रमाणसंवादश्च दार्ढ्यहेतुरेव; बहूनां वचने, तस्यैव दर्शने[५] च दार्ढ्यस्यैव दृष्टेः । सर्वाविविवादस्थल एव कथञ्चिदनुवादकत्वम्[६] । नचात्र सर्वाविवादः; एकत्ववादिनामेव विवाददर्शनात् । बहुप्रमाणविरोधे चैकस्याप्रामाण्यं दृष्टं शुक्तिरजतादौ । नच दोषजन्यत्वादेव दुर्बलत्वमिति विरोधः; बहुप्रमाणविरुद्धानां दोषजन्यत्वनियमात् । दोषजन्यत्वं च बलवत्प्रमाणविरोधादेव ज्ञायते ॥ * ॥

---

१ "ईश्वरे केवलानुमानस्यैव दूषितत्वान्नापसिद्धान्तः" इति तत्वमञ्जरी ।

२ इतः परं प्र. पाठे– "अकार्यत्वमुपाधिरित्युक्ते शरीरिजन्यत्वमितरत्राप्युपाधिरित्युत्तरम्" इति वाक्यमधिकम् । यद्यपि जयतीर्थीयटीकायाम्– "विमतं सकर्तृकम्–" इत्याद्यारभ्य इदं वाक्यद्वयमपि प्रक्षिप्तमित्याहुरित्युक्तम् । तत्वमञ्जर्यामनयोर्व्याख्याऽपि नोपलभ्यते । पद्मनाभतीर्थीये तु वाक्यद्वयस्यापि विवरणमुपलभ्यते । हृषीकेशतीर्थीये त्वेकमेव वाक्यं पठ्यते । तदेवमाचार्यसमकालेषु समीपकालेषु च यत्र पाठे संशीतिर्मतभेदो वा तत्र-विप्रकृष्टतरा वयं कथन्तरां निर्णयामहे ? विदितवेद्या एव केवलं प्रमाणम् । यथोपलम्भं मूलानुपूर्वीनिदर्शनाद् वयं चरितार्थाः । अत्र तु पद्मनाभतीर्थीयम्—"नच घटादिवत् क्षित्यादेः कर्ता कार्यत्वहेतुनाऽनुमातुं शक्यते । योग्यानुपलम्भबाधितत्वात् । स कर्ता शरीरवान् लोकसम्मतकुलालादिवत् । पर्वततृणादौ शशविषाणवदनुपलम्भबाध एव । अकार्यत्वेन शरीरवत्कर्तृरहितत्वहेतुः सोपाधिश्चेत् कार्यत्वहेतुरपि शरीरिजन्यत्वेन सोपाधिक इति समं समाधानम्" इत्यादि ।

३ "तेनाभेदागमस्य प्रामाण्याभावे नानु–" इति मुद्रितः पाठः प्रामादिक एव । "तेनाभेदागमस्याप्रामाण्याभावे–" इति हि पठनीयम् ।

४ "तत्र जीवेश्वरयोर्धर्म्मिणोस्तु ग्राहकौ प्रत्यक्षागमाविति प्राप्तम् । ते तु वेदं भेदेनैव धर्मिणं ग्राहयन्तमनुवादीत्यनाहत्यानुमानेन बोद्धव्यो धर्म्मीत्यभ्युपगच्छन्ति । एवं च विषयद्वारेणाभेदागमस्यानुमानमुपजीव्यं स्यात् । श्रोत्रप्रत्यक्षेण चागमस्वरूपं बोद्धव्यम् । तस्मात् तदपि स्वरूपद्वारेणोपजीव्यमभेदागमस्य" इति तत्वमञ्जरी ।

५ "दर्शने दार्ढ्य–" इति प्र. पाठः ।

६ "अग्निर्हिमस्य भेषजमित्यादीनां तु सर्वाविप्रतिपन्नविषयत्वादनुवादकत्वमित्युच्यते" इति प्राचीनटीका ।

"अदुष्टमिन्द्रियं त्वक्षं तर्कोऽदुष्टस्तथाऽनुमा। आगमोऽदुष्टवाक्यं च स्वदृक् चानुभवः स्मृतः[1]। बलवत्प्रमाणतश्चैव ज्ञेया दोषा नचान्यथा। द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावतः। तयोः स्वभावो बलवानुपजीव्यादिकश्च सः[2]। याथार्थ्यमेव प्रामाण्यं तन्मुख्यं ज्ञानशब्दयोः। ज्ञानं च द्विविधं बाह्यं तथाऽनुभवरूपकम्। बल्येवानुभवस्तत्र निर्दोषं त्वक्षजादिकम्। अनुप्रमाणतां याति तथाऽक्षादित्रयं ततः। प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्। उपजीव्यविरोधे तु न प्रामाण्यममुष्य च। यामाहुरनुमां केचित् त्र्याद्यवयवात्मिकाम्[3]। सा व्यर्था नोपपत्त्या हि विना साऽपि प्रमाणताम्। यात्यतो युक्तिरेवैका प्रमाणमनुमात्मकम्। युक्तिः प्रतिज्ञारूपा च हेतुर्दृष्टान्तरूपिका[4]। तथोपनयरूपा च परा निगमनात्मिका। पृथक्पृथक् प्रमाणत्वं याति युक्तितयैव तु। प्रतिज्ञा हेतुगर्भैव पृथक् प्रामाण्यमेष्यति। सिद्धत्वेन प्रतिज्ञाया हेतुर्मानं पृथग् भवेत्। प्रतिज्ञावयवत्वात्तु स्वातन्त्र्येणैव मानताम्। दृष्टान्तो यात्युपनयो व्याप्तिमाश्रित्य केवलम्। व्याप्तिस्तु केवलाऽपि स्यात् प्रमाणं नियमाश्रयात्। तथा निगमनं चोपसंहारैकस्वरूपतः। प्रामाण्यं यात्यनुभवो ज्ञापयत्युपपत्तिताम्॥ *॥ [5]विरोधश्च तथाऽऽधिक्यं न्यूनताऽसङ्गतिस्तथा। उपपत्तिदोषा विज्ञेया विरोधश्च स्वतोऽन्यतः। जनकस्यात्ययो जातिः स्वस्य वाऽन्यस्य वा भवेत्। जनकं प्रमाणमुद्दिष्टं स्वस्यार्थस्य प्रकाशनात्। निग्रहा एत एव स्युः संवादानुक्तिसंयुताः[6]॥ *॥ अर्थतः प्राप्तिरेवार्थापत्तिरित्यभिधीयते। दृष्ट्वा सदृशमेवान्यं पूर्वदृष्टे तु वस्तुनि। एतत्सदृशताज्ञानमुपमानं प्रकीर्त्तितम्। अभावस्य परिज्ञानं द्विविधं समुदाहृतम्। एकं तत्रानुभवतो योग्यस्या-

---

"अविवादस्थले अग्निर्हिमस्य भेषजमित्यादौ। तत्पक्षे त्वप्रामाण्यप्राप्तं ह्यनुवादकत्वम्; तद्व्यवच्छेदाय कथञ्चिदित्याह। न तादृशमनुवादकत्वमित्यर्थः" इति तत्वमञ्जरी।

१ "जीवस्वरूपभूता दृष्टिरनुभव इत्युच्यते, येन स्वयं प्रकाशते; येन प्रत्यक्षादिप्रामाण्यमवसीयते" इति प्राचीनटीका। "स्वस्य साक्षिणो ज्ञानमनुभवरूपमित्यर्थः" इति तत्वमञ्जरी।

२ "स च स्वभाव उपजीव्यत्वं साक्षित्वं च" इति च तत्वमञ्जरी।

३ "त्रियाद्यवयवात्मिकाम्" इति प्र. पाठः। वस्तुतस्तु सप्ताक्षरोऽयं पादः क्षैप्रसंयोगव्यूहेन शिथिलाक्षरतयाऽष्टाक्षरः पठनीयः। लेखनवेलायां तु त्र्यादीत्येव। नतु त्रियादीति। तद्यथा तत्सवितुर्वरेण्यमिति सप्ताक्षरो गायत्रीपादः। तदेतच्छन्दःशास्त्रविदां विदुषां न तिरोहितम्।

४ "हेतुदृष्टान्तरूपिका" इति प्र. पाठः। हेतुः हेतुरूपा इत्यर्थः।

५ "वृक्षादिमान् पर्वतोऽग्निमानित्युक्तिराधिक्यदोषवती। पर्वतो धूमवत्त्वादित्युक्तिर्न्यूनत्वदोषवती। पर्वतोऽग्निमान्घटो धावतीत्युक्तिरसङ्गतिदोषवती। वन्ध्या पुत्रवतीति प्रतिज्ञा स्वविरुद्धा। वह्निरनुष्ण इति प्रतिज्ञा मानान्तरविरुद्धेति द्विविधो विरोधः" इति पद्मनाभतीर्थाः।

६ "प्रतिपक्षदूषणासमर्थस्य वादिनः प्रतिवादिनो वा प्रतिपक्षाभ्युपगमः संवादः। तूष्णीम्भावोऽनुक्तिः" इति च प्राचीनटीका।

नुपलब्धितः । द्वितीयमपि विज्ञेयं सुखाद्ये च घटादिके । एकं प्रत्यक्षरूपं स्याद् द्वितीयमनुमात्मकम् । क्वचिद् घटाद्यभावोऽपि प्रत्यक्षेणावगम्यते । झटित्येव परिज्ञानान्न लिङ्गोद्भवता मता । अर्थापत्तिश्चोपमा च ह्यनुमाभेद एव तु ॥ * ॥ आगमो द्विविधो ज्ञेयो नित्योऽनित्यस्तथैव च । प्रत्यक्षं त्रिविधं ज्ञेयमैश्वरं यौगिकं तथा । अयौगिकं चेति तथा सर्वमक्षात्मकं मतम् । अक्षाणि च स्वरूपाणि नित्यज्ञानात्मकानि च । विष्णोः श्रियस्तथैवोक्तान्यन्येषां द्विविधानि तु । स्वरूपाणि च भिन्नानि भिन्नानि त्रिविधानि च[1] । दैवासुराणि [2]मध्यानीत्येतत् प्रत्यक्षमीरितम् । विषयान् प्रति स्थितं ह्यक्षं प्रत्यक्षमिति कीर्त्तितम् । [3]अक्षयं पुरुषस्याक्षं स्वरूपे मुख्यमेव तत् । उपचारस्तदन्यत्र सृष्टावुपचयो यतः ॥ * ॥ उपपत्तिस्वरूपत्वादनुमा सम्भवादिकम्[4] । प्रत्यक्षागमसामर्थ्यादनुमानं प्रमाणताम् । याति नैवान्यथा तस्य नियतत्वं क्वचिद् भवेत्" इत्यादि ब्रह्मतर्के ॥ * ॥ * ॥

अत्र चोपजीव्यत्वेन प्रमाणप्राबल्याद् भेद एव तात्पर्यं युक्तम् । कथं चानुवादकत्वं भेदस्य प्रमाणेनासिद्धौ? सिद्धौ च कथमभेदवाक्यस्यावकाशः? नचाप्रमाणसिद्धेनानुवादित्वं[5] प्रमाणस्य भवति । दुर्बलत्वे च भेदप्रमाणस्याभासत्वान्न भेदवाक्यानामनुवादित्वम्[6] । अतश्च भेदवाक्यानामेव प्राबल्यम् ।

सर्वविरुद्ध[7]वचनानामेव प्राबल्याङ्गीकारे "इदं वा अग्रे नैव किञ्चनाऽसीत् । असतः सदजायत" इत्यादीनामेवाविचारेण प्रतीयमानस्यार्थस्य सर्वप्रमाणविरुद्धत्वात् तत्र सर्वागमानां महातात्पर्यं प्रसज्यते । न च तत्र युक्तिविरोध इति वाच्यम् । तस्मिन् पक्षे [8]युक्तेरपि विरुद्धत्वे नानुवादित्वमिति गुण एव स्यात् । युक्तिसिद्धत्वे ह्यनुवादित्वं स्यात् । अतः प्रमाणसिद्धत्वे तदपलापायुक्तेः, अप्रमाणसिद्धत्वे[9] प्रमाणस्यानुवादित्वाभावाच्च न भेदवाक्यानां दौर्बल्यम् ।

---

१ "स्वरूपेन्द्रियाणां सिद्धत्वात् त्रैविध्याकथनम् । नतु त्रैविध्याभावात् । न हि स्वरूपाभिन्नं स्वरूपादन्यथा भवति । न हि श्वेतपटस्य तन्तवो रक्ता भवितुमर्हन्ति" इति तत्वमञ्जरी । एतेन भिन्नानि च त्रिविधानीत्यन्वयो दर्शितः ।

२ "मनुष्याक्षाणि मध्यानीत्युच्यन्ते" इति प्राचीनटीका ।

३ "न क्षीयत इत्यक्षमिति निर्वक्तव्यम्" इति प्राचीनम् । "अक्षयत्वादक्षमित्यर्थः । क्षि क्षय इति धातोः । तृतीयोऽतिशय इति न्यायात्" इति तत्वमञ्जरी । तथाच न क्षयतीत्यक्षमित्युक्तं भवति ।

४ "आदिशब्दादभिनयः । अभ्यात्मं पाणिचलनाद्यभिनयेनाऽज्ञानाद्यभिप्रायः सङ्केतबलादनुमीयते हि" इति च तत्वमञ्जरी ।

५ "–नुवादकत्वम्" इति प्र. पाठः ।

६ "अधिगतार्थाधिगतिरनुवाद इति ह्युच्यते । आभासेन तु सम्यगधिगतेरेवासम्भवः । तेनापि ह्यधिगतिमात्रं स्यादिति चेत्, तस्यान्यथाधिगतित्वात् तद्विषयस्य वाक्यस्याप्ययथार्थत्वादेवाप्रामाण्यं नानुवादित्वात् । एवंचानुवादित्वादप्रामाण्यं स्यादिति दुरुक्तं स्यादित्यर्थः" इति तत्वमञ्जरी ।

७ "सर्वप्रमाणविरुद्ध–" इति प्र. पाठः । ८ "युक्तिविरुद्धत्वेनाननु–" इति प्र. पाठः ।

९ "–सिद्धत्वे च भेदप्रमाणस्या–" इति प्र. पाठः ।

नच प्रमाणबहुत्वे दौर्बल्यम् । दार्ढ्यमेव हि बहुवाक्यसंवादे दृष्टम् । [1]तथा सत्यभ्यासादेरप्यप्रामाण्यहेतुत्वं स्यात् । अभ्यासस्य च तात्पर्यलिङ्गत्वं सर्वेषां सिद्धम् । तदनङ्गीकारे [2]तत्पक्षेऽपि "तत्त्वमसि" इति नवकृत्वोऽभ्यासादनुवादकत्वेनाप्रामाण्यं स्यात् । प्रथमवाक्येनैव यस्य सिद्धं तदर्थमपरमित्युक्ते प्रत्यक्षादिना भेदो येन[3] न निश्चितस्तदर्थं वाक्यमित्युत्तरम् । तस्माद् बहुप्रमाणसंवादित्वं[4] प्राबल्यमेव । अतः सर्वप्रमाणविरुद्धत्वान्नाभेदे तात्पर्यं वाक्यस्य । किन्तु विष्णोः सर्वोत्तमत्व एव महातात्पर्यमागमानाम्[5] ॥ * ॥ * ॥

तथाचोक्तं भगवता—

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः । यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् । स सर्वविद् भजति मां सर्वभावेन भारत । इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ । एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत" इति । "सर्वोत्कर्षे देवदेवस्य विष्णोर्म्महत् तात्पर्यं[6] नैव चान्यत्र सत्यम् । अवान्तरं तत्परत्वं तदन्यत्[7] सर्वागमानां पुरुषार्थस्ततोऽतः" इति पैङ्गिश्रुतिः । "मुख्यं च सर्ववेदानां तात्पर्यं श्रीपतेः परम् । उत्कर्षे तु तदन्यत्र तात्पर्यं स्यादवान्तरम्" इति महावराहे[8] ॥ * ॥

युक्तं च विष्णोः सर्वोत्कर्षे[9] महातात्पर्यं सर्वागमानाम् । मोक्षो हि सर्वपुरुषार्थोत्तमः—

"धर्म्मार्थकामाः सर्वेऽपि न नित्या मोक्ष एव हि । नित्यस्तस्मात् तदर्थाय यतेत मतिमान् नरः" इति भाल्लविश्रुतिः[10] । "अनित्यत्वात् सदुःखत्वान्न धर्म्माद्याः परं सुखम् । मोक्ष एव परानन्दः संसारे परिवर्त्तताम्" इति च भारते[11] ।

---

१ "तथा सति प्रमाणबहुत्वे दौर्बल्ये सति, अभ्यासादेरित्यादिशब्दात् धारावाहिकप्रत्यक्षस्य" इति तत्वमञ्जरी ।

२ "तत्पक्षेऽपि नवकृत्वस्तत्त्वमसीत्यभ्यासा-" इति प्र. पाठः । तत्त्वमसीत्यादि-' इति क्वचित् ।

३ "येनानिश्चितस्तदर्थमपरं वाक्य-" इति प्र. पाठः ।

४ "संवादित्वे" इति प्र. पाठः ।

५ "महातात्पर्यं सर्वागमानाम्" इति प्र. पाठः ।

६ "महातात्पर्यं" इति प्र. पाठः ।

७ तदन्यत् तदन्यत्र । तथाहि तत्वमञ्जरी—"सर्वागमानां विष्णोरन्यत्र तात्पर्यमवान्तरम्, न महदित्यर्थः" इति । "सर्वासिद्धौ सर्वोत्कर्षासिद्धेः सर्वाख्येषु लक्ष्मीविरिञ्चादिषु आगमानामवान्तरतात्पर्यं महातात्पर्याङ्गभूतमस्तीत्यर्थः" इति पद्मनाभतीर्थाः ।

८ "महावाराहे" इति प्र. पाठः ।

९ "सर्वोत्तमत्व एव महा-" इति प्र. पाठः

१० "भाल्लवेयश्रुतिः" इति प्र. पाठः ।

११ "इति भारते" इति प्र. पाठः ।

मोक्षश्च विष्णुप्रसादं विना[१] न लभ्यते—

"यस्य प्रसादात् परमार्त्तिरूपादस्मात् संसारान्मुच्यते नापरेण। नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादमुष्मात्" इति च पैङ्गिश्रुतिः[२]। "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं[३] स्वाम्" इति कठश्रुतिः। "तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्। भवामि नचिरात् पार्थ मय्यावेशितचेतसाम्" इति च भगवद्वचनम्[४]। "उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः। बन्धमोक्षौ च पुरुषाद् यस्मात् स हरिरेकराट्" इति च स्कान्दे[५]। "अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च सः। आनन्ददश्च मुक्तानां स एवैको जनार्द्दनः" इति च। "बन्धको भवपाशेन भवपाशाच्च मोचकः। कैवल्यदः परं ब्रह्म विष्णुरेव न संशयः" इति च।

प्रीतिश्च गुणोत्कर्षज्ञानादेव विशेषतो दृष्टा; नाभेदज्ञानात्। अभेदज्ञानादप्रीतिरेवोत्तमानां भवति। घातयन्ति हि राजानो राजाऽहमिति वदन्तम्। ददति च सर्वमभिप्रेतं गुणोत्कर्षं वदतः—

"न तद्दृशी प्रीतिरीड्यस्य विष्णोर्ग्गुणोत्कर्षज्ञातरि यादृशी स्यात्। तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्पराः सर्व एव" इति सौपर्ण्णश्रुतिः। "यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्। स सर्वविद् भजति मां सर्वभावेन भारत" इति गुणोत्कर्षज्ञानादेव परमा प्रीतिर्भगवता स्वयमेवाभिहिता।

अतो विष्णोर्ग्गुणोत्कर्ष एव सर्वश्रुतिस्मृतीनां महातात्पर्यम्॥ * ॥

नचाभेदे तात्पर्यमित्यत्र किञ्चिन्मानम्। नच विशेषणविशेष्यतया भेदसिद्धिः, विशेषणविशेष्यभावश्च भेदापेक्षः; धर्म्मिप्रतियोग्यपेक्षया भेदसिद्धिः, भेदापेक्षं च[६] धर्म्मिप्रतियोगित्वमित्यन्योन्याश्रयतया भेदस्यायुक्तिः, पदार्थस्वरूपत्वाद् भेदस्य। नच धर्म्मिप्रतियोग्यपेक्षया भेदस्यास्वस्वरूपत्वम्; ऐक्यवत् स्वरूपस्यैव तथात्वात्। स्वरूपसिद्धावपि तदसिद्धिश्च जीवेश्वरैक्यं वदतः सिद्धैव[७]।

भेदस्तु स्वरूपदर्शन एव सिद्धः। प्रायः सर्वतो विलक्षणं हि पदार्थस्वरूपं दृश्यते। अस्य भेद इति तु पदार्थस्य स्वरूपमितिवत्। यदि न स्वरूपं भेदः, तदा पदार्थे दृष्टे प्रायः सर्वतो

---

१ "–प्रसादेन विना" इति प्र. पाठः। २ "इति नारायणश्रुतिः" इति प्र. पाठः।
३ "तनूम्" इति प्र. पाठः। ४ "इति भगवद्वचनम्" इति प्र. पाठः।
५ "इति स्कान्दे" इति प्र. पाठः।
६ प्राचीनकोशे "भेदापेक्षश्च (?)" इति पठ्यते। स्खलितं स्यात्।
७ "यथा जीवस्वरूपसिद्धावपि जीवब्रह्मणोरैक्यस्यासिद्धिरागमं विना जीवेश्वरैक्यावादिनाऽभ्युपगता; एवं जीवस्वरूपसिद्धावपि ईशाद्भेदस्य जीवस्वरूपस्यासिद्धिरागमं विना युज्यते। नहि स्वरूपं प्रतीयमानं कार्त्स्न्येन प्रतीयत इति नियमोऽस्ति" इति प्राचीनटीका।

वैलक्षण्यं तस्य न ज्ञायेत। अज्ञाते च वैलक्षण्य आत्मनि घट इत्यपि संशयः स्यात्। नहि तथा कश्चित्[1] संशयं करोति। ज्ञात्वैव प्रायशः[2] सर्ववैलक्षण्यं कस्मिंश्चिदेव सदृशे संशयं[3] करोति। नह्यात्मन्यहं देवदत्तो नवेति कस्यचित् संशयो भवति। सामान्यतः सर्ववैलक्षण्ये ज्ञात एव घटत्वादिज्ञानम्। अतो नान्योन्याश्रयता।

नच युगपज्ज्ञानानुत्पत्तिरिति दोषः[4], यथा युगपदेव दीपसहस्रदर्शने ते सामन्यतः[5] सर्वे ज्ञायन्त एव, तथा स्यात्। एकस्मिन्नेव वस्तुनि विशेषस्तैरप्यङ्गीकृत एव। नेति नेतीत्यत्र सर्वपदार्थवैलक्षण्याङ्गीकारात्[6]। विशेषानङ्गीकारे च पुनरुक्तेः। नच घटाद् वैलक्षण्यमेव पटाद् वैलक्षण्यम्; अनुभवविरोधात्। तस्माद् भेददर्शनं युक्तमेव ॥ * ॥

यच्च प्रमाणदृष्टानामपि पदार्थानां मिथ्यात्वकल्पनम, तच्च प्रमाणविरुद्धत्वादेव प्रकाशतस्करत्वम्। नहि प्रमाणदृष्टस्य तर्कबाध्यत्वम्; प्रत्यक्षादिविरुद्धस्य तर्काभासत्वात्[7]। शुक्त्यादे[8]रजतादित्वप्रतीतेरपि बलवत्प्रत्यक्षविरुद्धत्वादेव भ्रमत्वम्, न तर्कमात्रात्। तर्कमात्रतः प्रत्यक्षबाधने भूतचतुष्टयस्य[9] पृथिवीत्वादृष्टेः पृथिव्या अपि पृथिवीत्वं न स्यात्। अतो न तर्कत एव[10] दृष्टस्य भ्रान्तित्वं कल्प्यम्। अतः सर्वभेदनिरासतर्कस्य[11] सर्वश्रुतिस्मृतिप्रत्यक्षानुमानविरुद्धत्वान्नितरामाभासत्वमेव[12] ॥ * ॥

नच परमार्थतो भेदाभावः, व्यावहारिकः सोऽस्तीति वाच्यम्; सदसद्वैलक्षण्ये प्रमाणाभावात्। 'असतः ख्यात्ययोगात्' इति [13]वदतोऽसतः ख्यातिरभून्न वा? यदि नाभूत्, न तत्ख्यातिनिराकरणम्। यद्यभूत्, तथाऽपि[14]। न शुक्ते रजतत्वं सदसद्विलक्षणम्; असदेव[15] प्रत्यभादित्यनुभवात्। नच प्रतीतत्वादसत्त्वाभावः; असतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरित्यन्यथाप्रतीतेरेव भ्रान्तित्वात्। नचासतो भ्रान्तावपि प्रतीतिर्नास्तीति वाच्यम्; अनिर्वचनीयपरमा-

---

१ "नहि कश्चित् तथा" इति प्र. पाठः। २ "प्रायः" इति प्र. पाठः।

३ "यत् प्रतीयते तत् सर्वात्मना प्रतीयत इति नियमाभावादेव न साकल्येन प्रतीयते" इति पद्मनाभतीर्थाः।

४ "–नानुत्पत्तिर्दोषः" इति प्र. पाठः। ५ "–दर्शने सामान्यतः" इति प्र. पाठः।

६ "सर्ववैलक्षण्याङ्गीकारात्" इति प्र. पाठः। ७ "–विरुद्धानां तर्काभासत्वनियमात्" इति प्र. पाठः।

८ "रजतत्वादिप्रतीते–" इति प्र पाठः। ९ "–चतुष्टयस्यादेः पृथिवीत्वा–" इति प्र. पाठः।

१० "तर्कमात्रत एव" इति प्र. पाठः।

११ "-निरासकतर्कस्य" इति प्र. पाठः। क्वचित् कोशेष्वपि तथा।

१२ "नितरामाभासत्वम्।" इत्येवकारविरहितः प्र. पाठः।

१३ "वदतः ख्यातिरभू–" इति प्र. पाठः।

१४ इतः परं प्र. पाठे-"नचासतो वैलक्षण्यं तत्प्रतीतिं विना ज्ञायते" इत्येकं वाक्यमधिकम्। क्वचित् कोशेषु च। "सदसद्विलक्षणत्वं साधयताऽसतो वैलक्षण्यं तस्य प्रतीतिं विना न ज्ञायेत। न नहि गजमजानताऽजस्य तद्वैलक्षण्यं ज्ञायते" इति तत्वमञ्जरी चात्र संवदते।

१५ "असदेव रजतं प्रत्यभा–" इति प्र. पाठः।

र्थत्वस्यासत एव दृष्ट्यङ्गीकारात् । नच तदप्यनिर्वाच्यम्; अनवस्थितेः । प्रथमानिर्वचनीयत्वासिद्ध्या सर्वासिद्धिरिति[१] मूलक्षतिः ।

अनिर्वचनीयत्वे च रजतस्य 'अनिर्वचनीयमिदं रजतम्' इति बाधकज्ञानमुत्पद्येत । मिथ्याशब्दस्त्वभाववाची । नच सदसद्विलक्षणं[२] नामास्तीत्यत्र किञ्चिन्मानम् । अनुभवविरोधश्च तत्पक्षे । सदसतोर्द्वयोरेव सर्वैरनुभूयमानत्वात् । अतोऽनिर्वचनीयाभावात्, असतः प्रतीत्यनङ्गीकाराच्च[३], प्रतीयमानत्वाच्च भेदस्य सत्वप्राप्तेर्नाद्वितीयत्वं युज्यते ।

कथं च श्रुतिसिद्धो जीवपरभेदो[४] निराक्रियते? मिथ्यावादित्वे च श्रुतेः कथमैक्यस्य सत्यत्वम्? कथं चैवंवादिनां वेदवादित्वम्? वेदोक्तस्य मिथ्यात्वाङ्गीकारादेव ह्यवेदवादित्वं बौद्धादीनामपि । अतो विष्णोः सर्वोत्तमत्व एव महातात्पर्यं सर्वागमानाम् ॥ * ॥

कथं च जीवपरमात्मैक्ये सर्वश्रुतीनां तात्पर्यं युज्यते? सर्वप्रमाणविरुद्धत्वात् । तथाह्यनुभवविरोधः—नह्यहं सर्वज्ञः सर्वेश्वरो निर्दुःखो निर्दोष इति वा कस्यचिदनुभवः । अस्ति च तद्विपर्ययेणानुभवः । नच मिथ्यानुभवोऽयम्; तद्विपरीतप्रमाणाभावात् ।
नचाभेदे कश्चिदागमः । सन्ति च भेदे सर्वागमाः । तथाहि "अतत् त्वमसि" इति नवकृत्व उपदेशः[५] सदृष्टान्तकः । नचायमभेदोपदेशः—

> "स यथा शकुनिः सूत्रेण प्रबद्धः[६] . . . . सन्मूलाः सोम्येमाः प्रजाः[७] सदायतनाः सत्प्रतिष्ठाः[८] ॥ १ ॥ . . . . ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव सोम्येमाः प्रजाः[९] सति सम्पद्य न विदुः सति सम्पत्स्यामह इति । त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद् भवन्ति तत्तदा भवन्ति[१०] . . . . ॥ २ ॥
> यथा सोम्येमा नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते पश्चात् प्रतीच्यस्ताः समुद्रात्

---

१ "प्रथमानिर्वचनीयासिद्ध्या सर्वानिर्वचनीयासिद्धिरिति" इति प्र. पाठः । "तथाच यदनिर्वचनीयं सर्वनिर्वाहकतया प्रथमं तस्यैवाप्रामाणिकत्वादसिद्ध्या सर्वानिर्वचनीयासिद्धिरिति मूलक्षतिः" इति तत्वमञ्जरी चामुमेव पाठं कटाक्षयतीव ।

२ "सदसद्वैलक्षण्यम्" इति प्र. पाठः ।

३ "–नङ्गीकारात् प्रतीय–" इति प्र. पाठः ।

४ "जीवपरमात्मभेदो–" इति प्र. पाठः ।

५ "नवकृत्वोपदेशः" इति मुद्रितः प्र. पाठः प्रामादिकः ।

६ प्र. पाठे "प्रबद्धो दिशन्दिशं पतित्वाऽन्यत्राऽन्यतनमलब्ध्वा बन्धनमेवोपाश्रयते" इतीयती श्रुतिः पठ्यते ।

७ "सोम्येमाः सर्वाः प्रजाः" इति प्र. पाठः ।

८ "सत्प्रतिष्ठाः ॥ १ ॥ यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसानां समवहारमेकतां गमयन्ति ते यथा तत्र" इति समग्रा श्रुतिः प्र. पाठे ।

९ "–त्येवमेव खलु सोम्येमाः सर्वाः प्रजाः" इति प्र. पाठः ।

१० "भवन्ति ॥ २ ॥ इमाः सोम्य नद्यः" इति प्र. पाठः । यद्यपि छान्दोग्ये श्रुतिपाठोऽपि तथैव । तथाऽपि बहुशाखाविदा भगवत्पादेन शाखान्तरगतः पाठोऽत्र समुद्धृतो भवेत्, सर्वत्राप्यायमेव न्यायोऽनुगमयितव्य इति

समुद्रमेवापियन्ति स समुद्र एव भवति ता यथा तत्र [1]न विवेकं लभन्त इयमह-मस्मीयमहमस्मीत्येवमेव[2] सोम्येमाः प्रजाः सत अगम्य न विदुः सत आगच्छामह इति । त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद् भवन्ति तत्तदा भवन्ति[3] ....॥ ३ ॥ ..... स एष जीवेनाऽऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठत्यस्य यदैकां शाखां जीवो जहा-त्यथ सा शुष्यति .....॥ ४ ॥ न्यग्रोधफलमत आहरेतीदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इत्यासा-मङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति[4] यं वै सोम्यैतमणिमानं न निभालयसेऽस्य सोम्यैषोऽणिम्न एवं[5] महान्यग्रोधस्तिष्ठति .....॥ ५ ॥ लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति तद्ध तथा चकार तं होवाच यद् दोषा लवणमेतदुदकेऽवधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद यथा विलिनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमित्यन्त्यादाचामेति कथमिति लवणमित्यभिप्रास्यैनदथ[6] मोपसीदथा इति तद्ध तथा चकार [7]तच्छश्वत् संवर्त्तते तं होवाचात्र वाव[8] सोम्यैतमणिमानं न निभालयसेऽत्रैव किलेति .....॥ ६ ॥ यथा सोम्य पुरुषं गन्धारेभ्योऽभिन-द्धाक्षमानीय तं ततोऽतिजने विसृजेत्[9] ......॥ ७॥ ....... अथ यदाऽस्य वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावन्न जानाति[10] ......॥ ८ ॥ पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत्

---

बोधनाय । शाखान्तरोपसङ्ग्रहाय श्रुतिपाठव्यत्यसनं सूत्रभाष्यादिषु च स्फुटम् । तत्वदीपिकाकृच्चैवमेव समाधान-माह । तथाहि प्रथमस्य तृतीये पञ्चमाधिकरणे तत्वदीपिका—"सर्वत्र च सर्वेषां समानजातीयानां श्रुत्यन्तराणां सहोपलक्षणार्थम्–'अस्मिन् ब्रह्मपुरे' इत्युदाहर्तव्येऽपि 'एतस्मिन् ब्रह्मपुरे' इत्युदाहृतम्" इति । एवमुत्तरत्रा-प्यूह्यम्–यत्र श्रुतिप्रतीके पाठभेद उपलभ्यते ।

१ "तत्र न विदुरियमहमस्मी–" इति प्र. पाठः । छन्दोगपाठोऽपि तथा ।

२ "–त्येवमेव खलु सोम्येमाः सर्वाः प्रजाः" इति प्र. पाठः ।

३ "यद्यद् भवन्ति तत्तदा भवन्ति, यथायथाऽज्ञानिनो भवन्ति तत्तदानुकूल्येन अनर्थभाजो भवन्ति" इति पण्डिताचार्यव्याख्यानम् ।

४ "इति तं होवाच यं वै" इति प्र. पाठः ।

५ "महान् न्यग्रोध–" इति प्र. पाठः ।

६ "–प्रास्यैतदथ" इति प्र. पाठः ।

७ "यदुदकमिश्रीभूतलवणमुदकाद् भिन्नं तत् जीवादीशस्य भेदे दृष्टान्तत्वेन शश्वत् सर्वदा संवर्त्तते इति श्रुतिः प्रशंसति" इति प्राचीनटीका ।

८ "वाव किल सत् सोम्य न निभालयसे–" प्र. पाठः ।

९ "स यथा तस्याभिनहनं प्रमुच्य एतां दिशं गन्धारा एतां दिशं व्रजेति यद्गन्धारपुरुषोदाहरणं तत्रोत्तरदि-ग्गतगन्धारनिर्देशस्तूत्तरदिग्गतश्वेतद्वीपाख्यस्थानगतभगवत्सूचनार्थः" इति च ।

१० यद्यप्यत्र मूलकोशे "तावज्जानाति" इति पठ्यते । स्खलितं तु स्यात् ।

स्तेयमकार्षीत् परशुमस्मै तपतेति स यदि तस्य कर्त्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनाऽत्मानमन्तर्द्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यतेऽथ यदि तस्याकर्त्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनाऽत्मानमन्तर्द्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यत एवमेव खलु सोम्याऽचार्यवान् पुरुषो वेद ॥ ९ ॥" इति स्थाननवकेऽपि भेद एव दृष्टन्ताभिधानात् ।

नहि शकुनिसूत्रयोर्नानावृक्षरसानां नदीसमुद्रयोर्जीववृक्षयोरणिमधानयोर्लवणोदकयोर्गन्धारपुरुषयोरज्ञप्राणादिनियामकयोः स्तेनापहार्ययोश्चैक्यम् ।

"सति सम्पद्य न विदुः सति सम्पत्स्यामह इति त इह व्याघ्रो वा सिंहो वा[१]", "सत आगम्य न विदुः सत आगच्छामह इति त इह व्याघ्रो वा सिंहो वा" इति भेदापरिज्ञानेनानर्थवचनाच्च ।

नहि गृहादागतस्य गृहे प्रविष्टस्य च तदैक्यम् । "ताः समुद्रात् समुद्रमेवापियन्ति स समुद्र एव भवति" इत्यत्रापि भेद एवोच्यते । अन्यथा 'ताः समुद्र एव भवन्ति[२]' इति व्यपदेशः स्यात् । अतो नद्यः समुद्रादागच्छन्ति, तं प्रविशन्ति च, समुद्रस्तु स एव, नैतासां समुद्रत्वं भवतीत्यर्थः । नहि भिन्नानां नदीजलपरमाणूनां समुद्राणुभिरैक्यं युज्यते । तथा सति महाजनसमितौ प्रविष्टानां द्वित्राणां तदैक्यं स्यात् । नच तद् युज्यते, भेदानुभवात्[३] ।
"स्वं ह्यपीतो भवति" इत्यत्रापि स्व इति परमात्मनोऽभिधानम् । "[४]स्वात्मना चोत्तरयोः" इति सूत्रात् ।

"स्वातन्त्र्यत् स्व इति प्रोक्त आत्माऽयं चाऽततत्वतः । ब्रह्मायं गुणपूर्णत्वाद् भगवान् विष्णुरव्ययः" इति हि परमोपनिषदि[५] ।

अपीत इत्यपि प्रवेशमात्रम् । स्वमिति द्वितीयानिर्देशात् । एकीभावविवक्षायां स्वेनेति निर्देशः स्यात् ।

"स्वं कुलायं यथाऽपीतः पक्षी स्यादेवमीश्वरम् । अप्येति जीवः प्रस्वापे मुक्तौ चान्योऽपि सन् सदा" इति च ।

---

१ "सिंहो वेति" इति प्र. पाठः । २ "भवति" इति प्र. पाठः ।

३ "भेदेनानुभवात्" इति प्र. पाठः ।

४ "स्वात्मना चोत्तरयोरित्यत्र जीवस्योत्क्रान्त्यादयः परमात्मना सहैवेति ह्यभिप्रायः । नहि जीवस्योत्क्रान्त्यादय स्वेन सहेति वक्तव्यम्" इति तत्वमञ्जर्यां पण्डिताचार्याः ।

५ "इति परमोपनिषदि" इति प्र. पाठः ।

"[१]एवमेव सोम्येदं मनो दिशन्दिशं पतित्वाऽन्यत्राऽयतनमलब्ध्वा प्राणमेवोपश्रयते[२]" इत्यत्रापि मन इति जीवः, प्राण इति परमात्मा । "यत्रायं पुरुषः स्वपिति नाम" इति तयोरेव प्रस्तुतत्वात् ।

"मननान्मन उद्दिष्टः पुद्गलो निरयं गिरन् । कर्म्मानुशयनाच्चैव संसार्यनुशयी स्मृतः" इति च । "प्राणः प्रणयनादेप साधुत्वात् सन् हरिः स्मृतः" इति च ।

"सन्मूलाः सोम्येमाः प्रजाः[३] सत्प्रतिष्ठाः" इत्यत्रापि भेद एव प्रतीयते ।

"स्रष्टृत्वादाश्रयत्वाच्च मुक्तानां च प्रतिष्ठिति । स्थापनाच्च विभुर्विष्णुरन्यः संसारिणो मतः" इति च ।

"अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति, "स एष जीवेनाऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठत्ति" इत्यत्रापि जीवशब्देन परमात्माऽभिहितः । "जीव इति भगवतोऽनिरुद्धस्याऽख्या" इति श्रुतेः ।

"विष्णुर्ज्जीव इति प्रोक्तः सततं प्राणधारणात् । स प्रविश्य शरीरं च स्थावरं जङ्गमं तथा । महाभूतानि च विभुस्त्रिवृत्करणपूर्वकम्[४] । संसारिणं भ्रामयति सदैवान्यत्वलक्षणम् । तेनायं मोदते नित्यं वृक्षावस्थां गतोऽपि सन्" इति च ।

"तत् तेज ऐक्षत", "ता आप ऐक्षन्त", "इमास्तिस्रो देवताः" इति पूर्वमेव चेतनत्वसिद्धेः "अनेन जीवेनाऽत्मना" इति संसारिणः पुनः प्रवेशो न युक्तः । अतस्तत्र जीवशब्देन पर एवाभिहितः[५] । "जीवेनाऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानः" इत्यत्रापि[६] जीवशब्दोदितः पर एव । पेपीयमानो मोदमानस्तु संसारी । नहि चेतनादन्यस्य मोदभोगादिकं युज्यते ।

"सुखस्य चाप्यायतनं शरीरं दुःखस्य चाप्यायतनं शरीरम् । अचेतनं प्राकृतमेतदाहुर्भोक्ता तयोश्चेतनकः शरीरी" इति च भारते ।

"जीवापेतं वाव किलेदं म्रियते[७] न जीवो म्रियते" इत्यत्रापि जीवशब्दः परे । नहि संसारिणो मुख्यतः प्राणधारकत्वम्[८] ।

"ब्रह्मणा त्यक्तदेहस्तु मृत इत्युच्यते नरः" इति च ।

---

१ "एवमेव खलु सोम्यैतन्मनो-" इति प्र. पाठः ।

२ "-वोपाश्रयते" इति प्र. पाठः ।

३ "सोम्येमाः सर्वाः प्रजाः" इति प्र. पाठः ।

४ "त्रिवृत्करणं नाम तेजोबन्नानां मिश्रीकरणमित्यवगन्तव्यम्" इति प्राचीनटीका ।

५ परमात्मैवाभिहितः" इति प्र. पाठः ।

६ "मोदमानस्तिष्ठतीत्यत्रापि" इति प्र. पाठः ।

७ "इदं म्रियते इदं जगत् प्राणांस्त्यजति । मृङ् प्राणत्याग इति धातुः । जीव प्राणधारण इति च" इति तत्वमञ्जरी ।

८ प्राणधारकत्वं युज्यते । ब्रह्मणा–" इति प्र. पाठः ।

"यं वै सोम्यैतमणिमानं न निभालयसेऽस्य सोम्यैषोऽणिम्न एवं 'महान्यग्रोधस्तिष्ठति" इत्यत्रापि अणिमशब्देन पर एवाभिहितः। "[2]स य एषोऽणिमैतदात्म्यमिदं सर्वं तत् सत्यं स आत्माऽतत् त्वमसि श्वेतकेतो" इत्युक्तत्वात्[3]। धानास्तु तु "अण्व्य इवेमा धानाः" इति स्त्रीलीङ्गप्रयोगादिवशब्दाच्च[4] नाणिमत्वम्। न च ता न निभालयते[5]। ऐतदात्म्यमित्येतदीयम्। "स आत्मा" इत्यात्मशब्दश्च[6] पर एव। "द्युभ्वाद्यायतनं स्वशब्दात्", "नाऽनुमानमतच्छब्दात्। प्राणभृच्च" इत्यत्र "तमेवैकं जानथ आत्मानम्" इति स्वशब्दपर्यायात्मशब्दान्न प्रकृतिजीवावभिधीयेते, किन्तु पर एवेति हि भगवता[7] व्यासेनाभिहितम्। अत आत्मशब्दस्तस्मिन्नेव मुख्यः।

"आततत्वाच्च मातृत्वादात्मेति परमो हरिः। आत्माभासास्तदन्ये तु[8] नह्येतेषां तथा गुणाः" इति च [9]परमोपनिषदि।

"तेजः परस्यां देवतायां तावन्न जानाति" इत्यत्र च यदाऽस्य प्राणादीन् परो ग्रसति तदा न जानाति, यदा ददाति तदा जानातीति तद्वशत्वमेवोक्तम्—

"[10]यदा प्राणान् ददतीशस्तदा चेतनकोऽ[11]खिलम्। जानाति ग्रस्तकरणस्तेन वेत्ति न किञ्चन" इति च।

---

१ "महान् न्यग्रोध-" इति प्र. पाठः। "अस्याणिम्नो नियमनादेवं महान्यग्रोधस्तिष्ठति" इति तत्वमञ्जरी। "तेनतेन दृष्टान्तेन स्पष्टीकृतनियन्तृत्वादिविशेषः स एषोणिऽमा सूक्ष्मरूपः परमात्माऽयम्। ऐतदात्म्यमिदं जगत्। एतदीयमित्यर्थः। तत् सत्यम्। तस्मादेतदीयत्वात् सत्यं न मिथ्या। अस्य सत्यसृष्टित्वात्। स आत्मा स्वामी। हे श्वेतकेतो त्वमतदसि। ततः स्वामिनोऽन्यज्जीवाख्यं वस्त्वसि। "अत्र वाव (किल) सोम्यैतमणिमानं न निभालयसेऽत्रैव किलेति"। अयं भावः- यथोदके दोषा निहितलवणं प्रातश्चक्षुषा न निभालयसे, तथाऽपि युक्त्याऽस्तीति जानासि च, एवमेवात्राऽऽत्मन्येतमणिमानं न निभालयसे हि सोम्य। तथाऽप्यत्रैव नियन्तृत्वेनास्ति किलायम्। किलशब्दः श्रुत्याचार्योपदेशसूचकः" इति च। "यथा जीवशब्दवाच्योऽन्तर्यामी वृक्षो न भवति, यथा-चाणिमशब्दवाच्योऽन्तर्यामी धाना न भवति। तथा सच्छब्दवाच्योऽन्तर्यामी त्वं न भवसीति श्वेतकेतुं प्रत्युपदेश इत्यवगन्तव्यम्" इति प्राचीनटीका।

२ "स एषो—" इति प्र. पाठः।

३ "इत्युक्तत्वाच" इति प्र. पाठः।

४ "–दिवशब्दप्रयोगाच्च" इति प्र. पाठः।

५ "निभालयसे" इति प्र. पाठः।

६ –शब्दस्तु पर–" इति प्र. पाठः।

७ "एवेति भगवता" इति प्र. पाठः।

८ "तदन्ये ये नह्ये–" इति प्र. पाठः। क्वचित् कोशेषु च तथा।

९ "इति परमो–" इति प्र. पाठः।

१० "येनापहृतेन्द्रियो मूर्च्छितो भवति। येन प्रदत्तेन्द्रियोऽसौ प्रबुद्धः। यथा परतन्त्रो ज्वरितो जीवः परदेवताख्य आत्मा न भवति तथा त्वं तन्न भवसीत्युद्दालकेन श्वेतकेतुः प्रबोध्यते" इति च।

११ "चेतनक इति कुत्सितचेतनो जीव इत्यर्थः" इति च।

"अपहार्षीत्, स्तेयमकार्षीत्" इत्यत्र चान्याभिमतस्यैव वस्तुनोऽपहार्यत्वाद् भेद एवायं दृष्टान्तः। अन्यं सन्तं परमात्मानं स्वयमिति मन्यमानः स्तेन एवेति। नहि स्वकीयं परित्यजन् स्तेनो भवति।

"ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः। शास्त्रतत्वमविज्ञाय तथावादबला जनाः[1]। कामक्रोधाभिभूतत्वादहङ्कारवशं गताः। याथातत्थ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः। ब्रह्मस्तेना निरानन्दा अपक्वमनसोऽशिवाः। वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते। तेषां तमःशरीराणां तम एव परायणम्। [2]यतः स रूपत-श्चान्यो जातितः श्रुतितोऽर्थतः। कथमस्मि स इत्येव [3]सम्बद्धः स्यादसंहितः" इति मोक्षधर्मे॥ *॥ "यथा पक्षी च सूत्रं च नानावृक्षरसा यथा। यथा नद्यः समुद्रश्च शुद्धोदलवणे यथा। यथा चोरापहार्यौ च यथा पुंविषयावपि। तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ। तथाऽपि सूक्ष्मरूपत्वान्न जीवात् परमो हरिः। भेदेन मन्ददृष्टीनां[4] दृश्यते प्रेरकोऽपि सन्। वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बद्ध्यतेऽन्यथा" इति च परमोपनिषदि ॥ * ॥ "प्रेरकः सर्वदेहानां[5] प्राणधीचोदिता च सः। विष्णुः संसारिणोऽन्यो यस्तमविज्ञाय मूढधीः। देहेन्द्रियप्राणबुद्धिनेतृत्वं मन्यते त्मनः। अतः संसारपदवीं याति जीवेशयोः सदा। वैलक्षण्यं परं ज्ञात्वा मुच्यते बद्ध्यतेऽन्यथा" इति च॥ *॥

"सर्वान् वेदानधीत्य महामना अनूचानमनी स्तब्ध एयाय" इत्यात्मनोऽन्यमनूचानत्वादिगुण-प्रदं परमविज्ञाय स्तब्धस्य पराधीनत्वज्ञापनेन स्तब्धतां निरस्य तन्निष्ठा ह्यत्रोपदिश्यते।

---

१ "सर्वदेहानामेकचेतनकत्वमैकात्म्यम्। शास्त्रतत्वं शास्त्रप्रतिपाद्यं तत्वम्। तथेति वाद एव बलमेषाम्। नतु तत्साधनोपन्यासः" इति पण्डिताचार्याः।

२ "यतः स्वरूपत–" इति प्र. पाठः।

३ "सम्बन्धः" इति प्र. पाठः, क्वचित् कोशेष्वपि तथा। "सः रूपतः परतन्त्राज्जीवात्। जातितः जीवजा-तितः। "अन्यमीशम्" इत्यादिश्रुतितः। स्वार्थप्रवृत्तो जीवः, परार्थप्रवृत्तः परमात्मेति प्रयोजनभेदाच्च यतोऽन्यः अतः सोऽस्मीत्यभिन्नतया जीवेन कथं सम्बद्धः स्यात्? असंहितः असङ्गत्वेन श्रुतः" इति प्राचीनटीका। "स परमः रूपतश्च जीवादन्यः विलक्षण इति यतः। अनन्तरूपत्वात्। जातितः उत्पत्तितश्च। नहि रेतोरक्तात्मदेहो-त्पत्त्या जननम्। किन्तु प्रादुर्भावमात्रमेव। द्वा सुपर्णेत्यादिश्रुतितः। अर्थतः अर्थापत्तितश्च। स्वातन्त्र्यानुपपत्तेः परतन्त्राज्जीवाद् भिन्न एवेति। तस्मात् सोऽहमस्मीत्यैक्यानुसन्धानेन सम्बन्धोऽसंहितोऽनुपपन्न आत्मन इत्यर्थः" इति तु तत्वमञ्जरी। तथाच "सम्बद्धः स्यादसंहितः" इति पाठः पद्मनाभतीर्थाभिमतः। "सम्बन्धः स्यादसंहितः" इति च पण्डिताचार्यसम्मत इति द्विविधोऽपि पाठः प्रामाणिक एवेति प्रतिभाति। पुराणान्तरेषु द्वेधाऽपि पाठः स्यादिति सम्भाव्यते।

४ "मन्ददृष्टीनामिति मन्ददृष्टिभिः पुरुषैरित्यर्थः" इति प्राचीनटीका।

५ "सर्वजीवानम्" इति प्र. पाठः।

"तद्धैक आहुरसदेवेदमग्र आसीत्" इत्यादिवद्[1] वादिप्रसिद्धमपि निराक्रियते। "इष्टापूर्त्तं[2] मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः" इत्यादिवच्छ्रुतितात्पर्यापरिज्ञानप्राप्तं च। दर्शितं च--"ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः" इति।

तद्वशत्वज्ञापनार्थं च "सदेव सोम्येदमग्र आसीत्" इत्यादिसृष्टिकथनम्। एकविज्ञानेन सर्वविज्ञानं च प्राधान्यात्, किञ्चित्सादृश्यात्, कारणत्वाच्च। नतु तदन्यस्य मिथ्यात्वात्। नहि सत्यज्ञानेन मिथ्याज्ञानं भवति। नहि शुक्तिज्ञो रजतज्ञ इत्युच्यते; विरोधात् तयोर्ज्ञानयोः। 'नेदं रजतम्' इत्यरजतज्ञो हि शुक्तिज्ञो भवति। रजतज्ञश्चेन्न शुक्तिज्ञः। नहि तज्ज्ञस्तदभावज्ञो भवति। तदभावस्य तज्ज्ञानपूर्वकत्वं चान्यत्र तस्य सत्त्वादेव दृष्टम्। तदनङ्गीकारे तदेव न युज्यते।

प्रधानज्ञानादप्रधानस्य ज्ञातवद् व्यपदेशोऽस्त्येव। यथा प्रधानपुरुषाणां ज्ञानाह्वाननाशनैः ग्रामो ज्ञात आहूतो नाशित इति व्यपदेशः। कारणे च पितरि ज्ञाते पुत्रा ज्ञाता इति[3], 'जानाम्येनमस्य पुत्रोऽयम्' इति व्यपदिशन्ति[4]। एवमत्राप्येतत्सृष्टं सर्वमित्यादि। सादृश्याच्चैकस्त्रीज्ञानादन्यस्त्रीज्ञानमिति। तदेव सादृश्यमत्रापि विवक्षितम्--"यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं[5] विज्ञातं स्यात्" इत्यादिना। अन्यथा एकशब्दः पिण्डशब्दश्च व्यर्थः स्यात्। 'मृदा विज्ञातया' इत्येतावता पूर्णत्वात्। नह्येकमृत्पिण्डात्मकान्यन्यमृन्मयानि[6]। सादृश्यमेव हि तेषाम्। "यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्", "यथा सोम्यैकेन नखनिकृन्तनेन[7] सर्वं कार्ष्णायसं विज्ञातं स्यात्" इत्यादिकमपि व्यर्थं स्यात्। नह्येकमण्यात्मकमन्यल्लोहमयम्। नचैकनखनिकृन्तनात्मकं सर्वकार्ष्णायसम्[8]।

"वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यत्र च वाचा नाम्नामारम्भणं विकारः[9] अविकृतं नित्यं नामधेयं मृत्तिकेत्येवैतद्वचनं[10] सत्यमित्यर्थः[11]। नच वाचारम्भणशब्दो[12] मिथ्यात्वे प्रसिद्धः। वाचारम्भणमात्रमिति चाश्रुतकल्पनम्। तस्मिन् पक्षे नामधेयशब्द इतिशब्दश्च व्यर्थः स्यात्। अतो न कुत्रापि जगतो मिथ्यात्वमुच्यते॥ *॥

---

१ "इत्यादिवादिप्रसिद्ध-" इति प्र. पाठः।

२ "अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम्। आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते। वापीकूपतटाकाश्च देवतायतनानि च। अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते" इति तत्वमञ्जर्यां वचनम्।

३ "पुत्रो ज्ञात इति" इति क्वचित् प्र. पाठः। ४ "इति व्यपदेश इति" इति प्र. पाठः।

५ "मृण्मयम्" इति प्र. पाठः। 'मृन्मयम्' इत्येव च श्रौतः पाठः।

६ "-मृण्मयानि" इति प्र. पाठः। ७ "विज्ञातं स्यात्, एकेन नखनिकृन्तनेन" इति प्र. पाठः।

८ "सर्वं कार्ष्णायसम्" इति प्र. पाठः। क्वचित् कोशेषु च तथा।

९ "वाचाऽऽरम्भणं विकारः, अत एवानित्यमित्यर्थः। विकारिणोऽनित्यत्वनियमात्" इति तत्वमञ्जरी। "वाचारम्भणं विकार इत्यनेन प्राकृतभाषोच्यते। नामधेयं मृत्तिकेत्येवेत्यनेन संस्कृतभाषोच्यते। मृत्तिकाशब्दोऽत्र संस्कृतशब्दान्तराणामुपलक्षणम्" इति प्राचीनटीका।

१० "-त्येवेत्येतद्वचनम्" इति प्र. पाठः। ११ "सत्यमिति श्रुत्यर्थः" इति प्र. पाठः।

१२ "-शब्दोऽपि मिथ्यात्वे" इति प्र. पाठः।

"[1]कविर्म्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः", "[2]यच्चिकेत सत्यमित् तन्न मोघं वसु स्पार्हमुत जेतोत दाता", "[3]विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनन्ति व्रतं वाम्", "प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम्", "अनाद्यनन्तं जगदेतदीदृक् प्रवर्त्तते नात्र विचार्यमस्ति। नचान्यथा क्वापि च कस्य चेदमभूत् पुरा नापि तथा भविष्यत्", "असत्यमाहुर्जगदेतदज्ञाः शक्तिं हरेर्ये न विदुः परां हि। यः सत्यरूपं जगदेतदीदृक् सृष्ट्वा त्वभूत् सत्यकर्म्मा महात्मा", "[4]असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्। अपरस्परसम्भूतं किमन्यत् कामहैतुकम्। एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः। प्रभवन्त्युग्रकर्म्माणः क्षयाय जगतोऽहिताः" इत्यादेश्च॥

"अनित्यत्वविकारित्वपारतन्त्र्यादिरूपता[5]। स्वप्नादिसाम्यं जगतो न तु बोधनिवर्त्यता। सर्वज्ञस्य यतो विष्णोः सर्वदैतत् प्रतीयते। बोधास्तं ततो नैतत् किन्त्वाज्ञावशमस्य हि" इति परमोपनिषदि। "प्रज्ञाविनिर्म्मितं यस्मादतो मायामयं जगत्[6]। अनेनानुगतं यस्मादनृतं तेन कथ्यते। बोधानिवर्त्यमपि तु नित्यमेव प्रवाहतः। अ इत्युक्तः परो देवस्तेन सत्यमिदं जगत्। तदधीनस्वरूपत्वादसत्यं तेन कथ्यते। सत्यस्य सत्यः स विभुरिन्द्रचापस्य सूर्यवत्" इति च। "तस्योपनिषत् सत्यस्य सत्यमिति प्राणा वै

---

१ "कविर्वाग्मी। मनीषी मेधावी। अन्यान् परिभावयतीति परिभूः। यथार्थत्वेनार्थान् व्यदधात्, शाश्वतकालवर्त्तिसंवत्सरव्यवहारार्थम्" इति तत्वमञ्जरी। "परितो भवतीति परिभूः" इति प्राचीनटीका।

२ "स भगवान् यच्चिकेत चकार, तन्न मोघं न मिथ्या। स्पृहाविषयं द्रव्यं तेजो वा भक्तेभ्यो दाता" इति तत्वमञ्जरी। "वल्यादिदैत्यराज्यं स्पार्हं वसु जेता इन्द्रादिभ्यो दाता यः परमैश्वर्यादिन्द्रनामको विष्णुः यच्चिकेत तत्सत्यमेव न मोघम्" इति प्राचीनटीका।

३ "हे मघवाना इन्द्राबृहस्पती, युवयोरेव यद् विश्वं तत् सत्यमेव, नानिर्वचनीयम्। युवयोर्यत् विश्वपालनादिव्रतं आपः अब्देवताश्चापि प्रमिनन्ति जानन्ति तच्च सत्यम्" इति प्राचीनटीका। "इन्द्राब्रह्मणस्पती परमेश्वरमुख्यप्राणौ, मघवाना यशस्विनौ, युवयोरिदं विश्वं सत्यमेव। आपो देवताश्च वां सत्यसृष्टिव्रतं प्रमिनन्ति प्रजानन्ति" इति तत्वमञ्जरी। "अस्य इन्द्रादिशब्दाभिधेयस्य महतः सत्यस्य विष्णोर्महानि महान्ति सत्या सत्यानि पारमार्त्थिकानि करणानि सृष्ट्यादिकर्म्माणि नु इदानीं प्रवोचं घ प्रावोचमेव, वच्मीत्यर्थः" इति प्राचीनटीका। "अस्य महतः सत्यस्य महनीयानि सत्यानि करणानि कर्म्माणि प्रवोचं घ नु ब्रवाणि हि किम्?" इति तत्वमञ्जरी।

४ "अप्रतिष्ठं कालत्रयेऽपि स्थितिबाध्यमिति यावत्। अपरस्परसम्भूतं परतः परतस्तारतम्येनानुत्पन्नम्। किमन्यत्? कथमन्यथेत्याकाङ्क्षायां कामहैतुकमाहुः। 'अज्ञानहेतवः कामाः काममूलाः प्रवृत्तयः। प्रवृत्तिनिर्म्मितं सर्वं जगदेतच्चराचरम्' इति हि तन्मतम्" इति च तत्वमञ्जरी।

५ "–रूपतः" इति प्र. पाठः। "आदिशब्दाद् वासनावशत्वं विकारजनकत्वं च। स्वप्नादीत्यादिशब्दान्मनोरथः" इति तत्वमञ्जरी।

६ "प्रज्ञानामसु मायाशब्दस्य पठितत्वात्" इति प्राचीनटीका। स्फुटमिदं वैदिकनिघण्टुदृशाम्।

सत्यं तेषामेष सत्यम्'' इति च। ''महामायेत्यविद्येति नियतिर्म्मोहनीति च[१]। प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कत्थ्यते। प्रकृतिः प्रकृष्टकरणाद् वासना वासयेद् यतः। अ इत्युक्तो हरिस्तस्य विद्याऽविद्येति सञ्ज्ञिता। मायेत्युक्ता प्रकृष्टत्वात् प्रकृष्टं हि मयाभिधम्[२]। विष्णोः प्रज्ञप्तिरेवैका शब्दैरेतैरुदीर्यते। प्रज्ञप्तिरूपो हि हरिः सा च स्वानन्दलक्षणा'' इति च॥ *॥

''सर्वे वेदा हरेर्भेदं सर्वस्माज्ज्ञापयन्ति हि। भेदः स्वातन्त्र्यसार्वज्ञ्यसर्वैश्वर्यादिकश्च सः। स्वरूपमेव भेदो यद्[३] व्यावृत्तिश्च स्वरूपता। सर्वव्यावृत्तये यस्मात् स्वशब्दो-ऽयं प्रयुज्यते। सर्वव्यावृत्ततामेव नेतिनेत्यादिका श्रुतिः। विष्णोरतो वदेदन्या अपि सर्वा न संशयः'' इति च नारायणश्रुतिः[४]॥ *॥

''अहं ब्रह्मास्मि'', ''तद् योऽहं सोऽसौ योऽसौ सोऽहम्'', ''योऽसावादित्ये पुरुषः सोऽह-मस्मि[५]'' इत्यादि त्वन्तर्याम्यैक्यापेक्षया[६]—

''स यश्चायं पुरुषे यश्चासावादित्ये स एकः'', ''[७]अः इति ब्रह्म तत्राऽगतमहमिति, तस्योपनिषदहमिति'', ''अहन्नामा हरिर्न्नित्यमहेयत्वात् प्रकीर्त्तितः। त्वं चासौ प्रति-योगित्वात् परोक्षत्वात् स इत्यपि। सर्वान्तर्यामिणि हरावस्मच्छब्दविभक्तयः। युष्मच्छब्दगताश्चैव सर्वास्तच्छब्दगा अपि। सर्वशब्दगताश्चैव वचनान्यखि-लान्यपि। स्वतन्त्रत्वात् प्रवर्त्तन्ते व्यावृत्तेऽप्यखिलात् सदा। तत्सम्बन्धात्तु जीवेषु तत्सम्बन्धादचित्स्वपि। वर्त्तन्त उपचारेण तिङ्पदान्यखिलान्यपि। तस्मात् सर्वगतो विष्णुरेको[ऽ]भिच्च ततो बहुः[८]'' इति च नारायणश्रुतिः[९]। ''सर्वभूतेषु येनैकं भाव-

---

१ ''मोहिनीति च'' इति प्र. पाठः।

२ ''हरेः प्रकृष्टत्वान्मयाख्यत्वम्। तत्सम्बन्धिनी माया'' इति तत्वमञ्जरी।

३ ''भेदोऽयम्'' इति प्र. पाठः। ''व्यावृत्तिर्वैलक्षण्यमेव स्वरूपतेति यत् तस्मात् स्वरूपमेव भेदः'' इति तत्व-मञ्जरी।

४ ''इति नारायणश्रुतिः'' प्र. पाठः।

५ ''सोऽहमस्मि स एवाहमस्मीत्यादि त्वन्तर्याम्यपेक्षया'' इति प्र. पाठः।

६ ''अहं ब्रह्म मदन्तर्यामी ब्रह्मेत्यर्थः। यो मदन्तर्यामी सोऽसौ सूर्यान्तर्यामी। योऽसौ सोऽहं मदन्तर्यामी-त्यर्थः। योऽसावादित्ये पुरुषोऽन्तर्यामी सोऽहं मदन्तर्यामीत्यर्थः'' इति प्राचीनम्।

७ ''अ इति ब्रह्म'' इति विसर्गरहितः प्र. पाठः प्रामादिकः।

८ ''तस्मादेकः सन् सर्वान्तर्यामी, भिन्नः सर्वतः। सर्वशब्दैरनन्तगुणवाचकैर्न्निरुच्यमानत्वात् बहुगुणविस्तरो विष्णुरित्यर्थः'' इति प्राचीनटीका। एतेन बहुः बहुगुणविस्तारः भिच्च भिन्नश्चेति व्याख्यातं भवति। अथवा एकः अभिच्च इति च्छेदः। तथाहि तत्वमञ्जरी—''तस्मात् सर्वनियामकत्वात् सर्वगतो विष्णुः। ततः सर्वनियाम-कत्वेन सर्वगतत्वत एकश्च बहुश्च। नच तावता भेदवानित्याह—अभिच्चेति। विशेषेणैव तद्बहुत्वमित्याकूतम्''इति।

९ ''इति नारायणश्रुतिः'' इति प्रं, पाठः।

मव्ययमीक्षते । अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्" इति च भगवद्वचनम्[1] ॥ * ॥

नचासत्यो भेदः—

"[2]सत्यमेनमनु विश्वे मदन्ति रातिं देवस्य गृणतो मघोनः", "[3]सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये", "सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा मैवाऽरुवण्यो[4] मैवाऽवरुण्यो मैवाऽरुवण्य आत्मा हि स्वतन्त्रः[5] सर्ववित् सर्वशक्तिः परमसुखः परमो जीवस्तु तद्वशोऽल्पज्ञोऽल्पशक्तिरार्त्तोऽल्पकः" इत्यादिश्रुतिभ्यः ।

नचावान्तरसत्यत्वमिदम्—

"यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा विपश्चिता", "एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन् । एतत् साम गायन्नास्ते", "[6]ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु । ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः", "परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते . . . . . स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा[7]", "यत्र त्वस्य सर्वमात्मैवाभूत् . . . तत् केन कं जिघ्रेत्[8] . . . . . विज्ञातारमरे केन विजानीयात्", "यथोदकं शुद्धे शुद्धमासिक्तं

---

१ "इति भगवद्वचनम्" इति प्र. पाठः ।

२ "एनमनु विश्वे मदन्ति आनन्दन्तीत्येतत् सत्यम् । स्तुवत इन्द्रस्य रातिं दातारम्" इति तत्वमञ्जरी ।

३ "विप्रराज्येषु यज्ञेषु सुखबलरूपस्य विष्णोः स महिमा सत्य इति गृणे स्तौमीत्यर्थः" इति प्राचीनटीका । एतेन शव इत्येतत् सुखबलरूपस्येति विष्णुविशेषणं व्याख्यातं भवति । शकारवकारयोः सुखबलवाचित्वात् । "शवः सुखम्" इति तत्वमञ्जरी, सुखमुद्दिश्येत्येतत् ।

४ "अल्पत्वादरशब्दोक्तजीवभावं परमात्मानः पश्यद्भिरारुभिर्वन्यो भजनीयो मैव" इति प्राचीनटीका । "आरुभिः दोषशीलैः वननीयो भजनीयः आरुवण्यो मैव" इति तत्वमञ्जरी ।

५ "आत्मा हि परमः स्वतन्त्रः" इति प्र. पाठः । अयमपि पाठः श्रुत्यन्तरगतः प्रामाणिक इति प्रतिभाति । तथाहि पद्मनाभतीर्थीयम्—"परा उत्कृष्टा मा श्रीर्यस्यासौ परम इति पुनरुक्तपरमशब्दार्थः" इति । 'परमः स्वतन्त्रः' इति पाठ एव हि 'परमसुखः परमः' इत्युत्तरत्रश्रुतपरमशब्देन पुनरुक्तं भवति ।

६ "त्वः एको ब्रह्मा ऋचां पोषं मुख्यार्थमध्यास्ते । पुपुष्वान् आनन्दादिना पुष्टः मुक्तः त्वः गायत्रं साम गायति । त्वः शक्वरीषु सम्बद्धं साम । जातविद्यामितिहासादि त्वो वदति । त्वस्तु ब्रह्मा यज्ञस्य मात्रामु विष्णो रूपमेव विशेषेण पश्यति" इति तत्वमञ्जरी ।

७ प्र. पाठे इतः परम्—"ज्ञातिभिर्वाऽज्ञातिभिर्वा" इतीयदधिकं पठ्यते ।

८ यद्यपि श्रुतौ पश्येदित्येव प्रथमं पठ्यते ततो जिघ्रेदिति । तथाऽपि सर्वसङ्ग्रहायैवमादौ मध्ये चान्ते च उत्प्लुत्योत्प्लुत्य प्रतीकग्रहणमिति ज्ञातव्यम् । प्र. पाठे तु समग्रा श्रुतिः पठ्यते— "यत्र त्वस्य सर्वमात्मैवाभूत्, तत्

तादृगेव भवति", "तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति", "अमृतस्यैष सेतुः", "[1]अक्षण्वन्तः कर्ण्णवन्तः सखायो मनोजवेष्वसमा बभूवुः। आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे", "ईशमाश्रित्य तिष्ठन्ति मुक्ताः संसारसागरात्। यथेष्टभोगभोक्तारो ब्रह्मान्ता उत्तरोत्तरम्" [2]इत्यादिमोक्षानन्तरभेदश्रुतिभ्यः। "इदं ज्ञानमपाश्रित्य[3] मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रळये[4] न व्यथन्ति च" इति भगवद्वचनम्। "[5]जगद्व्यापारवर्जम्। प्रकरणादसन्निहितत्वाच्च" इत्यादि च ॥ ॐ ॥

"अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्म्मा" इति तद्धर्म्माणामप्यनुच्छित्तेः प्रस्तुतत्वात्, "अत्रैव मा भगवान् 'मोहान्तमापीपिपन्न प्रेत्य सञ्ज्ञाऽस्ति" इति सञ्ज्ञानाशस्य दोषत्वेनोक्तत्वात् "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" इत्याद्याक्षेप[7] एव। नहि भोगाभावो "विज्ञातारमरे केन विजानीयात्" इति विज्ञातुरविज्ञानं चापेक्षितम्।

"अहमित्येव यो वेद्यः स जीव इति कीर्त्तितः। स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोः" इति च परमश्रुतिः[8]। "मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेत्" इति च मोक्षधर्म्मे[9]।

"नतु तद् द्वितीयमस्ति" इति च यत्तत् ब्रह्म द्वैतत्वेन न पश्यति तदेव द्वितीयं नेत्याह। "यत् ततोऽन्यत्[10] तद् विभक्तत्वेनैव पश्येत्" इति वाक्यशेषात्। "नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति हेतोश्च। "कर्म्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति"। इत्यादावपि[11] एकीभावो मत्यैक्यम्, क्षीराब्ध्यादिस्थिततद्रूपापेक्षया स्थानैक्यं वा—

---

केन कं पश्येत्, तत् केन कं जिघ्रेत्, तत् केन कं विजानीयाद् येनेदं सर्वं विजानाति तं च केन विजानीयाद् विज्ञातारमरे केन विजानीयात्" इति।

१ "सखाय एककालमुक्ताः। ब्रह्मादयोऽक्ष्यादिसर्वेन्द्रियवन्तोऽसमाः तारतम्यवन्तो बभूवुः। सुधासमुद्रे गुल्फजान्वादिदघ्ने विहर्तुं योग्यताविशेषवन्तः। आदघ्नास ईषत्परिमाणाः केचित्। उपकक्षासः कक्षदघ्नसुधाः केचित्। केचित् सुधायां यथेष्टं स्नानशीला ह्रदसम्बन्धात् ह्रदा इव ददृशिरे" इति तत्वमञ्जरी।

२ "इति मोक्षानन्तरं भेद-" इति प्र. पाठः। ३ "ज्ञानमुपाश्रित्य" इति प्र. पाठः।

४ "प्रलये" इति प्र. पाठः। ५ सूत्रयोरादौ प्र. पाठे ओङ्कारः पठ्यते।

६ "मोहान्तं मोहसामग्र्यम्" इति तत्वमञ्जरी। "मोहस्थानम्" इति प्राचीनटीका।

७ "इति ह्याक्षेप एव" इति प्र. पाठः। ८ "इति परमश्रुतिः" इति प्र. पाठः।

९ "इति मोक्षधर्म्मे" इति प्र. पाठः।

१० "ततोऽन्यद् विभक्त–" इति प्र. पाठः। "ततोऽन्यद्विभक्तं यत्पश्येत्" इति श्रुतिवाक्यार्थानुवादोऽयम्। अत एव "यदित्यादिवाक्यशेषार्थात्" इत्याह तत्वमञ्जर्यां पण्डिताचार्यः।

११ "इत्यत्रापि" इति प्र. पाठः।

"[1]कामेन मे काम आगाद्धृदयाद्धृदयं मृत्योः । यदमीषामदः प्रियं तदैतूप मामभि",
"ब्रह्मण्यत्यनुकूला मे मतिर्मुक्तौ भविष्यति । अतः प्रायोऽनुकूलत्वमिदानीमपि मे स्थितम्", "येनाऽऽक्रमन्त्यृषयो ह्याप्तकामा यत्र तत् सत्यस्य परमं निधानम्", "एत-मानन्दमयमात्मानमुपसङ्क्रामति" इत्यादिश्रुतेः[2] ।

स्वरूपैक्याभिप्राये "कर्म्माणि विज्ञानमयश्च" इति न युज्यते । नहि तत्पक्षेऽपि कर्म्मणां ब्रह्मैक्यं मुक्तावस्ति । निवृत्त्यभिप्राये पञ्चदशकलानामपि समत्वात्, "गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु" इत्यन्यासां कलानां गमनमुक्त्वा कर्म्मणां विज्ञानात्मनश्चैकीभावकथनं व्यर्थं स्यात्; विशेषाभावात् । नच ज्ञाननिवृत्तस्य रजतस्य शुक्त्यैकीभावव्यवहारोऽस्ति । "परेऽव्यये" इत्यधिकरणत्वकथनं च भेदज्ञापकम् । अन्यथा 'पर एव भवन्ति' इति निर्देशः स्यात् ।

"जीवस्य परमैक्यं तु बुद्धिसारूप्यमेव तु । एकस्थाननिवासो वा व्यक्तिस्थानमपेक्ष्य सः । न स्वरूपैकता तस्य मुक्तस्यापि विरूपतः । स्वातन्त्र्यपूर्णतेऽल्पत्वपारतन्त्र्ये विरूपता" इति च परमश्रुतिः[3] ॥

"ब्रह्म वेद ब्रह्मैव भवति" इत्यादि च "सम्पूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेत्" इतिवत्; बृंहितो भवतीत्यर्थः । नहि ब्राह्मणपूजकः स एव ब्राह्मणो भवति ।

"ब्रह्माणि जीवाः सर्वेऽपि परब्रह्माणि मुक्तिगाः । प्रकृतिः परमं ब्रह्म परमं महदच्युतः । तस्माच्च मुक्ता नच सा न कश्चिद् विष्णुवैभवम् । '[4]आप्नुवन्ति स एवैकः स्वतन्त्रः पूर्णसद्गुणः[5]'" इति परमश्रुतिः । "[6]परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति", "ब्रह्मेशानादिभिर्देवैर्यत् प्राप्तुं नैव शक्यते । तद् यत्स्वभावः कैवल्यं स भवान् केवलो हरे[7]" इत्यादेश्च[8] । "यथाऽपियन्ति तेजांसि महातेजसि भास्करे । पृथक्पृथक् स्थितान्यद्धि स्वरूपैरपि सर्वशः । परे ब्रह्मणि जीवाख्यब्रह्माण्यप्यपियन्ति हि । मुक्तौ पृथक्स्थितान्येव तदन्येषामदर्शनम् । अप्ययोऽयं समुद्दिष्टो न स्वरूपैकता क्वचित्" इति नारायणश्रुतिः ।

---

१ "मृत्योः संहारकस्य भगवतः कामानुकूल्येन मे कामः विषयान् प्रत्यागच्छेत् । अमीषां भगवद्रूपाणां यत् प्रियं तत् प्रियत्वेन मामभ्युपैतु" इति तत्वमञ्जरी । "अमीषामिति बहुवचनं बहुमानार्थम् । यस्य मृत्योः सर्वसंहर्त्तुः परमेश्वरस्य कामेनाऽऽगान्मे कामो यस्यैव हृदयान्मे हृदयमागात् अमुष्य परमेश्वरस्य यददः प्रियं तन्मामभ्युपैतु इति संसारदशायां प्रार्थ्यमानत्वात् परमेश्वरेण मुक्तौ जीवस्य तदैकमत्यं सिद्ध्यति" इति प्राचीनटीका ।

२ "इत्यादिश्रुतिभ्यः" इति प्र. पाठः ।	३ "विरूपते इति परमश्रुतिः" इति प्र. पाठः ।

४ "प्राप्नुवन्ति" इति प्र. पाठः ।	५ "पूर्णषड्गुणः" इति प्र. पाठः ।

६ "त्वं मात्रया परः, परिमाणेन जगतो विलक्षणः, अनन्तत्वात् । तन्वा वृधान देहेन सहैव पूर्ण । तस्य स्वतोऽभिन्नत्वात् । त्वन्महिमानं केऽपि नानुभवन्ति" इति तत्वमञ्जरी ।

७ "कैवल्यं समाधिकराहित्यम् । केवलः अविमिश्रः" इति च ।

८ "इति च" इति प्र. पाठः ।

अतः सर्वागमविरुद्धमेव जीवपरैक्यम्[१]। तथैव सर्वयुक्तिविरुद्धं च। न तावदेकजीववादो युज्यते। एकाज्ञानपरिकल्पितत्वे हि सर्वस्य[२] सर्वमिदं परिकल्पितमिति जानतः पुनः शिष्यादिबोधनं न युज्यते। नहि स्वप्नोऽयमिति निश्चित्य स्वाप्नपुत्रदायार्थं यतते। स्वप्ने तु स्वाप्नत्वाज्ञानादेव[३] यतते। नच बहूनां दृश्यमानत्वादस्याज्ञानपरिकल्पितमिदमिति निश्चयो युज्यते। स्वप्ने तु प्रबोधानन्तरमेकस्यावशिष्टत्वान्निश्चयः। नचात्र तथाऽस्ति। तस्यतस्य [४]तथेति प्रतिपत्तव्यमित्यङ्गीकारे वस्तुनि विकल्पासम्भवान्न[५] कल्पितमित्येव स्यात्। नच तथा प्रतिपत्तव्यमित्यत्र प्रमाणमस्ति। शिष्याज्ञानपरिकल्पितमित्यङ्गीकारे तस्यैवाऽऽचार्यभावे स्वयमेव कल्पितो भवतीति सम्यग्ग्रन्थाधिगमस्यैवानर्थत्वं स्यात्[६]। नच कस्यापि मुक्तिः[७]। ग्रन्थाधिगमे तस्यैव[८] स्वशिष्याज्ञानपरिकल्पितत्वप्राप्तेः। स चैको जीवो यदि भेदवादी भवति तस्य तत्रैव दार्ढ्यान्न कदाचिद् भेदनिवृत्तिरिति न कस्यापि मुक्तिः स्यात्। तेन यथा कल्पितं तथैव भवतीति तेनैकजीववादिनां नित्यनिरयकल्पने स एव स्यात्। नचैकजीवाज्ञानपरिकल्पितं समस्तमित्यत्र किञ्चिन्मानम्।

"प्रपञ्चो यदि विद्येत निवर्त्तेत न संशयः। मायामात्रमिदं द्वैतमद्वैतं परमार्थतः" इत्यस्य चायमर्थः– प्रपञ्चो यदि विद्येत, भवेत[९], उत्पद्येत, तर्हि निवर्त्तेत। नच निवर्त्तते। तस्मादनादिरेवायम्। प्रकृष्टः पञ्चविधो भेदः प्रपञ्चः। नचाविद्यमानोऽयम्; मायामात्रत्वात्। मायेति भगवत्प्रज्ञा, सैव मानं त्राणकर्त्री च यस्य[१०] तन्मायामात्रम्। परमेश्वरेण ज्ञातत्वाद् रक्षितत्वाच्च न द्वैतं भ्रान्तिकल्पितमित्यर्थः। नहीश्वरस्य भ्रान्तिः। तर्हि "अद्वैतः सर्वभावानाम्" इति तस्य व्यपदेशः[११] कथमित्यत आह–"अद्वैतं परमार्थतः" इति। परमार्थापेक्षयाऽद्वैतत्वम्;[१२] सर्वस्मादुत्तमोऽर्थः स एक एवेत्यर्थः। अन्यथा "अद्वैतः सर्वभावानाम्" इति व्यर्थं स्यात्। सर्वभावानां मध्ये [१३]तस्यैकस्याद्वैतत्वमित्युक्ते समाधिकराहित्यमेवोक्तं स्यात्[१४]। अन्येषां सर्वभावानां च समाधिकभावः।

---

१ "जीवेश्वरैक्यम्" इति प्र. पाठः। २ "–त्वे च सर्वस्य" इति प्र. पाठः।

३ "स्वाप्नत्वाज्ञानादेव" इति प्र. पाठः।

४ "तथातथा प्रतिपत्तव्य–" इति प्र. पाठः। "तस्यतस्याहमबाध्यो जीव इति प्रतिपत्तव्यमित्यङ्गीकारे वस्तुनि प्रतिपत्तिविकल्पासम्भवात्, सर्वजीवानामबाध्यत्वात्, तदात्मकं विश्वमकल्पितमित्यस्मन्मतमेव प्राप्तं स्यात्। यथा "यवाग्वा पयसा वा जुहुयात्" इति क्रियायां विकल्पः, एवं स्थाणुरयमिति वा पुरुषोऽयमिति वा जानीयादिति वस्तुज्ञाने विकल्पो न स्याद्धि। नन्वस्ति वस्तुज्ञाने विकल्पः भगवान् कृष्ण इति वा राम इति वा प्रतिपत्तव्य इति। मैवम्। तत्र द्वयोरपि विकल्पकोट्योर्विद्यमानत्वादुभयप्रतिपत्तेरपि सम्भवात्" इति तत्वमञ्जरी।

५ "–सम्भवादकल्पित–" इति प्र. पाठः। ६ "–नर्थहेतुत्वं स्यात्" इति प्र. पाठः।

७ "कस्यचिन्मुक्तिः" इति प्र. पाठः। ८ "तस्यैव शिष्या–" इति प्र. पाठः।

९ "विद उत्पत्तौ, भवतेरुत्पत्तावात्मनेपदमित्यादिनोत्पत्तिवाचित्वमवगम्यते" इति तत्वमञ्जरी।

१० "मानत्राणकर्त्री यस्य" इति प्र. पाठः।

११ "इति व्यपदेशः" इति प्र. पाठः। "तस्य व्यपदेशः अद्वैतस्य व्यपदेशः" इति तत्वमञ्जरी।

१२ "–पेक्षयाद्य द्वैतम्, सर्वस्मा–" इति प्र. पाठः। १३ "–तस्यैकस्यैवाद्वैतत्व–" इति प्र. पाठः।

१४ "समाधिकाराहित्ये सम्भवति चाद्वैतशब्दः- 'अद्वितीयो धनुर्द्धरः' इत्यादिवत्" इति तत्वमञ्जरी।

"विकल्पो विनिवर्त्तेत कल्पितो यदि केनचित्" इति वाक्यशेषाच्च न कल्पितत्वमस्येति विज्ञायते[1]। निवर्त्तेत इत्यर्थाङ्गीकारे[2] निवर्त्तेत विद्येतेति च प्रसङ्गरूपेण कथनं यदिशब्दौ च न युज्यन्ते। विद्येतेत्यस्य चोत्पत्त्यर्थानङ्गीकारे यद्यदस्ति तत्तन्निवर्त्तेत इति व्याप्त्यभावात् निवर्त्तेतेति न युज्यते। अतः प्रपञ्चस्यानादिसत्यत्वपरमिदं वाक्यम्। अतः "उपदेशादयं वादोऽज्ञाते द्वैतं न विद्यते" इत्याह। अज्ञात एव द्वैतं न विद्यते; अज्ञानिनां पक्ष एव द्वैतं न विद्यत इत्यर्थः।

"जीवेश्वरभिदा चैव जडेश्वरभिदा तथा। जीवभेदो मिथश्चैव जडजीवभिदा तथा। मिथश्च जडभेदो यः प्रपञ्चो भेदपञ्चकः। सोऽयं सत्यो ह्यनादिश्च [3]सादित्वे नाशमाप्नुयात्। नच नाशं प्रयात्येष नचासौ भ्रान्तिकल्पितः। कल्पितश्चेन्निवर्त्तेत नचासौ विनिवर्त्तते। द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम्। मतं हि ज्ञानिनामेतन्मितं त्रातं च विष्णुना। तस्मात् सत्यमिति प्रोक्तं परमो हरिरेव तु" इति हि परमश्रुतिः[4]। मैत्रशाखायां च[5]–"अथ ज्ञानोपसर्गाः[6]–" इत्युक्त्वा–"अथ ये चान्ये [7]मित्थ्यातर्कैर्दृष्टान्तैः कुहकेन्द्रजालैर्वैदिकेषु परिस्थातुमिच्छन्ति तैः सह न संवसेत् प्राकाश्या ह्येते तस्करा अस्वर्ग्या इति ह्याह[8]। नैरात्म्यवादकुहकै[9]र्मित्थ्यादृष्टान्तहेतुभिः। भ्राम्यन् लोको न जानाति वेदविद्यान्तरं तु यत्" इति।

---

१ "–मस्येति ज्ञायते" इति प्र. पाठः।  २ "निवर्त्तेत इत्यङ्गीकारे" इति प्र. पाठः।

३ "सादिश्चेन्नाश–" इति प्र. पाठः।  ४ "इति परमश्रुतिः" इति प्र. पाठः।

५ "मैत्रेयीशाखायां च" इति प्र. पाठः। "मैत्रेयशाखायां च" इति क्वचित्। एतावत्पर्यन्तमनुपलब्धाकरेयं श्रुतिः सम्प्रत्युपलभ्यते। मैत्रायणी शाखा इति च नामोपलभ्यते। तथाहि मैत्रायणीय आरण्यके सप्तमप्रपाठके सम्प्रत्युपलब्धः पाठः–"अथेदानीं ज्ञानोपसर्गा राजन्मोहजालस्यैष योनिर्यदस्वर्ग्यैः सह स्वर्ग्यस्यैष वास्त्वे पुरस्तादुक्तेऽप्यधः स्तम्भेनाऽश्लिष्यन्त्यथ ये चान्ये ह नित्यप्रमुदिता नित्यप्रवसिता नित्ययाचनका नित्यं शिल्पोपजीविनोऽथ ये चान्ये ह पुरयाचका अयाज्ययाजकाः शूद्रशिष्याः शूद्राश्च शास्त्रविद्वांसोऽथ ये चान्ये ह वृथाकषायकुण्डलिनः कापालिनोऽथ ये चान्ये ह यक्षराक्षसभूतगणपिशाचोरगग्रहादीनामर्त्थं पुरस्कृत्य शमयाम इत्येवं ब्रुवाणा अथ ये चान्ये ह चाट–जट–नट–भट–प्रव्रजित–रङ्गावतारिणो राजकर्म्मणि पतितादयोऽथ ये चान्ये ह वृथा-तर्कदृष्टान्तकुहकेन्द्रजालैर्वैदिकेषु परिस्थातुमिच्छन्ति तैः सह न संवसेत्। प्रकाशभूता वै ते तस्करा अस्वर्ग्या इत्येवं ह्याह—नैरात्म्यवादकुहकैर्म्मित्थ्यादृष्टान्तहेतुभिः। भ्राम्यँल्लोको न जानाति वेदविद्यान्तरं तु यत्" इति। अत्र दृश्यमानः पाठभेदस्तु सम्प्रदायविच्छेदाद् वा स्याद्. बहुशाखादृशाऽऽचार्येण भिन्नभिन्नशाखापाठान्तरोद्धरणाद् वा स्यादिति सन्तोष्टव्यम्।

६ "यथा देशोपसर्गो देशनाशकस्तथा ज्ञानोपसर्गो ज्ञाननाशकोऽतोऽसौ परिहरणीय इत्यर्थः" इति प्राचीनटीका।

७ "मित्थ्यात्वे प्रयुज्यमानास्तर्का मित्थ्यातर्काः; विमतं मित्थ्या दृश्यत्वादित्यादयः। कुहकानां मायाविनामिन्द्रजालादयः तत्र दृष्टान्ताः" इति तत्वमञ्जरी।

८ "इत्याह" इति प्र. पाठः।

९ "नैरात्म्ये वादः येषां ते नैरात्म्यवादाः। त एव कुहकाः मायिनः" इति तत्वमञ्जरी।

4

आत्मसम्बन्धि किमपि नास्तीति वादो नैरात्म्यवादः ॥ * ॥

भ्रान्तिकल्पितत्वे च जगतः सत्यं जगद्‌द्वयमपेक्षितम् । नहि सत्यशुक्तेः सत्यरजतस्य तयोः सादृश्यस्य चाभावे भ्रान्तिर्भवति । स्वप्नेऽपि वासनारूपं सत्यमेव जगन्मनसि स्थितं बहिष्ठत्वेन दृश्यते । देहात्मनोरप्येकदेशस्थत्वादि[1] सादृश्यमस्त्येव । 'शङ्खः पीतः', 'नभो नीलम्' इत्यादिष्वपि पीतत्वादयोऽन्यत्र[2] विद्यन्त एव । [3]सादृश्यं च द्रव्यत्वादिकं [4]किञ्चिच्छङ्खादीनां पीतादीनां चास्त्येव । ततो न कुत्रापि सदृशसत्यवस्तुद्वयं विना भ्रमः ।

नचाऽऽत्मन्यनात्मभ्रमः कुत्रापि दृष्टः[5] । नहि कश्चिदहमहं न भवामीति भ्रान्तो दृश्यते । आत्मन्यनात्मभ्रम एवायं प्रपञ्च इति च तैरुच्यते[6] । तं विनैवानात्मन्यात्मभ्रमकल्पनेऽनात्मनः सत्यत्वं स्यात् । तदा चाद्वितीयत्वकल्पनेऽनात्मैवास्ति नाऽऽत्मेति भवति । आत्माज्ञानात्मकत्वे जगत[7] आत्मनो भिन्नत्वेन न दृश्येत । नहि शुक्तेर्भेदेन रजतं दृश्यते भ्रान्तौ ।

नचैकमेव [8]युगपद् बहुजातित्वेन भ्रान्तौ दृश्यते । नचाऽऽत्मनि भेदभ्रमः क्वापि दृष्टः । नच कुत्रापि मिथ्योपाधिकृतो भेदो दृष्टः[9] । नच ज्ञानाज्ञानयोरपि मिथ्याकल्पितत्वं दृष्टम् । तद्विषयस्यैवान्यथात्वं भ्रान्तौ । एवमाद्यनन्तयुक्तिविरुद्धोऽयं पक्षः । ग्रन्थबहुत्वं स्यादित्येवोपरम्यते । नच सत्यत्वाङ्गीकारे कश्चिद् दोषः ॥ * ॥

बहुजीववादपक्षेऽपि[10] भेदस्य मिथ्यात्वाङ्गीकार एते दोषा भवन्त्येव । मिथ्योपाधिकृतं हि तेषामपि बहुत्वम् । नच मिथ्योपाधिकृतो भेदः क्वापि दृष्टः । आत्मन्यनात्मत्वकल्पना[11]रूपत्वान्मिथ्योपाधिरेव न युज्यते । मायामयी सृष्टिरपि तत्सदृशस्य सत्यस्यान्यस्य[12] विद्यमानत्व एव दृष्टा । द्रव्यत्वादिसादृश्ययुक्तं[13] किञ्चिदधिष्ठानमाश्रित्यैव च ।

"अधिष्ठानं च सदृशं तत्थ्यवस्तुद्वयं विना । न भ्रान्तिर्भवति क्वापि स्वप्नमायादिकेष्वपि । मानस्यां वासनायां तु बहिर्वस्तुत्वकल्पनम् । स्वाप्नो भ्रमश्च मायायां कर्त्तृदेहादिवस्तुषु । चतुरङ्गबलत्वादिकल्पनं भ्रम इष्यते । न भ्रन्तिकल्पितं विश्वमतो विष्णु-

---

१ "आदिशब्दादेकनियन्तृत्वमेकगुणसम्बन्धित्वं चक्षुरादिमत्त्वं च" इति तत्वमञ्जरी ।

२ "पीतादयोऽन्यत्र" इति प्र. पाठः ।

३ "तत्सादृश्यं च" इति प्र. पाठः ।

४ "किञ्चिच्छङ्खादीनां चास्त्येव । अतो—" इति प्र. पाठः ।

५ "—भ्रमः क्वापि दृष्टः" इति प्र. पाठः ।

६ "इति तैरुच्यते" इति प्र. पाठः ।

७ "—त्मकत्वे च जगत—" इति प्र. पाठः ।

८ "युगपद् बहुधा दृश्यते भ्रान्तौ । नचा—" इति प्र. पाठः । "एकैव रज्जुः क्रमेण हि भूच्छिद्रबलीवर्दमूत्रितसर्पादिरूपेण बहुधा दृश्यते । नतु युगपदित्यभिप्रायेण युगपत्पदमुपनिबबन्ध" इति तत्वमञ्जरी ।

९ "उपाधिकृत एव भेदो न दृष्टः । किमुत मिथ्योपाधिकृत इत्यर्थः" इति च तत्वमञ्जरी ।

१० "-वादिपक्षेऽपि" इति प्र. पाठः ।

११ "—नात्मकल्पना-" इति प्र. पाठः ।

१२ "तत्सदृशस्यान्यस्य" इति प्र. पाठः ।

१३ "-सादृश्ययुतम्" इति प्र. पाठः ।

बलाश्रयम्" इति ब्रह्मवैवर्त्ते। "नच मायाविना माया दृश्यते विश्वमीश्वरः। सदा पश्यति तेनेदं न मायेत्यवधार्यताम्" इति च। "अपरोक्षविदो[1] मित्थ्यादर्शनं न क्वचिद् भवेत्। [2]सर्वापरोक्षविद् विष्णुर्विश्वदृक् तन्न तन्मृषा" इति च।

यदि चैकमेव ब्रह्मोपाधिभेदात् संसरति मुच्यते च, तदा संसारिणां सर्वदा विद्यमानत्वात् सर्वदा संसार्येव ब्रह्म। अतस्तद्भावोऽपि न मुक्तिः। सर्वदोपाधिसम्बद्धत्वात् तस्य। नच शुद्धस्य नोपाधिसम्बन्ध इति वाच्यम्। उपाधिसम्बद्धस्योपाधि[3]सम्बन्धकल्पनेऽनवस्थाप्रसङ्गात्। नच तेनैव सम्बन्धेन सम्बद्धस्य; आत्माश्रयत्वप्रसङ्गात्[4]।

इतश्च मित्थ्योपाधिर्न्न युज्यते। अज्ञानसिद्धौ मित्थ्योपाधिसिद्धिः, अज्ञानं विना मित्थ्यात्वासिद्धेः; नच मित्थ्योपाधिं विनाऽज्ञानसिद्धिः, मित्थ्योपाधिभिन्नस्यैवाज्ञत्वात्; शुद्धस्याज्ञत्वे[5] मुक्तस्याप्यज्ञत्वप्रसक्तेः; स्वाभाविकत्वात्, सत्यत्वात्, सद्वितीयत्वप्रसक्तेश्च; स्वाभाविकस्या[6]निवृत्त्यङ्गीकारादनिवृत्तिप्रसक्तेश्च; सत्यस्य चानिवृत्तिरिति तत्पक्षः[7]; अतश्चान्योन्याश्रयता।

अज्ञानसिद्धौ मित्थ्योपाधिसिद्धिः, मित्थ्योपाधिसिद्धौ जीवसिद्धिः, जीवसिद्धौ तदाश्रयाज्ञानसिद्धिरिति चक्रकं वा। नच शुद्धमेव भ्रान्त्याऽज्ञमिति युक्तम्। अज्ञानसिद्धौ भ्रमसिद्धिः, तत्सिद्धावज्ञानसिद्धिरित्यन्योन्याश्रयत्वात्।

"अनागता अतीताश्च यावन्तः सहिताः क्षणाः। अतीतानागताश्चैव यावन्तः परमाणवः। ततोऽप्यनन्तगुणिता[8] जीवानां राशयः पृथक्" इति वत्सश्रुतेर्न्न संसारिणां[9] समाप्तिरस्तत्पक्षे। "परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः। सूक्ष्मत्वादीशशक्त्यैव स्थूला अपि हि संस्थिताः" इति[10]। "[11]सहस्रयोजनसभां प्रभावाद् विश्वकर्म्मणः। अनन्ता राशयोऽनन्ताः प्रजानामधिसंस्थिताः" इति स्कान्दे ॥ * ॥

---

१ "अपरोक्षदृशो मित्थ्या–" इति प्र. पाठः।

२ "सामान्यकारेणापरोक्षविदोऽपि भित्थ्यादर्शनं सम्भाव्यत इति तन्निवृत्त्यर्थं सर्वापरोक्षविद् विष्णुरित्युक्तम्" इति प्राचीनटीका। "देशकालस्वरूपव्यवहितं सर्वमप्यपरोक्षं विदन् विष्णुः विश्वं जगत् पश्यति। तस्मात् तद् विश्वं मित्थ्या न" इति तत्वमञ्जरी।

३ "–सम्बन्धस्योपाधि–" इति प्र. पाठः।

४ "–श्रयप्रसङ्गात्" इति प्र. पाठः।

५ "शुद्धस्यैवाज्ञत्वे" इति प्र. पाठः।

६ "–विकस्य चानिवृत्त्य–" इति प्र. पाठः।

७ "–रिति हि तत्पक्षः" इति प्र. पाठः।

८ प्राचीनकोशे "ततोऽप्यनन्तगुणता"(?) इति पठ्यते। स्फुटं तु स्खलनम्।

९ "संसारिणां परिसमाप्ति–" इति प्र. पाठः।

१० अत्र प्र. पाठे "इति" शब्दो न पठ्यते।

११ "यदा विश्वकर्म्माख्यदेवस्य प्रभावात् सहस्रयोजनेत्याद्युक्तमद्भुतं घटते तदा परमाणुप्रदेशेऽपीत्यादि यदुक्तमद्भुतं तदीशशक्त्या घटत इति किं चित्रमित्यर्थः" इति प्राचीनटीका।

नच मिथ्यावस्तुनो दुर्घटत्वमेव भूषणम्। दृष्टस्य वस्तुनो मिथ्यात्वकल्पनस्य दृष्टिसकाशाद् बलवत्प्रमाणयुक्त्यपेक्षत्वात्। तदभावे सत्यत्वं तु दृष्ट्यैव[1] सिद्ध्यति। नह्यन्नादिकं भोग्यं दृष्ट्वा भोक्तुं सत्यत्वे प्रमाणान्तरमपेक्ष्यते[2]। किन्तु नेदमन्नमिति केनचिदुक्ते कथमिदमन्नत्वेन दृश्यमानमन्नं न भवतीति प्रमाणमपेक्षते[3]। नच प्रत्यक्षदृष्टस्य ततो बलवत्प्रत्यक्षमागमं वा विनाऽनुमादिनैव[4] बाधो दृष्टः। दूरस्थवृक्षह्रस्वत्वादौ[5] प्रत्यक्षापटुत्वस्यैव[6] निश्चितत्वाद् युक्त्या दीर्घत्वनिश्चयः। प्रत्यक्षस्य हि दूरे मन्दग्राहित्वं परिमाणादावन्यथात्वं च ततो बलवत्प्रत्यक्षेणैव निश्चितम्।

नच जगत्प्रत्यक्षस्य मिथ्यात्वं केनापि प्रमाणेन निश्चितम्। विशेषतश्च ज्ञानाज्ञानसुखदुःखात्मभेदादिविषयस्यानुभवस्य न मिथ्यात्वं दृष्टम्। अतश्च संसारस्य सत्यत्वात्, [7]सत्यस्य च नित्यत्वाङ्गीकारान्न मोक्षः स्यात्।

अनुभवसिद्धस्य बलवदनुभवं विना युक्तित एव मिथ्यात्वाङ्गीकार आत्मनोऽपि मिथ्यात्वं स्यात्। युक्तिश्च–सर्वस्यान्यस्य मिथ्यात्वाङ्गीकाराद् द्विधा कल्पने कल्पनागौरवमिति। आत्माधिष्ठानस्य[8] भ्रमस्यैवादृष्टेस्तस्याधिष्ठानत्वमपि न युज्यते। दुर्घटत्वस्य च भूषणत्वे दुर्घटमप्यात्ममिथ्यात्वं स्यादेव। प्रतीतेरप्यविद्यात्वाङ्गीकारात्[9], तस्याश्च दुर्घटत्वस्य भूषणत्वात्, सत्यस्य च युक्त्यपेक्षत्वाद् घटादीनां द्रष्टृत्वम्, आत्मनश्च जडत्वम्, द्रष्टृभावेऽपि प्रतीतिः[10], अधिष्ठानं विनैव भ्रम इत्यादि विरुद्धं सर्वमपि स्यात्।

उपाधिभेदाङ्गीकारे हस्तपाद्युपाधिभेदेऽपि तद्गतसुखदुःखादिभोक्तुर्यथा भेदो न प्रतीयते एवमेव शरीरादिभेदेऽपि भोक्तुर्भेदो न दृश्येत। सर्वदेहगतसुखदुःखादिकमेकेनैव भुज्येत च। यथा[11] चैकाङ्गुल्याद्यपगमेऽपि न मुक्तिरेवमेकोपाध्यपगमेऽपि तस्यैवानन्तोपाधिसम्बद्धत्वान्न मुक्तिः स्यात्।

> "उद्यतायुधदोर्दण्डाः पतितस्वशिरोक्षिभिः। पश्यन्तः पातयन्ति स्म कबन्धा[12] अप्यरीन् युधि" इति भारतवचनान्न विश्लेषाद् विशेषः।

किंवा[13], उपाधिरात्मन एकदेशं ग्रसत्युत सर्वमात्मानम्? एकदेशाङ्गीकारे सावयवत्वम्।

---

१ "सत्यत्वं दृष्ट्यैव" इति प्र. पाठः।
२ "–मपेक्षते" इति प्र. पाठः।
३ "प्रमाणान्तरमपेक्षते" इति प्र. पाठः।
४ "–मागमं विनाऽनुमानादिनैव" इति प्र. पाठः।
५ "आदिशब्दाद् दूरस्थवाक्यस्याव्यक्तत्वम्" इति तत्वमञ्जरी।
६ "–त्वस्य निश्चितत्वाद् युक्त्या तत्र दीर्घत्व–" इति प्र. पाठः।
७ "सत्यस्य चानिवृत्त्यङ्गीकारा–" इति प्र. पाठः।
८ "–धिष्ठानभ्रमस्यैवा–" इति प्र. पाठः।
९ "–प्यविद्याकार्यत्वाङ्गीकारात्" इति प्र. पाठः।
१० "द्रष्टुरभावे च प्रतीतिः" इति प्र. पाठः।
११ "भुज्येत। यथा" इति प्र. पाठः।
१२ "कबन्धा–" इति प्र. पाठः।
१३ "किञ्च" इति प्र. पाठः। प्राचीनकोशे पुनरत्र "किंवा" इति पाठः पठ्यते। अन्यत्र सर्वत्रापि कोशेषु किञ्चेत्येव पाठः।

सावयवस्य चानित्यत्वं तैरङ्गीकृतम् । सर्वग्रासे च नोपाधिर्भेदकः स्यात् । उपाधिकृतांशकल्पने तदुपाधिकृतत्व आत्माश्रयत्वम्; उपाध्यन्तरकल्पनेऽनवस्था ।

नचेश्वरस्य सर्वगतत्वादौपाधिको भेदो[1] ब्रह्मणा भवति । नहि देशतः कालतश्चापरिच्छिन्नयोरौपाधिकभेदो दृष्टः । सर्वोपाधिगतत्वाच्चैकस्यैवेश्वरस्य, भेदस्य मित्थ्यात्वाच्च[2], हस्तपादादिभेदेऽपि भोक्तुरेकत्ववत् सर्वसुखदुःखादिभोक्तृत्वमीश्वरस्यैव स्यात् । देशतः कालतोऽपरिच्छिन्नयोरौपाधिकभेदाभावादेव च दुःखिनोऽन्यच्छुद्धं ब्रह्म च न सिद्ध्यति[3] । अतः स्वाभाविकः संसार इत्यनिवृत्तिरेव स्यात् ।

किञ्च, विशिष्टस्य शुद्धस्य वा संसारः? शुद्धस्य संसार इत्युक्ते स्वव्याहतिः । विशिष्टस्येत्युक्ते, विशिष्टोऽन्यः स एव वा? स एव चेदुक्तो दोषः । अन्यश्चेन्नित्योऽनित्यो वा? अनित्यश्चेन्नाश एव तस्य न मोक्षः । नित्यत्वे च भेदस्य सत्यत्वम् । मोक्षेऽपि तस्य भावात् । स्वरूपमात्रस्याभेद उपाधिभिन्न एवेत्यङ्गीकारे स्वरूपमेवोपाधिसम्बद्धमिति न तस्य शुद्धत्वम् । अशुद्धस्वभावस्य[4] च न कदाचिच्छुद्धत्वमिति च तत्पक्षः । उपाधिमित्थ्यात्वाङ्गीकारे चान्योन्याश्रयत्वादयो दोषा[5] उक्ताः ।

नचानादिकर्म्मभेदाद् भेदः । उपाधिभेदसिद्धौ[6] कर्म्मभेदसिद्धिः; तत्सिद्धौ[7] तत्सिद्धिरित्यन्योन्याश्रयत्वात् । अतोऽनन्तदोषदुष्टत्वाद् ग्रन्थबहुत्वं[8] स्यादित्येवोपरम्यते । अतः सर्वप्रमाणविरुद्धत्वान्नाभेदे श्रुतितात्पर्यम् ॥ * ॥

सर्वशब्दावाच्यस्य लक्षणाऽपि न दृष्टेति च न तस्य[9] शास्त्रगम्यत्वम् । अतोऽवाच्यत्वादज्ञेयत्वाच्छून्यमेव तदिति प्राप्तम् । नच स्वेनापि ज्ञेयत्वं तैरुच्यते । कर्त्तृकर्म्मविरोध इति हि वदन्ति[10] । नच स्वरूपमन्यद् वा ज्ञेयं ज्ञातारं च विना ज्ञानं दृष्टम् । अतो ज्ञातृज्ञेयाभावाज्ज्ञानस्यापि शून्यतैव । अतः शून्यवादान्न कश्चिद् विशेषः । [11]नहि ज्ञातृज्ञेयरहितं ज्ञानं क्वापि दृष्टम् । अप्राप्तत्वाच्चेश्वरभेदस्य नाभेदे तात्पर्यं[12] युज्यते ॥ * ॥

"सर्वोत्तमं सर्वदोषव्यपेतं गुणैरशेषैः पूर्णमन्यं समस्तात् । वैलक्षण्याज्ज्ञापयितुं प्रवृत्ताः सर्वे वेदा मुख्यतो नैव चान्यत्" इति महोपनिषदि ।

---

१. "-दौपाधिकभेदो-" इति प्र. पाठः । २ "मित्थ्यात्वात् हस्तपादा–" इति प्र. पाठः ।

३ "कालतश्चापरिच्छिन्नयोरौपचारिकभेदाभावादेव दुःखिनोऽन्यच्छुद्धं ब्रह्म न सिद्ध्यति" इति प्र. पाठः ।

४ "–स्वभावस्य न कदाचि–" इति प्र. पाठः । ५ "–त्वादिदोषा–" इति प्र. पाठः ।

६ "औपाधिकभेदसिद्धौ" इति प्र. पाठः । ७ "तत्सिद्धौ च तत्सिद्धि–" इति प्र. पाठः ।

८ "तर्ह्यनन्तानां दोषाणां स्पष्टं प्रतिपादनं न क्रियत इति नाऽऽशङ्कनीयम् । अल्पायुरनल्पश्रोतव्यवद्भिरधिकारिभिरभ्यसनीयस्य ग्रन्थस्य बहुत्वं स्यात् तर्हि, इति हेतोरेव ह्युपरम्यते" इति तत्वमञ्जरी ।

९ "दृष्टेति न तस्य" इति प्र. पाठः । १० "इति हि ते वदन्ति" इति प्र. पाठः ।

११ "नच ज्ञातृ-" इति प्र. पाठः । १२ "नाभेदे श्रुतितात्पर्यम्" इति प्र. पाठः ।

**अतः सदागमैरेव सर्वस्माद् 'विभिन्नत्वेन सर्वस्माद् विशिष्टत्वेन च ज्ञेयो[2] भगवान् नारायण इति सिद्धम्[3] ॥ * ॥ * ॥ * ॥**

---

**ॐ ॥ "ब्रह्मा शिवः सुराद्याश्च शरीरक्षरणात् क्षराः । लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः । स्वातन्त्र्यशक्तिविज्ञानसुखाद्यैरखिलैर्गुणैः । निस्सीमत्वेन ते सर्वे तद्वशाः सर्वदैव च[4] । सर्गस्थितिक्षययतिप्रकाशावृति[5]बन्धनम् । सर्वक्षराणामेकः स कुर्यात् सात्विकमोक्षणम् । सर्गस्थितियतिज्योतिर्नित्यानन्दप्रदोऽक्षरे । चेष्टाप्रदश्च सर्वेषामेक एव परो हरिः । तस्य नान्योऽस्ति सर्गादिकर्ता निर्दोषकश्च सः" इति परमश्रुतिः । "ब्रह्मशेषसुपर्णेशशक्रसूर्यगुहादयः । सर्वे क्षरा अक्षरा तु श्रीरेका तत्परो हरिः" इति स्कान्दे । "यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् । 'अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ । अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश । अहं सुवे पितरमस्य मूर्द्धन् मम योनिरप्स्वऽन्तः समुद्रे[6]", "यमन्तः समुद्रे कवयोऽवयन्ति '[8]तदक्षरे परमे प्रजाः । यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम् । यदोषधीभिः पुरुषान्**

---

१ "सर्वस्माद् भिन्नत्वेन" इति प्र. पाठः प्रामादिकः ।

२ "–त्वेन च विज्ञेयो–" इति प्र. पाठः प्रमाद एव ।

३ इतः परं प्र. पाठे–"इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्विष्णुतत्वविनिर्णये प्रथमः परिच्छेदः" इति समाप्तिवाक्यं पठ्यते । न क्वापि प्राचीनकोशग्रन्थेषु । तत्वमञ्जर्यां तु "प्रथमं विशेषणम्" इत्यस्ति । युक्तं चैतत् । "विशेषणानि यानीह" इति प्रस्तुतत्वात् ।

४ "सर्वदैवच इति चशब्दात् सर्वत्र च" इति तत्वमञ्जरी ।

५"–प्रकाशावृत्ति–" इति प्र. पाठः प्रामादिकः । आवृतिरज्ञानम् ।

६ "रुद्राय हन्तवे धनुरातनोमि, रुद्रं हन्तुमित्यर्थः । "अहये हन्तवा उ" इतिवत् । शरुः संहारशीलः । शॄ हिंसायामिति धातोः । उ एव" इति तत्वमञ्जरी । "समदं सततप्रमदं मोक्षसुखम् । अहमस्य पितरं ब्रह्माणं मूर्ध्नि सुषुम्नया सुषुवे" इति च ।

७ "शरवे हिंसकाय ब्रह्मद्विषे चतुर्मुखस्य पञ्चममुखच्छेत्त्रे रुद्राय हन्तवे रुद्रस्य हननाय धनुरातनोमि विस्तारयामि । अस्य जगतः पितरं ब्रह्माणं मूर्द्धनि सीमन्तप्रदेशे सुवे जनयामि । मम माहात्म्यकारणभूतः समुद्रे अप्स्वन्तर्नारायण इत्यर्थः" इति प्राचीनटीका ।

८ "यदक्षरे" इति प्र. पाठः प्रामादिकः । यद्यपि "यदक्षरे" इत्यपि क्वचित् श्रुतिपाठः । तथाऽपि "त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि" इत्यादिवत् स पाठः प्रमादायातः । "तदक्षरे" इत्येव प्राचीनः श्रुतिपाठः । तथाहि पद्मनाभतीर्था अपि व्याचख्युः—"यं पुरुषं समुद्रे अन्तः कवयोऽवयन्ति अवगच्छन्ति, तदक्षरे तस्मिन्नक्षरे विनाशवर्जिते परमे प्रजाः तदाधारास्तिष्ठन्ति । जगतः प्रसूती जगज्जननी यतः प्रसूता प्रादुर्भूता सती तोयेन इतरमि–

पशूंश्च विवेश भूतानि चराचराणि । अतः परं नान्यदणीयसं हि परात् परं यन्महतो महान्तम् । यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् । तदेवर्त्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्", "[1]अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः । विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्त्तिरश्विनाविरावत्", "चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च प्राणाद् वायुरजायत", "एको नारायण आसीन्न ब्रह्मा नेशानो नाग्नीषोमौ नेमे द्यावापृथिवी" "एको नारायण आसीन्न ब्रह्मा नच शङ्करः स मुनिर्भूत्वा समाचिन्तयत्[2] तत एते व्यजायन्त[3]", "वासुदेवो वा इदमग्र आसीन्न ब्रह्मा नच शङ्करः । नेन्द्रसूर्यौ नच गुहो न सोमो न विनायकः" इत्यादिश्रुतिभ्यश्च ।

"यस्मात् परं नापरमस्ति किञ्चित्" इत्यत्रापि अपरमस्तीत्येवार्त्थः । अन्यथा "तेनेदं पूर्णं ततो यदुत्तरतरं तदरूपमनामयम्" इति वाक्यशेषविरोधात् । तेनेदमित्युक्तमेव तत इति परामृश्यते । अन्यथा "यस्मात् परं न" [4]इत्युक्तविरोधात् ।

---

श्रितेन जीवान् देहवत्त्वेन व्यससर्ज भूम्यां तत्तल्लोके सृष्टवती । यदोषधीभिः सह पुरुषान् जीवान् प्रविवेश अतः अन्यदतः परमधिकं न भवति । अणीयसं सूक्ष्मात् सूक्ष्मम् । यत् परात्परं यच्च महतो महत्, यदेकं स्वगतभेदवर्जितम्, अनन्तरूपमपि स्वप्रसादं विना सम्यङ् न दृश्यत इत्यव्यक्तम् । सर्वत्र प्रवेशनाद् विश्वनामकम् । तमसः परस्तादप्राकृतदेहम् । यत् समुद्रशाय्येवम्भूतम् । तात्पर्यावगतत्वादृतम् । तदेव साधुरूपत्वात् सत्यम् । तदेव कवीनामभिमतं परमं ब्रह्मेत्यर्थः" इति । पण्डिताचार्या अपि "तदक्षरे तस्मिन्नक्षरे । यतः पराधीनविशेषं प्राप्ता श्रीः । तोयेन कर्म्मणा जीवान् भूम्यां प्रकृत्यां व्यससर्ज व्याससर्ज । छन्दोभङ्गपरिहारार्त्थं ह्रस्वत्वम् । "इन्द्रावरुण वामहम्" इतिवत् । यत् परमाक्षरं नियमनार्त्थं चराचराणि भूतानि विवेश । पुरुषान् पशूंश्च ओषधीभिः व्रीह्याद्योषध्यन्तर्यामिरूपैश्च विवेश । अतस्तत्र विशेषसन्निधानम् । अतोऽन्यत् परं विशिष्टं नास्ति । अथवा अन्यत् जगत् अतः परं विशिष्टं न । किन्तु एतत् परात्परमक्षरं प्रति य[ा] गच्छत् प्रळये मुक्तौ च । यदव्यक्तं सूक्ष्मं ब्रह्मैकमपि विशेषेणानन्तरूपम् । विश्वं पूर्णम् । तमसः परस्तात् प्रकृतेर्बहिः । प्रकृतिकार्येभ्यो जन्मादिभ्यो बाह्यमित्यर्थः । ऋतं शश्वदेकप्रकारम् । सत्यं साधुगुणपूर्णम्" इति ।

१ "अस्य विष्णोरेषस्य मीळ्हुषो देवस्य हविर्भिः मनसि प्रभरणे हि, वयाः सन् रुद्रो रुद्रियं महित्वं लेभे । अश्विनौ युवामप्यन्नवर्तीं वृत्तिं हविर्भिः प्रभरणे च विष्णोः सकाशादेवायासिष्टम् । मीढ्वान् समर्त्थः । वयाः बन्धकः । वय बन्धन इति धातोः । विदे लेभे च । विद लाभ इति धातोः । हविर्भिः प्रभरणे, कर्म्मणा ध्यानेन च प्रभृथं प्रभरणमिति" इति तत्वमञ्जरी । "देवस्य मीळ्हुषो वीर्यवतो विष्णोः हविर्भिः प्रभृथे ध्यानयोगे सति वयाः कालरूपो रुद्रो रुद्रियं महित्वं विदे" इति प्राचीनटीका ।

२ "समचिन्तयन्" इति प्र. पाठः ।

३ इतः परं प्र. पाठे "विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्रा इति" इति वाक्यमधिकं पठ्यते । "विश्वो वायुः" इति तत्वमञ्जरी ।

४ "इत्युक्ति–" इति प्र. पाठः ।

"नामानि सर्वाणि यमा विशन्ति तं वै विष्णुं परममुदाहरन्ति", "[१]अस्यैव सर्वनामानि व्यतिरिक्तस्य सर्वतः। यः स्वतन्त्रः सदैवैकः स विष्णुः परमो मतः" इत्यादिश्रुतिभ्योऽन्यनामान्यप्यस्यैवेति[२] नान्येषां सर्वेश्वरत्वादिकमुच्यते।

सर्ववेदेष्वप्यस्य दोषावचनात्[३], आदावभावावचनाच्च[४]; तद्वचनाच्चान्येषां सर्वेषां वेदेषु[५]; तेषां सर्वनामत्वानुक्तेश्च।

"उत्पत्तिर्वासुदेवस्य प्रादुर्भावो नचापरः। देहोत्पत्तिस्तदन्येषां ब्रह्मादीनां तदीरणात्। देहोऽनादिर्हरेर्नित्यो ब्रह्मादीनामनित्यकाः। मुख्योत्पत्तिस्ततस्तेषामाविर्भावो[६] हरेर्जनिः" इति परमश्रुतेश्च[७] ॥ * ॥ * ॥ * ॥

---

ॐ॥ "वर्जितः सर्वदोषैर्यो गुणसर्वस्वमूर्त्तिमान्। स्वतन्त्रो यद्वशाः सर्वे स विष्णुः परमो मतः" इति महोपनिषदि[८]। "[९]नित्यपूर्णोऽखिलगुणो विदोषः सर्वदैव य.। स्वतन्त्रः स परो विष्णुर्जन्ममृत्यादिवर्जितः। [१०]श्रीनारद उवाच। निर्दोषश्चेत् कथं विष्णुर्मानुषेषूदपद्यत। चिन्ताश्रमव्रणाज्ञानदुःखयुग् दृश्यते कथम्। एष मे संशयो ब्रह्मन् हृदि शल्य इवार्पितः। अनुद्धार्योऽपरैर्मर्त्यैः सूक्तिशक्त्या तमुद्धर। ब्रह्मोवाच। स्त्रीपुम्मलाभियोगात्मदेहो विष्णुर्न[११] जायते। किन्तु निर्दोषचैतन्यसुखां नित्यां स्वकां तनुम्। प्रकाशयति सैवेयं जनिर्विष्णोर्नचापरा। तथाऽप्यसुरमोहाय [१२]परेषां च क्वचित्क्वचित्। दुःखाज्ञानश्रमादीन् स दर्शयेच्छुद्धसद्गुणः। क्व[१३] व्रणादि क्व चाज्ञानं स्वतन्त्राचिन्त्यसद्गुणे। दौर्लभ्यायैव मोक्षस्य दर्शयेत् तान्यजो हरिः।

---

१ अस्यैव" इति प्र. पाठः।
२ "–नामान्यस्यैवेति" इति प्र. पाठः।
३ "–प्यस्यादोषवचनात्" इति प्र. पाठः।
४ "आदावभाववचनाच्च" इति मुद्रितः प्र. पाठः प्रामादिकः।
५ "वेदेषु सर्वेषु। तेषाम्–" इति प्र. पाठः।
६ "–त्पत्तिस्तदन्येषां प्रादुर्भावो" इति प्र. पाठः।
७ इतः परं प्र. पाठे–"इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्विष्णुतत्वविनिर्णये द्वितीयः परिच्छेदः" इति पठ्यते। "द्वितीयं विशेषणम्" इति तत्वमञ्जर्याम्।
८ "परमोपनिषदि" इति प्र. पाठः।
९ "नित्यपूर्णाऽखिलगुणो निर्दोषः सर्वदैव यः। यः स्वतन्त्रः परो–" इति प्र. पाठः।
१० "–वर्जितः। नारद उवाच" इति प्र. पाठः।
११ "योगात्मा देहो विष्णोर्न" इति प्र. पाठः।
१२ "परेषां स्वयोग्यतातिरिक्तशुभवतां सतां च मोहाय" इति तत्वमञ्जरी। "परेषां सुराणाम्। ज्ञानित्वादसुरवन्न, किन्तु क्वचित्क्वचिदेव" इति प्राचीनटीका।
१३ "क्व व्रणादि" इति प्र. पाठः। क्वचित् कोशेषु च तथा।

मित्थ्यादर्शनदोषेण तेन मुक्तिं न याति च । तमो याति च[1] तेनैव तस्माद् दोषविवर्ज्जितम् । प्रादुर्भावगतं चैव जानीयाद् विष्णुमञ्जसा" इति ब्रह्माण्डे ॥ * ॥
"गुणक्रियादयो विष्णोः स्वरूपं नान्यदिष्यते । अतो मिथोऽपि भेदो न तेषां कश्चित् कदाचन । स्वरूपेऽपि विशेषोऽस्ति स्वरूपत्ववदेव तु । भेदाभावेऽपि तेनैव व्यवहारश्च वर्त्तते" इति महोपनिषदि[2] । "अभिन्नत्वमभेदश्च यथा भेदविवर्ज्जितम् । व्यवहार्यं पृथक् च स्यादेवं सर्वे गुणा हरेः । अभेदाभिन्नयोर्भेदो यदिवा भेदभिन्नयोः । अनवस्थितिरेव स्यान्न विशेषणतामतिः । मूलसम्बन्धमज्ञात्वा तस्मादेकमनन्तधा । व्यवहार्यं विशेषेण दुस्तर्क्यबलतो[3] हरेः । विशेषोऽपि स्वरूपं स स्वनिर्वाहकताऽस्य च" इति ब्रह्मतर्क्के ॥ * ॥

"एकमेवाद्वितीयम्[4]", "नेह नानाऽस्ति किञ्चन[5]", मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति[6]", "यथोदकं दुर्ग्गे वृष्टं पर्वतेषु विधावति । एवं धर्म्मान् पृथक् पश्यंस्तानेवानु विधावति[7]" इत्यादिश्रुतेश्च ॥ * ॥ "देशः सर्वत्र पुरुषः स्वतन्त्रः कालनित्यता । इत्यादिषु स्वसम्बन्धो यथैवं[8] गुणरूपिणः । गुणित्वं गुणभोक्तृत्वं स्याद् विष्णोस्तच्च स स्वयम्" इति ब्रह्मतर्क्के । "विष्णुं सर्वगुणैः पूर्ण्णं ज्ञात्वा संसारवर्ज्जितः । निर्दुःखानन्दभुङ् नित्यं तत्समीपे स मोदते । मुक्तानां चाऽश्रयो विष्णुरधिकोऽधिपतिस्तथा । तद्वशा एव ते सर्वे सर्वदैव स ईश्वरः" इति परमश्रुतिः ।
"अमृतस्यैष सेतुः", "सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा विपश्चिता" इत्यादि च ।
"नृपाद्याः शतधृत्यन्ता मुक्तिगा उत्तरोत्तरम् । गुणैः सर्वैः शतगुणा मोदन्त इति हि श्रुतिः" इति पाद्मे ॥

अतो निश्शेषदोषवर्ज्जितपूर्ण्णानन्तगुणो[9] नारायण इति सिद्धम् ॥ * ॥ * ॥ * ॥

---

१ "न यान्ति च । तमो यान्ति च" इति प्र. पाठः ।

२ "–रश्च सर्वत इति परमोपनिषदि" इति प्र. पाठः । इयं महोपनिषदिति तत्वमञ्जर्यां च स्थितम् ।

३ "दुस्तर्कबलतो–" इति प्र. पाठः ।

४ "एकमेवान्तर्भेदरहितम् । स्वगुणावतारादीनां भेदाभावेन । अद्वितीयं समाधिकरहितम्" इति तत्वमञ्जरी

५ "इह ब्रह्मणि किञ्चन गुणादिकं नाना नास्ति । भिन्नत्वेन नास्तीत्यर्थः" इति च ।

६ "य इह नाना भेदम्, इव भेदाभेदं वा पश्यति स मृत्योर्म्मृत्युमाप्नोति । मृत्युशब्दश्चाधिकं दुःखं लक्षयति" इति च । "मृत्योर्म्मृत्युं मरणानन्तरमन्धतामिस्रं प्राप्नोति" इति प्राचीनटीका ।

७ "यथा पर्वतेषु दुर्गस्थाने शिलाशिखरादौ वृष्टमुदकं विधावति, एवं ब्रह्मधर्म्मान् ब्रह्मणः परस्परं वा पृथक् पश्यन् तान् दृष्टानन्वेव विधावति । अन्यथादर्शनानुकूल्येनैव सुखस्थितिविपरीतत्वेन धावति" इति तत्वमञ्जरी

८ "–सम्बन्धाद् यथैव गुण–" इति प्र. पाठः ।

९ "वर्ज्जितः पूर्णोऽनन्तगुणो–" इति प्र. पाठः । "वर्ज्जितः पूर्णानन्तगुणो–" इति क्वचित् कोशे ।

"यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद् [1]दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं [2]पृक्षो द्वितीयं वपु-
[3]र्म्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥ * ॥

स्वतन्त्रायाखिलेशाय निर्द्दोषगुणरूपिणे ।
प्रेयसे मे सुपूर्ण्णाय नमो नारायणाय ते ॥ * ॥

इति श्रीमदानन्दतीर्थभगवत्पादकृतः
[4]विष्णुतत्वनिर्ण्णयः समाप्तः[5]

---

१ "दर्शतं दर्शनरूपम्, ज्ञानरूपम्, तृतीयात् तृतीयस्यापि अतिशयार्थत्वात्" इत्यर्थान्तरं तत्वमञ्जर्याम् ।

२ "पृतना सम्पृक्तत्वात् पृगित्युच्यते । तां क्षपयतीति पृक्षः । भीमसेन इत्यर्थः" इति तत्वमञ्जरी ।

३ "मधुशब्द आनन्दवाची । 'कामानलं मधुलवैः शमयन् दुरापैः' इत्यादौ दृष्टत्वात् । अकारस्तीर्थवाची । पापप्रतिषेधरूपत्वात् तीर्थस्य । एवं मद्ध्व आनन्दतीर्थः । 'मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम्' इति वचनाद्वा" इति तत्वमञ्जरी ।

४ इममेव च "विष्णुतत्वविनिर्णयः" इति च व्यपदिशन्ति ।

५ ग्रन्थान्ते च श्रीहृषीकेशतीर्थैः—"**रूपविज्ञानवेदनासञ्ज्ञासंस्काराः पञ्च स्कन्धाः**" इत्येकं वाक्यं लिखितं दृश्यते । पञ्चस्कन्धेभ्योऽन्यत्वादिति स्ववचनप्रवचनवेलायामाचार्यैरेव निर्द्दिष्टमिति तच्छिष्यैरत्र निक्षिप्तं भवेत् । इदमेव च वाक्यं श्रीपद्मनाभतीर्थकृतायां टीकायामपि पठ्यमानं दृश्यते ।

# वादः

ॐ ॥ सर्वत्राखिलसच्छक्तिः स्वतन्त्रोऽशेषदर्शनः ।
नित्याताद्दृशचिच्चेत्ययन्तेष्टो नो रमापतिः ॥ * ॥

विमतो भिन्नः, मुक्तत्वात्; यदित्थं तत् तथा, यथा सम्प्रतिपन्नः । नच भेदे विकल्पो युज्यते; अनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वादेव; शशविषाणं गोविषाणं वोच्यत इतिवत् । नचानिर्वचनीये किञ्चिन्मानम्; मित्थ्याशब्दोऽनिर्वचनीयं वदतीत्यत्र च । अनुमानस्य चाप्रसिद्धविशेषणः पक्षः । नच धूमत्ववन्मित्थ्यात्वमित्युभयसम्प्रतिपन्नं सामान्यमस्ति । नहि बाष्प आरोपित[1]धूमेन धूमवत्त्वं व्यभिचरति ।

नच भावाभावविलक्षणं क्वचिदागमो वक्ति । "[2]नासदासीत्" इत्यत्र पारिशेष्येणानिर्वचनीयत्वाङ्गीकारे "आनीदवातं स्वधया तदेकम्" इति तदानीं परिशिष्टत्वाद् ब्रह्मण एवानिर्वाच्यत्वं[3] स्यात् ।

"मूर्त्तं सदिति सम्प्रोक्तममूर्त्तमसदुच्यते । मूर्त्तामूर्त्तेतरद् ब्रह्म न सत् तन्नासदुच्यते" इति च पैङ्गि[4]श्रुतिः । "यदन्यद् वायोश्चान्तरिक्षाच्चैतत् सत्" इति च माद्ध्यन्दिन-[5]श्रुतिः । "अद्भुतत्वादनिर्वाच्यं ब्रह्म चिच्चेत्यमेव च । अचिन्त्यं तत एवैतदतर्क्यांज्ञेयमेव च । ऋ गताविति धातोस्तु पूर्वावगतवत् सदा । स्थितेर्ब्रह्मर्त्तमित्युक्तमनृतं परिणामतः । प्रकृतिप्राकृतं प्रोक्तमसत् तदशुभत्वतः । असतां बुद्धिगत्वात् तदसत्य[6]मिति चोच्यते । नियमेन बहिश्चित्तास्ते[ऽ]सन्तो[ऽ]ब्रह्मणि स्थिताः । विश्वं सत्यं वशे विष्णोर्न्नित्यमेव प्रवाहतः । न क्वाप्यनीदृशं विश्वं तत्तत्कालानुसारतः । अस-

---

१ "बाष्पारोपित-" इति प्र. पाठः ।
२ "नासदासीन्नो सदासीत् तदानीं नाऽसीद् रजो नो व्योमापरो यदित्यत्र च परिशेषेणा-" इति प्र. पाठः ।
३ "एवानिर्वचनीयत्वम्" इति प्र. पाठः ।
४ "इति पैङ्गि-" इति प्र. पाठः ।
५ "इति माद्धयन्दिन-" इति प्र. पाठः ।
६ बुद्धिगम्यत्वादसत्य-" इति प्र. पाठः ।

त्यमप्रतिष्ठं ते[1] जगदाहुरनीश्वरम् । त आसुराः स्वयं नष्टा जगतः क्षयकारिणः" इत्यादि व्याससमृतौ । "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् । अपरस्परसम्भूतं किमन्यत् कामहैतुकम् । एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः । प्रभवन्त्युग्र-कर्म्माणः क्षयाय जगतोऽहिताः" इत्यादि च गीतासु ।

"विश्वं सत्यं मघवाना युवोरिदापश्चन प्र मिनन्ति व्रतं वाम्", "प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम्", "सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये", "कविर्म्मनीषी परिभूः स्वयम्भूर्याथातत्थ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः" इत्यादिश्रुतिश्च[2] ।

नचार्त्थापत्त्याऽनिर्वचनीयसिद्धिः । असतः प्रतीतिं विनाऽसद्वैलक्षण्यज्ञानानुपपत्तेः । नच बाद्धयं जगदित्यत्र किञ्चिन्मानम् । बाद्धयत्वमपि हि तेषां मित्थ्या । तस्य मित्थ्यात्वेऽबाद्धयत्वमेव सत्यं स्यात् ।

सद्विलक्षणत्वं च सज्जातिविलक्षणत्वं सन्मात्रविलक्षणत्वं वा? जात्यङ्गीकारे सद्बहुत्वम् । सन्मात्रवैलक्षण्ये [3]सिद्धसाधनता । ब्रह्मवैलक्षण्याङ्गीकरात् ।

नच कयाऽपि युक्त्या मानेन वा भेदनिराकरणं भवति । अङ्गीक्रियमाणत्वात् । अनिर्वचनीयासिद्धेश्च सद्विलक्षणत्वमसद्विलक्षणत्वं च मित्थ्येत्यविलक्षणत्वं सत्यमेव स्यात्[4] । एवमेव हेत्वादिष्वपि विकल्पो निराकरणीयः । दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः । आत्मनोऽपि दृश्यत्वादनैकान्तिकता च । नचऽऽत्मनो दृक्कर्म्मत्वं विना तज्ज्ञानत्वं तदज्ञाननिवृत्तिश्च भवति[5] । नच तदाकारम्, अतद्विषयत्वादेव । तद्विषयत्वमेव हि तदाकारत्वम् । नहि ज्ञानज्ञेययोरेकाकारता । नह्यज्ञानस्य घटाश्रयत्वं ब्रह्माश्रयत्वं वाऽस्ति । पुञ्जतमेव हि तमो ज्ञानेन निवर्त्त्यते । विषयाश्रयं चेदज्ञानं निवर्त्तते तर्ह्येकेन ज्ञातस्य घटस्यान्यैरज्ञातत्वं न स्यात् । अतद्विषयज्ञानेन तदज्ञाननिवृत्तौ घटज्ञानेनापि निवर्त्तेत । अविषयत्वादेव तस्य ज्ञानत्वं च न स्याद् घटवत् ॥

जडत्वं चाप्रमातृत्वमेव । नच प्रमातृत्वमात्मनस्तैरङ्गीक्रियते । अतस्तदप्यनैकान्तिकम् । मित्थ्याप्रमातृत्वं चानिर्वचनीयनिरासादेव निरस्तम् । यदि जडत्वं नामाप्रकाशत्वम्, तदाऽप्यात्मनः स्वविषयत्वाभावात्[6] परविषयत्वाभावाच्चानैकान्तिकमेव । स्वविषयत्वं हि कर्त्तृकर्म्मविरोधात्

---

१ "असत्यमप्रतिष्ठं ये" इति प्र. पाठः । यद्यपि त इत्युत्तरार्द्धे श्रवणात् य इत्येवोचितं भाति । तथाऽपि त आसुरा इति वक्ष्यमाणस्याऽसुरत्वस्य प्रमाणतया पूर्वार्द्धे भगवद्गीतावचनमविकलं समुद्ध्रियत इति सङ्गतम् । "नियमेन बहिश्चित्तास्तेऽसन्तः" इत्युक्तं च परामृश्यते-असत्यमप्रतिष्ठं तेऽसन्त आहुरिति । असतां तेषामासुरत्वं चोत्तरत्रोच्यते ।

२ "-श्रुतिभ्यश्च" इति प्र. पाठः ।

३ "सन्मात्रविलक्षणत्वं चेत् सिद्ध-" इति प्र. पाठः ।

४ "-लक्षणत्वमेव सत्यं स्यात्" इति प्र. पाठः ।

५ -"निवृत्तिश्च तेन भवति" इति प्र. पाठः ।

६ "स्वविषयप्रकाशत्वाभावात्, परविषयप्रकाशत्वाभावाच्चानै-" इति प्र. पाठः ।

तैर्नाङ्गीक्रियते । मिथ्यारूपं[1] [पर[2]]विषयत्वं चानिर्वचनीयनिरासादेव निरस्तम् । विषयवर्जितः प्रकाशोऽपि न भवति[3], घटवत् । तत्प्रमाणाभावाच्च[4] ॥

देशतः कालतः परिच्छिन्नत्वं प्रकृतिकालादिष्वभावाद् भागासिद्धम् । वस्तुतः परिच्छिन्नत्वमात्मनोऽपि भेदाङ्गीकारादनैकान्तिकम् ॥

प्रत्यक्षबाधितं च जगन्मिथ्यात्वम् । सदिति प्रतीयमानत्वात् । नच प्रत्यक्षसिद्धमन्येन केनापि बाध्यं दृष्टम् । चन्द्रप्रादेशत्वादिविषयत्वं तु[5] दूरस्थत्वादिदोषयुक्तत्वादपटु । नच जगत्प्रत्यक्षस्यापटुत्वे किञ्चिन्मानम् । नच जगतोऽज्ञानजन्यत्वे किञ्चिन्मानम् ।

"नच मायाविना माया दृश्यते विश्वमीश्वरः । सदा पश्यति तेनेदं न मायेत्यवधार्यताम् । अपरोक्षदृशो[6] मिथ्यादर्शनं न क्वचिद् भवेत् । सर्वापरोक्षविद् विष्णुर्विश्वदृक् तच्च तन्मृषा" इति च ब्रह्माण्डे[7] । ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि । एक आत्मा परब्रह्मभावो मुक्तिरिति ह्यपि । एवमादि विरुद्धानि वचनान्यथ युक्तयः । प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः । वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना । इतराणि विरुद्धानि प्रलम्भभ्रमजान्यपि" इति च व्यासस्मृतिः[8] । "नासतोऽदृष्टत्वात्", "नाभाव उपलब्धेः । वैधर्म्याच्च न स्वप्नादिवत्" इत्यादिभगवद्वचनेन निरस्ताः[9] ।

नच शून्यवादिसकाशाद्[10] वैलक्षण्यं मायावादिनः । व्यावहारिकसत्त्वस्य तेनाप्यङ्गीक्रियमाणत्वात्—

"सत्यं तु द्विविधं प्रोक्तं सांवृतं पारमार्थिकम् । सांवृतं "व्यवहार्यं स्यान्निवृत्तौ पारमार्थिकम् । विचार्यमाणे नो सत्त्वं सत्त्वं चापि प्रतीयते । यस्य तत् सांवृतं ज्ञेयं व्यवहारपदं च यत्" इत्यादिना ।

नच निर्विशेषब्रह्मवादिनः शून्यात् कश्चिद् विशेषस्तस्य—

"निर्विशेषं स्वयम्भातं" निर्लिङ्गमजरामरम् । शून्यं तत्वमविज्ञेयं मनोवाचामगोचरम् । जाड्यसंवृतिदुःखान्तपूर्वदोषविरोधि यत् । नित्यभावनया भातं तद्भावं

---

१ "मिथ्याभूतम्" इति प्र. पाठः ।

२ मूलकोशे 'पर–' इति न पठ्यते । अन्यत्र तु पठ्यते ।

३ "प्रकाश एव न भवति" इति प्र. पाठः ।

४ "तत्प्रमाणाभावात्" इति चकाररहितः प्र. पाठः ।

५ "–विषयं तु" इति प्र. पाठः ।

६ तत्वनिर्णये तु "अपरोक्षविदो–" इत्यादि पठ्यते । तद्वचनं ब्रह्मवैवर्त्तगतम्, इदं तु ब्रह्माण्डगतमित्यविरोधः ।

७ "इति ब्रह्माण्डे" इति प्र. पाठः ।

८ "इति व्यासस्मृतिः" इति प्र. पाठः ।

९ "भगवद्वचनेनापि निरस्ताः" इति प्र. पाठः ।

१० "शून्यवादिनः सकाशात्" इति प्र. पाठः ।

११ "व्यावहार्यम्" इति प्र. पाठः ।

१२ "स्वयम्भातमित्यपरप्रकाश्यम् । नतु स्वतःसंवेद्यम् । निर्विशेषत्वात्" इति प्राचीनटीका ।

योगिनं नयेत् । भावार्थप्रतियोगित्वं भावत्वं वा न तत्वतः । विश्वाकारं च संवृत्या यस्य तत् तत्वमक्षयम्[1]" इत्यादि[2] तद्वचः। "अनृतजडविरोधिरूपमन्तत्रयमलबन्धनदुःखताविरुद्धम्" इति च मायावादी ।

नास्य सत्त्वमसत्त्वं वा न दोषो गुण एव वा । हेयोपादेयरहितं तच्छून्यं पदमक्षयम्" इति शून्यवादी ।

सत्त्वादयो धर्म्माः परमार्थतो मायावादिनाऽपि नाङ्गीक्रियन्ते । सर्वविशेषविनिर्म्मुक्तत्वाङ्गीकारात् ।

"अवाच्यं सर्वशब्दैस्तल्लक्ष्यते चाखिलैः पदैः। अज्ञेयं ज्ञानलक्ष्यं च तच्छून्यं पदमक्षयम्" इति हि शून्यवादी[3] ।

नचाखण्डत्वेन कश्चिद् विषेशः—

"यदखण्डं पदं लक्ष्यं सर्वैरपि विशेषणैः। सर्वैर्विशेषणैर्म्मुक्तं तच्छून्यं पदमक्षयम्" इति च शून्यवादी ।

एवमेव हि माया[4]वादिराद्धान्तः । नच मायावादिनो भावत्वं नाम धर्म्मः । नच शून्यवादिनः शून्यत्वं नाम धर्म्मः ।

"मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे । यदासीत् तत एवाऽद्यः स्वयम्भूः समभूदजः", "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः" इति भगवद्राद्धान्तः। "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादि च श्रुतिः[5] ॥ * ॥

'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादिषु प्रकृष्टप्रकाशत्वादिविशेषणानि[6] सन्त्येवेति न तत्साम्यम्। अनित्यदेशकालसम्बन्धित्वस्य सत्यत्वान्न 'सोऽयं देवदत्तः' [7]इत्याद्युपमा। चन्द्रदेवदत्तादिस्वरूपमात्रस्य सिद्धत्वान्न स्वरूपमात्रे प्रश्नः। नक्षत्रादिव्यतिरेकस्यापि[8] सिद्धत्वान्न व्यतिरेकमात्रे। अन्यथा प्रश्नस्यैवासम्भवात् । अतः कैर्विशेषणैर्विशिष्ट इति प्रश्ने प्रकृष्टप्रकाशतद्देशकालादिविशिष्ट[9] इति विविष्ट एव वाक्यार्थः। अङ्गीक्रियमाणत्वाद् विशिष्टादेः, अनिर्वचनीयासम्भवाच्च[10] सत्यत्वं च सिद्धम् ।

---

१ "तत् पदमक्षयम्" इति प्र. पाठः । २ "इत्यादि च" इति क्वचित् ।
३ "इति शून्यवादी" इति प्र. पाठः । ४ "एवमेव माया–" इति प्र. पाठः ।
५ "इत्यादि श्रुतिः" इति प्र. पाठः । ६ "प्रकृष्टत्वादिविशेषणानि" इति प्र. पाठः ।
७ "इत्याद्युपमा च । देवदत्तादि–" इति प्र. पाठः । ८ "–व्यतिरेकमात्रस्यापि" इति प्र. पाठः ।
९ "–कालादिविशिष्ट एव वाक्यार्थः" इति प्र. पाठः । १० "अनिर्वचनीयाभावाच्च" इति प्र. पाठः

दृष्टस्य वस्तुनो बलवद्दृष्टिं विना नान्यद् बाधकमिति दुर्घटत्वे वा सुघटत्वे[१] वा नानिर्वचनीयसिद्धिः। सर्ववैलक्षण्याद्[२] दुर्घटमपि ब्रह्म प्रमाणादङ्गीक्रियत एव। जगतो भिन्नमभिन्नं वेत्यादिविकल्पस्तत्रापि युज्यते। भिन्नं चेद् भेदादिविशिष्टाच्छुद्धं भिन्नमभिन्नं वेत्याद्यनवस्था। अभिन्नं चेन्मिथ्यारूपेण जगता ब्रह्मापि मिथ्यैव स्यात्। भिन्नाभिन्नं चेद् दोषद्वयमपि। उभयविलक्षणं चेदनिर्वचनीयत्वं ब्रह्मण एवाऽपतितम्। यद्येवमपि नानिर्वचनीयत्वं ब्रह्मणः, तर्हि जगतोऽपि न स्यात्।

"विश्वं सत्यम्—" इत्यादि वचनं तत्राप्युक्तम्[३]। "न सत् तन्नासदुच्यते", "असद् वा इदमग्र आसीत्", "नासदासीन्नो सदासीत् तदानीम्" इत्यादि ब्रह्मणोऽपि[४]।

नहि दृष्टेर्बलवत् किञ्चित् प्रमाणम्। नहि युक्तिपराजितोऽपि क्षुधितो नान्नमत्ति, बलवद्दृष्टयबाधे। नचान्नत्वे[५] दुर्घटे तस्यानन्नत्वं भवति दृष्टयबाधितदृष्टस्य। नचान्नानन्नविलक्षणत्वमनु-[६]भूयते। नच तथा व्यवहारः। नच तत्र किञ्चिन्मानम्। अतो विशिष्टादिनिराकरणयुक्तीनामपि विशिष्टाद्यपेक्षत्वाज्जात्युत्तरमिति न युक्तिबाधाऽपि। अतो निखिलगुणगणाढ्यमेव ब्रह्म श्रुत्यभिप्रेतम्॥ * ॥

अनिर्वचनीयासिद्धेरेवानुमानस्य चाप्यसिद्धिः[७]। वाचाऽऽरम्भणं[८] विकारः विविधप्रकारः, नामधेयं नित्यं धार्यं नाम मृत्तिकेत्यादि वैदिकमेवेत्येतद्[९] वचनं सत्यमिति श्रुत्यर्थः। अनित्यत्वाद् [१०]साङ्केतिकनामाप्रधानम्, नित्यत्वान्मृत्तिकादिनामैव प्रधानम्। प्रधानज्ञानादप्रधानं ज्ञातमिव भवति। एवं प्रधानस्य परमात्मनो ज्ञानादप्रधानं ज्ञातमिव भवति। प्राधान्यज्ञापनार्थमेव सृष्टिकथनम्[११]।

"यथा सोम्य" इत्याद्यपि सादृश्यकथनम्। [१२]नह्येकनखनिकृन्तनविकारः सर्वकार्ष्णायसम्[१३]।

---

१ "दुर्घटत्वे सुघटत्वे वा" इति प्र. पाठः।

२ "सर्ववैलक्षण्याङ्गीकारात्" इति प्र. पाठः।

३ "वचनमत्राप्युक्तम्" इति प्र. पाठः।

४ "इत्यादि ब्रह्मणो मिथ्यात्वे प्रमाणमस्ति" इति प्र. पाठः। "असद्वा इदमग्र आसीदित्यादि श्रुत्या ब्रह्मणोऽप्यसत्त्वं स्यात्" इति प्राचीनटीका।

५ प्राचीनकोशे "नचानन्नत्वे" (?) इति पठ्यते। सम्पातायातं स्यात्।

६ "—नन्नवैलक्षण्यमनु—" इति प्र. पाठः।

७ "—मानस्याप्यसिद्धिः" इति प्र. पाठः।

८ "वाचारम्भणं विविधप्रकारः" इति प्र. पाठः। "वागिन्द्रियेणाऽरम्भणं साङ्केतिकं नामजातं विकृतत्वात् विविधप्रकारत्वाच्च विकारशब्देनोच्यते। मृत्तिकेत्यादिवैदिकनामजातं नित्यं धार्यत्वेन धेयशब्देनोच्यते" इति प्राचीनटीका।

९ "वैदिकमेव भवेदित्येतत्" इति प्र. पाठः।

१० "साङ्केतिकं नामा—" इति प्र. पाठः।

११ "सृष्ट्यादिकथनम्" इति प्र. पाठः।

१२ "नचैकनख—" इति प्र. पाठः।

१३ "सर्वं कार्ष्णायसम्" इति प्र. पाठः।

प्रधानपुरुषज्ञानेन[1] ग्रामो ज्ञात इति व्यवहारोऽस्ति । नच[2] सत्यज्ञानेन मिथ्या ज्ञातं[3] भवति । [4]मुक्तामुक्तयोर्भेदाभावे मुक्तस्य संसारः संसारिणो मुक्तत्वं वा स्यात् । यद्यज्ञानकृतो भेदः[5], ईश्वरस्याज्ञानाभावात् संसारिणैक्यं तेनानुभूयेत । ततश्च दुःखित्वं स्यात् ।

"तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप", "सुखं दुःखं भवोऽभावो भयं चाभयमेव च । अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः । भवन्ति भावा भूतानां मत्त एव पृथग्विधाः", "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" [6]इत्यादेरीश्वरेणापि भेदस्यैवानुभूयमानत्वाच्च ।

तत एवाभ्रान्तित्वान्न[7] मुक्तस्यापि भेदनिवृत्तिः । नचोपाधिभेदमात्रेणेश्वरस्य दुःखानुभवः[8] । हस्तपादाद्युपाधिभेदेऽपि भोक्तुरेकत्वानुभवात्[9] । अनौपाधिकत्वादेव च भेदस्य न मुक्तस्येश्वरैक्यम् ।

"उद्यतायुतदोर्दण्डाः पतितस्वशिरोक्षिभिः । पश्यन्तः पातयन्ति स्म कबन्धा[10] अप्यरीन् युधि" इति भारतवचनान्न विश्लेषाद् विशेषः । "इदं ज्ञानमपाश्रित्य[11] मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रळये[12] न व्यथन्ति च", "यदा पश्यः पश्यते रुग्मवर्ण्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इत्यादि मुक्तभेदवचनेभ्यश्च ।

एवं प्रत्यक्षानुमानागमविरुद्धत्वादभेदविषयवत् प्रतीयमानान्यपि वाक्यानि सादृश्याद्यर्थान्येव योजनीयानि—

"विरुद्धवत् प्रतीयन्त आगमा यत्र वै मिथः । तत्र दृष्टानुसारेण तेषामर्थोऽन्ववेक्ष्यते" इति ब्राह्मवचनाच्च ॥ * ॥

---

१ "ज्ञानाद् ग्रामो ज्ञात इति व्यपदेशोऽस्ति" इति प्र. पाठः ।

२ "नहि" इति प्र. पाठः ।

३ "-ज्ञानम्" इति प्र. पाठः ।

४ "नित्यमुक्तत्वादत्र मुक्तशब्देनेश्वरोऽपि गृह्यते" इति प्राचीनटीका ।

५ "भेदः, तर्हीश्वरस्याज्ञानाभावात्" इति प्र. पाठः ।

६ "इत्यादिनेश्वरेणापि" इति प्र. पाठः ।

७ "एवाभ्रान्तत्वान्न" इति प्र. पाठः ।

८ "दुःखाभावः" इति प्र. पाठः ।

९ प्र. पाठे– "भोक्तुरेकत्वानुभवात्" इत्यनन्तरम्– "उद्यतायुध · · · · · विशेषः" इत्यन्तं पठित्वा ततः "अतोऽनौपाधिकत्वादेव भेदस्य–" इत्याद्युत्तरं वाक्यं पठ्यते ।

१० "कबन्धा–" इति प्र. पाठः ।

११ "ज्ञानमुपाश्रित्य" इति प्र. पाठः ।

१२ "प्रलये" इति प्र. पाठः ।

भेदाद्यनुभवस्य भ्रान्तित्वाङ्गीकारे तदपलापयुक्तेर्नितरां भ्रान्तित्वाद् भेदाद्यनुभवस्याभ्रान्तित्वमेव भवति । परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वानुभवात् ।

एकजीववादपक्षे तन्निष्ठानां मृत्यनन्तरमपि विश्वस्यानिवृत्तत्वाद् भेदनिष्ठ एवैकजीव इत्यापतति । तस्य च तत्रैवाऽग्रहान्न[1] कदाचिन्निवर्त्तेत इत्यनिवृत्तिरेव भवति । नचैकाज्ञानपरिकल्पिताः सर्वे इत्यत्र[2] किञ्चिन्मानम् । अतो मुक्तेभ्योऽप्यन्य एव [3]सर्वगुणपरिपूर्णो भगवान् विष्णुरिति सिद्धम् ॥ * ॥

"[4]ब्रह्मेशानादिभिर्देवैर्यत् प्राप्तुं नैव शक्यते । तद् यत्स्वभावः कैवल्यं स भवान् केवलो हरे", "परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति" ॥ * ॥

सत्यचिच्चेत्यपतये मुक्तामुक्तोत्तमाय ते ।
नमो नारायणायाऽर्यवृन्दवन्दितपद्द्वय ॥ * ॥ * ॥

आनन्दतीर्थपुंसिंहो मायावादिदितेस्सुतान् ।
विदार्य युक्तिनखरैरप्रतीपोऽतिशोभते[5] ॥ १ ॥

पलायध्वम्पलायध्वं त्वरया मायिदानवाः ।
सर्वज्ञहरिरायाति तर्कागमदरारिधृत्[6] ॥ २ ॥

द्रवतद्रवताऽऽशु मायिनः प्रविशध्वमतन्द्रिता गुहाः ।
[7]कमळारमणाम्बराश्रयः समुदेत्यखिलज्ञभास्करः ॥ ३ ॥

नृहरिः [8]सकळज्ञनामकः समुपैति हि मायिदानवान् ।
प्रपलायनमत्र तत् क्षमं त्वरया वसतिर्गुहासु च[9] ॥ ४ ॥

जयत्यानन्दतीर्थेष्टदेवता नरकेसरी ।
विपाटिताज्ञानतमः[10]कवाटात्युरुहुङ्कृतः ॥ ५ ॥

---

१ "–न्न कदाचिद् भेदनिवृत्तिरित्यनिवृत्ति–" इति प्र. पाठः ।

२ "नचैकजीवाज्ञानपरिकल्पिताः समस्ता इत्यत्र" इति प्र. पाठः ।

३ "समस्तगुण–" इति प्र. पाठः ।

४ "अतो, मुक्तेभ्योऽप्यन्य एव समस्तगुणसम्पूर्णो भगवान् विष्णुरित्युपसंहृतार्थं हिरण्यगर्भवाक्यश्रुतिभ्यां द्रढयति—ब्रह्मेशानादिभिरित्यादिना" इति प्राचीनटीका ।

५ "–तीपोऽभिभासते" इति प्र. पाठः ।

६ "–दरारिभृत्" इति प्र. पाठः ।

७ "कमला–" इति प्र. पाठः ।

८ "सकलज्ञ–" इति प्र. पाठः ।

९ "त्वरया वो वसतिर्गुहासु च" इति क्वचिन्मुद्रितः पाठः छन्दोभङ्गात् प्रामादिकः ।

१० "–कपाटात्युरु–" इति प्र. पाठः ।

जयत्यमितपौरुषः स्वजनतेष्टचिन्तामणिः ।
अजेशमुखवन्दितो गुणगणार्ण्णवः श्रीपतिः ॥ ६ ॥

सर्वज्ञसन्मुनीन्द्रोच्चसन्मनःपङ्कजालयः ।
अजितो जयति श्रीशो रमाबाहुलताश्रयः[१] ॥ ७ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचित-
वादः[२] समाप्तः

---

१ "आनन्दतीर्थपुंसिंहो-" इत्यादि "रमाबाहुलताश्रयः" इत्यन्तं सप्त पद्यानि न भगवत्पादकृतानि; किन्तु वादकथायामाचार्यैः पराजितान् परान् दृष्ट्वा सन्तुष्टहृदयैराचार्यशिष्यैर्गीतानि, शिष्यानुजिघृक्षया चाऽचार्यैस्तत्प्रार्थनापरवद्भिः स्वग्रन्थान्ते विनिवेशितानीति टीकायां स्फुटम् । अत एव प्राचीनटीकाकारैः श्रीपद्मनाभतीर्थभट्टारकैरिमानि पद्यानि न व्याख्यातानीति सर्वं सुसङ्गतम् ।

२ "तत्त्वोद्योतः" इति चास्य प्रचलितं नाम । परन्तु वाद इत्येवास्य प्रतनं प्रामाणिकं च नाम । उक्तं हि पण्डिताचार्यैरपि-"ग्रन्थो वादाह्वयोऽभवत्" इति ।

# मायावाददूषणम्

ॐ ॥ नरसिंहोऽखिलाज्ञानमतध्वान्तदिवाकरः ।
जयत्यमितसज्ज्ञानसुखशक्तिपयोनिधिः ॥ * ॥

विमतमनारम्भणीयम्, अन्यथाप्रतिपादकत्वात्; यदित्थं तत् तथा, यथा सम्प्रतिपन्नम् । नहि ब्रह्मात्मैक्यस्य याथात्म्यं तत्पक्षे । अद्वैतहानेः स्वरूपातिरेके । अनतिरेके स्वप्रकाशत्वादात्मनः सिद्धसाधनता । निर्विशेषत्वाच्चाऽऽत्मनो[1] नानधिगतो विशेषः । सिद्धत्वात् स्वरूपस्य विशेषाभावाच्च नाज्ञानं कस्यचिदावरकम् । "अनधिगतार्थगन्तृ प्रमाणम्" इति तन्मतम्[2] ।

अज्ञानासम्भवादेव तन्मतमखिलमपाकृतम् । मिथ्यात्वे चैक्यस्यातत्त्वावेदकत्वमागमस्य स्यात् । सत्यता च भेदस्य । एवमेव प्रयोजनमपि निरस्तम् । स्वरूपत्वान्मोक्षस्य पूर्वमेव सिद्धत्वात् । अज्ञानासम्भवेन चतुर्थप्रकाराभावात् पञ्चमप्रकारताऽपि निरस्ता । विषयप्रयोजनाभावादधिकारी च[3] । तदभावादेव सम्बन्धोऽपि ॥ * ॥

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः । यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् । स सर्वविद् भजति मां सर्वभावेन भारत । इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ । एतद् बुद्ध्वा बुद्धिमान्

---

१ –"त्वादात्मनो–" इति प्र. पाठः । २ "इति च तन्मतम्" इति प्र. पाठः ।
३ "–भावादेवाधिकारी च" इति प्र. पाठः ।

स्यात् कृतकृत्यश्च भारत'' इति विष्णोः सर्वोत्तमत्वमेव सर्वशास्त्रार्थत्वेन भगवताऽभिहितम्[२] ॥ * ॥

इति सर्वज्ञमुनिना मायावादतमोऽखिलम् ।
निरस्तं तत्ववादेन सतां संशयनुत्तये ॥ * ॥

''नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम्'' ॥ * ॥ * ॥

इति श्रीमदानन्दतीर्थभगवत्पादकृतं
[३]मायावाददूषणं समाप्तम्

---

१ इतः परं प्र. पाठे—''इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः । महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः'' ॥ ''भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति'' इति काठकवचनं सूत्रं चाधिकं पठ्यते ।

२ उपरितनपाठानुसारेणात्रापि प्र. पाठे ''भगवता श्रुत्या चाभिहितम्'' इति पठ्यते । काठकसूत्रवचनाभ्यां सहितो विरहितश्चेति द्विविधोऽप्ययं पाठः प्रामाणिक एवेति प्रतीयते । एकस्तावत् पद्मनाभतीर्थादिपरिगृहीतः । अपरो हृषीकेशतीर्थादिभिः । तथाहि पद्मनाभतीर्थीयं टीकावचनम्—''इन्द्रियेभ्यः परा ह्यर्था इत्येतच्छ्रुत्यर्थः पुराणग्रन्थेनोच्यते—'देवेभ्य इन्द्रियात्मभ्यो ज्यायांसोऽर्थाभिमानिनः । सोमवित्तपसूर्याप्पा अश्व्यग्नीन्द्रेन्द्रसूनवः । यमो दक्षश्चेन्द्रियेशाः सुपर्णी वारुणी तथा । उमेति चार्थमानिन्यस्तिस्रो द्विद्व्येकदेवताः । मनोऽभिमानिनो रुद्रवीन्द्रशेषास्त्रयोऽपितु । ते श्रेष्ठा अर्थमानिभ्यस्तेभ्यो बुद्धिः सरस्वती । तस्माद् ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा । तस्यास्तु पुरुषो विष्णुः पूर्णत्वान्नैव तत्समः । कश्चित् कुतश्चिच्छ्रेष्ठस्तु नास्तीति किमु सा कथा'' इति । द्विद्व्येकदेवता इत्यनेन द्वयोः स्पर्शशब्दयोः सुपर्णी देवता, रूपरसयोर्द्वयोर्वारुणी गन्धस्योमा । सर्वशास्त्रार्थत्वेन विष्णोरेवोत्तमत्वं भगवत्कृतब्रह्मसूत्रेणापि द्रढयति—भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति इति विष्णोरिति'' इत्यादि । अत्र महान्तः प्रमाणम् । नहि भगवत्पादशिष्यप्रवरयोरन्यतरप्रहाणेऽन्यतरग्रहणे वा वयं प्रभवः । नहि तादृशेषु भगवत्पादश्रीमुखादेव समधिगतसकलमूलग्रन्थेषु प्रमादोऽज्ञानं वा सम्भाव्येत । ननु तर्हि ग्रन्थकृन्मुखादेव समधीतग्रन्थपाठयोः कथमयं पाठभेदः सम्भवेत् । इत्थं सम्भाव्यते—यद् भगवत्पादः पूर्वं काठकवाक्यसूत्राभ्यामसंवलितमेव ग्रन्थं प्रणिनाय । परत्र च अन्यान्यसमये तस्यैव प्रवचनवेलायां शिष्यानुकम्पया स्पष्टत्वाय स्वोक्तार्थोपोद्बलकं काठकवचनं सूत्रवचनं च ग्रन्थान्ते निवेशयामास । अन्यैस्तत्र सन्निहितैः शिष्यैस्तदपि लिपिबद्धं कृतम् । उत्तरत्र वादलक्षणे च श्लोकाधिक्येन पाठभेद इमां सम्भावनां पुष्णाति । सम्भावनामात्रं चेदम् । एतावता सन्तोष्टव्यं यावत् स्फुटतरं निमित्तं नोपलभामहे ।

३ ''मायावादखण्डनम्'' इति तु प्रचलितं नाम ।

# मायावाद (उपाधि) दूषणम् (२)

ॐ ॥ नारायणोऽगण्यगुणनित्यैकनिलयाकृतिः ।
अशेषदोषरहितः प्रीयतां कमळालयः[1] ॥ १ ॥

अज्ञताऽखिलसंवेत्तुर्घटते न कुतश्चन ।
उपाधिभेदाद् घटत इति चेत् स स्वभावतः ।
अज्ञानतो वा द्वैतस्य सत्यता स्वत एव चेत् ॥ २ ॥

अनवस्थितिरज्ञानहेतौ वाऽन्योन्यसिद्धिता ।
चक्रकापत्तिरथवा भेदश्चोपाधितः कुतः ॥ ३ ॥

विद्यमानस्य भेदस्य ज्ञापको नैव कारकः ।
उपाधिर्दृष्टपूर्वो हि खेऽपि देशान्तरस्य सः ।
ज्ञापको विद्यमानस्य मूढबुद्धिव्यपेक्षया ॥ ४ ॥

न चेदुपाधिसम्बन्ध एकदेशेऽथ सर्वगः ।
एकदेशेऽनवस्था स्यात् सर्वगश्चेन्न भेदकः ॥ ५ ॥

सुखदुःखादिभोगश्च स्वरूपैक्ये न भेदतः ।
दृश्यो ह्युपाधिभेदेऽपि हस्तपादादिगो यथा ॥ ६ ॥

नानादेहगभोगानुसन्धानं योगिनो यथा ।
न चेद् भोगानुसन्धानं तदिच्छा योगिनः कुतः ॥ ७ ॥

अनुसन्धानरहितदेहबाहुल्यमन्यथा ।
सिद्धमेव हि तत्पक्षे विशेषो योगिनः कुतः ॥ ८ ॥

सिद्धौ हि कर्मभेदस्य स्यादुपाधिविभिन्नता ।
तत्सिद्धौ चैव तत्सिद्धिरित्यन्योन्यव्यपाश्रयः ॥ ९ ॥

---

१ "कमलालयः" इति प्र. पाठः ।

आत्मस्वभावभेदस्य विदोषत्वेन चाखिलः ।
प्रत्यक्षादिविरोधाच्च दुष्टः पक्षोऽयमञ्जसा ॥ १० ॥

चेष्टालिङ्गेन सात्मत्वे परदेहस्य साधिते ।
अन्यत्वं स्वात्मनस्तस्मात् सर्वैरेवानुभूयते ॥ ११ ॥

अज्ञता चाल्पशक्तित्वं दुःखित्वं स्वल्पकर्तृता ।
सर्वज्ञतादीशगुणविरुद्धा ह्यनुभूतिगाः ॥ १२ ॥

सार्वज्ञ्यादिगुणा विष्णोः श्रुतिषु प्रतिपादिताः ।
"सत्यः सो अस्य महिमे"त्यादिवाक्यान्मृषा नच ॥ १३ ॥

नच वेदोक्तमिथ्यात्वे मानं तन्मानताऽपि न ।
अतोऽज्ञासम्भवादेव[1] नाधिकार्यैक्यवादिनाम् ॥ १४ ॥

अतो नाऽज्ञातमिति च विषयो विषयान्तरे ।
अज्ञाभावात् फलं कस्य योगः शशनृशृङ्गयोः ॥ १५ ॥

[2]दुर्घटत्वं भूषणं चेत् स्यादविद्यात्वमात्मनः ।
अन्धन्तमोऽप्यलङ्कारो नित्यदुःखं शिरोमणिः ॥ १६ ॥

अतः "परो मात्रये"तिपूर्वश्रुतिनिदर्शितः ।
"अन्यमीशमि"ति श्रुत्या भिन्नजीवदृशं गतः ।
भिन्नत्वेनाऽऽत्मसादृश्यदो "यदे"ति श्रुतेः सदा ॥ १७ ॥

मायावादतमोव्याप्तमिति तत्वदृशा जगत् ।
भातं सर्वज्ञसूर्येण प्रीतये श्रीपतेः सदा[3] ॥ १८ ॥

---

१ "ब्रह्मणः सर्वज्ञस्याज्ञानं न सम्भवतीत्युक्तत्वात्, ततोऽन्यस्याज्ञस्य जीवस्याभावादज्ञो जिज्ञासुरधिकारी तन्मते न सम्भवति" इति प्राचीनटीका । एतेन अज्ञा अज्ञानम्, ब्रह्मणि अज्ञाया अज्ञानस्यासम्भवात्, तदतिरिक्तस्य च अज्ञस्य असम्भवादित्यर्थद्वयमुक्तं भवति । अथवा ब्रह्मणि अज्ञासम्भवात् अज्ञत्वासम्भवात्, भावप्रधानो निर्देशः, तदतिरिक्तस्य चाज्ञस्य जीवस्यासम्भवादिति ।

२ "अविद्यायास्तावद् दुर्घटत्वस्वभावोऽवगम्यते । स्वशिरश्छेदनादेर्द्रष्टुमयोग्यस्यापि स्वप्नादावविद्याप्रभावेन दृष्टत्वात् । एवं दुर्घटाविद्ययैव ज्ञः स्वयंप्रकाशोऽज्ञो भविष्यति । अत एवाज्ञोऽधिकार्यज्ञातो विषयश्चेत्यादि युज्यते—" इत्यादि प्राचीनटीका ।

३ सदा अवतारत्रयेऽपि श्रीपतिप्रीतिजननं तस्य सहजो गुणः । तथाहि प्राचीनटीका—"यथा हनुमद्भीमसेनौ पुरा सीतासंदेशहरणपृतनासंहरणाख्यजगद्धितकरणेन श्रीपतेः प्रीतिं जनयामासतुः एवं श्रीमदानन्दतीर्थाख्यः सर्वज्ञः श्रीपतिप्रतिपक्षमायावादतमोनिरासाख्यजगद्धितकरणेन श्रीपतेः प्रीतिं जनयामासेत्युक्तं भवति" इति ।

नमोऽमन्दनिजानन्दसान्द्रसुन्दरमूर्त्तये ।
इन्दिरापतये नित्यानन्दभोजनदायिने ॥ १९ ॥

["नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम्[१]" ॥ २० ॥]

इति श्रीमदानन्दतीर्थभगवत्पादविरचित-
मायावाद[२][उपाधि]दूषणं समाप्तम्

---

१ "नास्ति नारायणसमम्—" इत्यादिरयं भारतश्लोकः प्र. पाठेऽत्र ग्रन्थान्ते न पठ्यते ।

२ मूलकोशेऽत्रापि "मायावाददूषणम्" इत्येव लिखितं दृश्यते । सम्पातायातं स्यात् । उभयत्राप्यन्ते भारतश्लोकश्रवणात् तत् सम्भाव्यते । अथवा ग्रन्थयोरेकनामता नाम न दोषः । तद्यथा तत्वसङ्ख्यानं तत्वविवेक इत्युभयमपि मूलग्रन्थे तत्वसङ्ख्यानमित्येव व्यपदिश्यते तथेहापि स्यात् । विशिष्य निर्देशाय च परस्तान्नामान्तरव्यवहारः । अत एव तत्त्वप्रकाशिका इति चास्य नामान्तरं कोशेषु पठ्यते । "तत्त्वप्रकाशिकाव्याख्यां करिष्यामः" इति च टीका । "उपाधिखण्डनम्" इति तु प्रसिद्धं नाम ।

# मिथ्यात्वानुमानदूषणम्

ॐ ॥ विमतं मिथ्या, दृश्यत्वात्; यदित्थं तत् तथा, यथा शुक्तिरजतम्[1] । जगतोऽभावादाश्रया-सिद्धः पक्षः । अनिर्वचनीयस्यासिद्धेरप्रसिद्धविशेषणः[2] । असद्वैलक्षण्ये मिथ्यात्वस्य सिद्धसाधनता[3] । दृश्यत्वस्याभावाद[4]सिद्धो हेतुः । अनिर्वचनीयासिद्धेरेव सपक्षाभावाद्[5] विरुद्धः । आत्मनोऽपि दृश्यत्वादनैकान्तिकः । जगतोऽभावेऽनुमानस्याप्यभाव इति तर्कबाधितत्वेनानध्यवसितः । प्रत्यक्षादिविरुद्धत्वात्, "विश्वं सत्यम्" इत्यादिवाक्यविरुद्धत्वाच्च कालात्ययापदिष्टः । रजतं दृष्टमिति भ्रममात्रत्वात्, विमतं सत्यम्, दृश्यत्वात्, आत्मवदित्यपि प्रयोज्यत्वात् प्रकरणसमः । विमतं सत्यम्, प्रमाणसिद्धत्वात्, आत्मवदिति प्रयोगात्[6] सप्रतिसाधनः । शुक्तिरजतस्याप्यनिर्वचनीयत्वाभावात् साध्यविकलो दृष्टान्तः । उक्तप्रकारेण दृश्यत्वाभावात् साधनविकलश्च । प्रमाणविरुद्धत्वमुपाधिः ॥ * ॥

साध्यधर्म्मविशिष्टः पक्षः । साध्यसमानधर्म्मविशिष्टः सपक्षः । साध्यविपरीतधर्म्मविशिष्टो विपक्षः । पक्षवचनं प्रतिज्ञा । लिङ्गं हेतुः । निदर्शनं दृष्टान्तः ॥ * ॥

---

१ "यथा सम्प्रतिपन्नम् । इत्युक्ते जगतो–" इत्यादि प्र. पाठः । "यद् दृश्यं तन्मिथ्याभूतं दृष्टम् । यथा शुक्तिरजतमित्येतदनुमानं दूषयति—जगतोऽभावादाश्रयासिद्धः पक्ष इत्यादिना" इति प्राचीनटीका ।

२ "अनिर्वचनीयासिद्धे–" इति प्र. पाठः ।

३ "सदसद्वैलक्षण्ये मिथ्यात्वे सिद्धसाधनता" इति प्र. पाठः ।

४ दृश्यत्वाभावाद–" इति प्र. पाठः ।

५ "हेतुः । अनिर्वचनीयासिद्धेरेव । अनिर्वचनीयासिद्धेरेव सपक्षाभावात्" इति प्र. पाठः ।

६ "प्रमाणदृष्टत्वात्, यदित्थं तत् तथा, यथाऽऽत्मेति प्रयोगात्" इति प्र. पाठः ।

यो दृश्यते सदानन्दनित्यव्यक्तदृशाऽऽत्मना[१] ।
निर्दोषाखिलकल्याणगुणं वन्दे रमापतिम् ॥ * ॥

[२]सत्यसृष्टिस्थितिलयप्रकाशनियतिप्रदः ।
निखिलज्ञोऽज्ञजनतानियन्ता[३] यो हरिं नुमः ॥ * ॥

इति [श्रीमदानन्दतीर्थभगवत्पादकृतं[४]]
[५]मिथ्यात्वानुमानदूषणं समाप्तम्

---

१ "–व्यक्तचिदात्मना" इति प्र. पाठः ।                    २ अयं श्लोकः प्र. पाठे न पठ्यते ।

३ प्रकाशप्रदत्वं नियतिप्रदत्वं च पूर्वमुक्तम् । अज्ञजनतानियन्तेत्यज्ञानप्रदत्वं बन्धप्रदत्वं चोच्यते । अथच ज्ञानिजनसमूहस्य मोक्षादिदानेन नियन्तेति ज्ञजनतानियन्तोच्यते । ततः सृष्ट्याद्यष्टकं च कथितं भवति ।

४ [      ] एतावान् भागः मूलकोशे न पठ्यते । कोशान्तरेषु तु सर्वत्र पठ्यते ।

५ "मिथ्यात्वानुमानखण्डनम्" इति प्रचलितं नाम ।

7

# तत्वसङ्ख्यानम्

[1]रमाविरिञ्चशर्वादिशक्रादीतरसुक्रमम् ।
मुक्तौ चेदङ्गुणैः सर्वैर्यद्वशे नौमि तं हरिम् ॥ * ॥

ॐ ॥ "स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्वमिष्यते । स्वतन्त्रो भगवान् विष्णुर्भावोऽभावो[2] द्विधेतरत् । प्राक्प्रद्ध्वंससदात्वेन त्रिविधोऽभाव इष्यते । चेतनाचेतनत्वेन भावोऽपि द्विविधो मतः । दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतनम् । नित्यादुःखा रमाऽन्ये तु स्पृष्टदुःखाः समस्तशः । स्पृष्टदुःखा विमुक्ताश्च दुःखसंस्था इति द्विधा । दुःखसंस्था मुक्तियोग्या अयोग्या इति च द्विधा । देवर्षिपितृपनरा[3] इति मुक्तास्तु पञ्चधा । एवं विमुक्तियोग्याश्च[4] तमोगाः सृतिसंस्थिताः । इति द्विधाऽमुक्तियोग्या[5] दैत्यरक्षःपिशाचकाः । मर्त्या इति चतुर्द्धैव[6] तमोयोग्याः प्रकीर्त्तिताः । ते च प्राप्तान्धतमसः सृतिसंस्था इति द्विधा । नित्यानित्यविभागेन द्विधैवाचेतनं[7] मतम् । नित्या वेदाः

---

१ प्र. पाठे–इदं मङ्गलपद्यं न पठ्यते । ग्रन्थादौ मङ्गलं नानुष्ठितमिति च टीकाकृदभिप्रायः । किन्तु प्राचीनकोशेष्विदं तावदादौ पठ्यते । पद्यस्य चायमर्थः—विरिञ्च इति वायुरप्युच्यते । शर्वादीत्यादिपदेन गरुडशेषौ । शक्रादीत्यादिपदेन समस्तदेवाः । इतरे च तेभ्यः ये चतुःप्रकाराः– ऋषयः, पितरः, क्षितिपाः, नरोत्तमाश्चेति । तदिदं मुक्तियोग्यं पञ्चकं सर्वैः स्वैःस्वैर्गुणैः मुक्तावपि सुक्रमं तारतम्यक्रमोपेतं सत् यद्वशे वर्तते तं हरिं नौमीति ।

२ "भावाभावौ" इति प्र. पाठः ।

३ प्राचीनकोशे "–पित्रुपनराः" इति पठ्यते । अर्थस्तु न स्फुटः ।

४ विमुक्तियोग्याश्च देवर्षिपितृपनरा इत्येवं पञ्चधेति पूर्वेणान्वयः ।

५ "द्विधा मुक्त्ययोग्याः" इति प्र. पाठः ।

६ "मर्त्याधमाश्चतुर्धैव" इति प्र. पाठः ।

७ "त्रिधैवाचेतनम्" इति प्र. पाठः । यद्यपि नित्यम्, नित्यानित्यम्, अनित्यमिति वक्ष्यमाणविभागरीत्या त्रिधैवेत्येवोचितम् । किन्तु 'द्विधैव' इत्येव प्राचीनकोशपाठः । तथाचायमर्थः–नित्यमनित्यं चेति द्विधैवाचेतनम् । यद्यपि नित्यदलेनानित्यदलेन चोपेतं विशिष्टं वस्तु नित्यानित्यमित्युच्यते । तद्यथा कालः समष्टिरूपेण नित्यः । क्षणलवादिरूपेणानित्यः । मूलप्रकृतिर्यद्यपि नित्या । तथाऽपि विकारांशेनानित्या भवति । एवं पुराणान्यनित्यानि । तदुक्तम्–"सर्गेऽसर्गेऽन्यथैव तु क्रियन्तेऽतस्त्वनित्यानि" इति । अथापि पुनर्नाशाभावान्नित्यानीति चाप्यवह्रियन्ते ।

**पुराणाद्याः कालः प्रकृतिरेव च । नित्यानित्यं त्रिधा प्रोक्तमनित्यं द्विविधं मतम् । असंसृष्टं च संसृष्टमसंसृष्टं महानहम् । बुद्धिर्म्मनः खानि दश मात्रा भूतानि पञ्च च । संसृष्टमण्डं तद्गं च समस्तं सम्प्रकीर्त्तितम् । सृष्टिः स्थितिः संहृतिश्च नियमोऽज्ञानबोधने । बन्धो मोक्षः सुखं दुःखमावृतिर्ज्योतिरेव च । विष्णुनाऽस्य समस्तस्य समासव्यासयोगतः'' इत्यादि तत्वसङ्ख्याने ॥ * ॥**

**[2]स्वजनोदधिसंवृद्धिपूर्णचन्द्रो गुणार्णवः ।**
**अमन्दानन्दसान्द्रो नः सदाऽव्यादिन्दिरापतिः ॥ १ ॥**

**रमाचकोरीविधवे दुष्टसर्प्पोदवह्नये ।**
**सत्पान्थजनगेहाय नमो नारायणाय ते ॥ २ ॥**

**चिदचिद्भेदमखिलं विधायाऽधाय भुञ्जते ।**
**अव्याकृतगृहस्थाय रमाप्रणयिने नमः ॥ ३ ॥**

---

तथाऽपि द्विधैवाचेतनमित्युच्यते । नह्येकान्ततो नित्यमनित्यं च किमपि भवति । एकांशेन नित्यमपरांशेन ह्यनित्यं भवति । नित्यांशस्य नित्येऽन्तर्भावः । अनित्यांशस्य चानित्य इति द्विधैवाचेतनम् । तद्यथा भावोऽभाव इति द्विधैवास्वतन्त्रतत्वमित्युक्त्वा "भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक्" इत्युक्तं तत्वविवेके । अन्यथा नित्यानित्यमितिवत् भावाभाव इत्यपि विभजनीयं स्यात् । अत एव तत्वविवेकेऽपि "नित्यानित्यत्वभेदेन द्विधैवाचेतनम्" इति सावधारणमुक्तम् । अथ च विवक्षाभेदेनैषां नित्यानित्यत्वाङ्गीकारेऽपि न नो हानिः । तदेतदुक्तम्—पुराणाद्याः कालः प्रकृतिरेव च नित्यानित्यं त्रिधा प्रोक्तमिति । विवक्षाभेदेनोभयमपि युक्तमित्यर्थः । अथवा नित्या, नित्यम्, त्रिधा, प्रोक्तम्—इति पदपाठः । अयमर्थः— वेदाः पुराणाद्याश्च नित्याः । कालोऽपि नित्यः । प्रकृतिरेव च नित्या । ननु नित्यत्वे समाने किं प्रत्येकमुच्यते वेदा नित्याः, कालो नित्यः, प्रकृतिर्नित्येति? न भोः, नह्येतेषां समानं नित्यत्वम् । तदेतदाह—नित्यं त्रिधा प्रोक्तमिति । वेदाः पुराणाद्या इत्याकाशस्तद्गुणः शब्दश्च गृह्यते । तदिदं कूटस्थमविकारि नित्यत्वम् । नह्याकाशः अंशतोऽपि जायते । नच विक्रियते । कालो यद्यपि न कूटस्थः । क्षणलवाद्यात्मना जायते च । तदेवमवयवांशेऽनित्योऽपि स्वरूपतो नित्य इति इदमपरं नित्यत्वम् । न कूटस्थमप्यविकारि । प्रकृतिस्तु न कूटस्था नाप्यविकारिणी । अथापि स्वरूपतो नित्या । तदिदमपरं नित्यत्वमकूटस्थं च विकारि च । यदि संसारोऽपि प्रवाहतो नित्य इत्युच्यते सोऽपि प्रकृतिपदेन विवक्ष्येत । तदेतदुक्तम्—एवं नित्यं त्रिधा प्रोक्तमिति ।

१ प्र. पाठे अत्रैव ग्रन्थपरिसमाप्तिः । "इत्यादि तत्वसङ्ख्याने" इति न पठ्यते । "स्वजनोदधि—" इत्यादि मङ्गलपद्यानि च न पठ्यन्ते । प्राचीनकोशपाठेन चेदं स्फुटम्—यत् समग्रोऽयं प्रकरणग्रन्थः तत्वसङ्ख्यानाख्यात् प्रतनग्रन्थादाचार्यपादैरविकलमुद्धृत इति । तद्यथा कृष्णामृतमहार्णवः स्वाभिमतप्रमाणानामन्यान्यपुराणगतानामेकत्र सङ्ग्रह एवमिहापि प्रमाणवचनमेव पठित्वा आद्यन्तयोः स्वकृतां मङ्गलमालिकां निबबन्धेति ज्ञायते ।

२ इत आरभ्य आग्रन्थसमाप्ति समग्रं पद्यजातं प्रचलितपाठे द्वादशस्तोत्रेष्वन्यतमतया पठ्यते । तत्र च यः पाठभेदः सोऽपि तत्रैव निवेदयिष्यते ।

अमन्दगुणसारोऽपि मन्दहासेन वीक्षितः ।
नित्यमिन्दिरयाऽऽनन्दसान्द्रो यो नौमि तं हरिम् ॥ ४ ॥

वशी वशो न कस्यापि योऽजितो विजिताखिलः ।
सर्वकर्त्ता न क्रियते तं नमामि रमापतिम् ॥ ५ ॥

अगुणाय गुणोद्रेकस्वरूपायाऽदिकारिणे ।
विदारितारिसङ्घाय वासुदेवाय ते नमः ॥ ६ ॥

आदिदेवाय देवानां पतये सादितारये ।
अनाद्यज्ञानपाराय नमः पारावराश्रय ॥ ७ ॥

अजाय जनयित्रेऽस्य विजिताखिलदानव ।
अजादिपूज्यपादाय नमस्ते गरुडध्वज ॥ ८ ॥

रमारमण एवैको रणजिच्छरणं सताम् ।
कारणं कारणस्यापि तरुणादित्यसप्रभः ॥ ९ ॥

इन्दिरामन्दसान्द्राग्र्यकटाक्षप्रेक्षितात्मने ।
अस्मदिष्टैककार्याय पूर्णाय हरये नमः ॥ १० ॥

एवंविधः परो विष्णुरव्याच्छ्रीपुरुषोत्तमः ।
तमहं सर्वदा वन्दे श्रीनिकेतं परं हरिम् ॥ ११ ॥

[1]इति तत्वसङ्ख्यानं समाप्तम्

---

[[2]चञ्चलोऽयं समानेयो मनोमीनो हरिस्थले ।
विषयोदकसञ्चारी सुयत्नबळिशाहृतः ॥ * ॥

प्रादेशमात्रं तत्वार्थे जयार्थेऽरत्निमात्रकम् ।
ख्यातिपूजार्थिनो हस्तमात्रं पत्रमुदाहृतम् ॥ * ॥]

---

१ प्र. पाठेऽत्र "इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं तत्वसङ्ख्यानम्" इति पठ्यते । प्राचीनकोशेषु तु न । तत्र बीजं स्फुटम् । यतोऽत्र मूलतत्वसङ्ख्यानवचनमेवाविकलमुद्धृतम् । नाऽचार्यवचनं किञ्चित् मङ्गलपद्यानि विना ।

२ इदं पद्यद्वयं अत्र ग्रन्थान्ते लिखितं दृश्यते मूलकोशेषु । आचार्यैरेव सन्दर्भविशेषेषु ग्रथितमित्यत्र हृषीकेशतीर्थैः सङ्गृहीतं भवेत् । "नानासुभाषितस्तोत्रगाथादिकृतिसत्कृतीः । त्वयि रत्नाकरे रत्नश्रेणीर्वा गणयन्ति के" इति ह्युक्तम् । "शतग्रन्थकर्त्ता" इति च प्रमेयनवमालिकायाम् ।

# तत्वविवेकः

ॐ ॥ स्वतन्त्रमस्वतन्त्रं च[1] प्रमेयं द्विविधं मतम् ।
स्वतन्त्रो भगवान् विष्णुर्निर्दोषाखिलसद्गुणः ॥ १ ॥

द्विविधं परतन्त्रं च भावोऽभाव इतीरितः ।
पूर्वापरसदात्वेन त्रिविधोऽभाव इष्यते ॥ २ ॥

भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक् ।
चेतनोऽचेतनश्चेति भावोऽपि[2] द्विविधः स्मृतः ॥ ३ ॥

नित्यमुक्तश्च सृतियुक् परतन्त्रोऽपि चेतनः ।
द्विधैव श्रीर्न्नित्यमुक्ता सृतियुक् च द्विधा मतः ॥ ४ ॥

मुक्तोऽमुक्त इति ह्यत्र ब्रह्मान्ता उत्तरोत्तरम् ।
मुक्ताः शतगुणाः प्रोक्ता रमा तेभ्योऽखिलैर्गुणैः ।
नित्यं बहुगुणोद्रिक्ता ततोऽनन्तगुणो हरिः ॥ ५ ॥

अमुक्तास्त्रिविधास्तत्र नीचमद्ध्योच्चभेदतः ।
मुक्तियोग्यास्तत्र चोच्चा नित्यावर्त्तास्तु मद्ध्यमाः ॥ ६ ॥

नीचा नित्यतमोयोग्या द्विधैवाचेतनं मतम् ।
नित्यानित्यत्वभेदेन देशः कालः श्रुतिस्तथा ।
भूतेन्द्रियप्राणगुणसूक्ष्मरूपं तु नित्यकम् ॥ ७ ॥

---

१ "स्वतन्त्रं परतन्त्रं च" इति प्र. पाठः ।

२ "भावश्च" इति प्र. पाठः ।

एषां विकारोऽनित्यः स्यान्नित्या एव हि चेतनाः ।
गुणक्रियाजातिपूर्वा धर्म्माः सर्वेऽपि वस्तुनः ।
रूपमेव द्विधं तच्च[1] यावद्वस्तु च खण्डितम् ॥ ८ ॥

खण्डिते भेद ऐक्यं च यावद्वस्तु न भेदवत् ।
खण्डितं रूपमेवात्र विकारोऽपि विकारिणः ॥ ९ ॥

कार्यकारणयोश्चैव तथैव गुणतद्वतोः ।
[2]क्रियाक्रियावतोश्चैव तथैवांशांशिनोरपि ॥ १० ॥

य एतत् परतन्त्रं च सर्वमेव हरेः सदा ।
वशमित्येव जानाति संसारान्मुच्यते हि सः ॥ ११ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितः
[3]तत्वविवेकः समाप्तः

---

१ "द्विधा तच्च" इति क्वचित् ।

२ "क्रियाक्रियावतोस्तद्वत् तथा जातिविशेषयोः । विशिष्टशुद्धयोश्चैव तथैवांशांशिनोरपि" इति प्र. पाठेऽधिकम् ।

३ अत्र "मूलग्रन्थे त्वत्रापि तत्वसङ्ख्यानमित्यस्ति" इति बहवः प्राचीनकोशकारा लिखन्ति । सम्प्रत्युपलब्धे तु मूलकोशेऽयं ग्रन्थ एव नोपलभ्यते । प्रायो मूलकोशे कतिचन भागाः पूर्वमेव लुप्ताः, यत्रायमपि ग्रन्थो निलीनः स्यात् ।

# प्रमाणलक्षणम्

ॐ ॥ अशेषगुरुमीशेशं नारायणमनामयम् ।
सम्प्रणम्य प्रवक्ष्यामि प्रमाणानां स्वलक्षणम् ॥ * ॥

यथार्थं प्रमाणम् । तद् द्विविधम्–केवलमनुप्रमाणं च । यथार्थज्ञानं केवलम् । तत्साधनमनुप्रमाणम् । केवलं चतुर्विधम्—ईशलक्ष्मीयोग्ययोगिभेदेन । पूर्वद्वयमनादिनित्यम् । स्वातन्त्र्यपारतन्त्र्याभ्यां तद्विशेषः । पूर्वं स्वपरगताखिलविशेषविषयम् । द्वितीयमीशेऽन्येभ्योऽधिकमसार्वत्रिकमन्यत्र सर्वविषयम् । स्पष्टत्वे भेदः । [1]योगिज्ञान ऋजूनामनादिनित्यमीशे जीवेभ्योऽधिकमन्यत्राऽलोचने सर्वविषयम्; क्रमेण वर्द्धमानमामुक्तेस्ततोऽव्ययम् । ततोऽर्वाक् क्रमेण ह्रसितम्; सादि च तात्विकेभ्योऽन्यत्र । अयोगिज्ञानमुत्पत्तिनाशवदल्पम्[2] ॥

अनुप्रमाणं त्रिविधम्—प्रत्यक्षमनुमानमागम इति । निर्दोषोऽर्थेन्द्रिय[3]सन्निकर्षः प्रत्यक्षम् । निर्दोषोपपत्तिरनुमा[4] । निर्दोषः शब्द आगमः । अर्थापत्त्युपमेऽनुमाविशेषः[5] । अभावोऽनुमा प्रत्यक्षं च । परामर्शापरामर्शविशेषात् । सम्भवपरिशेषावनुमा । [6]आत्मान्योन्याश्रयताचक्रकानवस्थाकल्पनागौरवश्रुतदृष्टहानादयो दूषणानुमाः । उपक्रमोपसंहारतदैकरूप्याभ्यासापूर्वताफलार्थवादा[7] उपपत्तिविशेषाः[8] । त एव सोपपत्तयो लिङ्गानि । समाख्यावाक्यप्रकरणस्थानानि च लिङ्गविशेषाः ।

---

१ "योगिज्ञानमृजूना–" इति प्र. पाठः ।  २ "–मुत्पत्तिविनाशवदल्पम्" इति क्वचित् ।

३ "निर्दोषार्थेन्द्रिय–" इति प्र. पाठः ।  ४ "–रनुमानम्" इति प्र. पाठः ।

५ "अर्थापत्त्युपमे अनुमाविशेषः" इति प्रगृह्य पठन्ति प्र. पाठे । प्राचीनपाठे त्वेवमादिषु सर्वत्राप्रगृह्यैव पाठः । "कृत्वा भाष्यानुभाष्येऽहम्" इति हि न्यायविवरणे ।

६ "आत्मान्योन्याश्रयचक्रका–" इत्यादि प्र. पाठः । "आत्मान्योन्याश्रयतेत्येतत् आत्माश्रयतेति व्याख्येयम् एवं श्रुतदृष्टहानमित्येतत् श्रुतहानं दृष्टहानं चेति व्याख्येयम्" इति प्राचीनटीका ।

७ "–फलार्थवादाश्च" इति प्र. पाठः ।

८ "उपक्रमादीनामुपपत्तिविशेषत्वादुपपत्तितः पृथग् वचनं युज्यते । यथा कौरवविशेषित्वात् पाण्डवाः कौरवेभ्यः पृथगुच्यन्ते" इति प्राचीनटीका ।

व्याप्तिरुपपत्तिमूलम् । सा प्रतिज्ञाहेतुदृष्टान्तरूपा । हेतुगर्भा प्रतिज्ञा केवलाऽपि, सिद्धौ प्रतिज्ञाया[१] हेतुमात्रं च, दृष्टान्तः सप्रतिज्ञो हेतुगर्भः ।

उपपत्तिदोषौ विरोधासङ्गती । न्यूनाधिक्ये[२] वाचनिके । संवादानुक्तियुतास्त एव निग्रहाः[३] ॥ * ॥

प्रत्यक्षं सप्तविधम्—साक्षिषडिन्द्रियभेदेन । मानसप्रत्यक्षजा स्मृतिः । स्मृत्यनुवादयोर्नाप्रामाण्यम्; यथार्थत्वानुभावात् । अहानेश्च ॥ * ॥

विरोधो मानस्ववाक्याभ्याम् । स्ववाक्यविरोधोऽपसिद्धान्तजातिरूपः[४] । जातिर्न मेये[५] मानापेक्षेत्यादिका । मेये मानापेक्षाऽस्तीति च तेनैव न्यायेन सिद्धत्वात्, मानविरोधश्च । छलमसङ्गतमन्यच्च[६] । गृष्टिविवक्षया गामानयेत्युक्ते "पृथिवीविवक्षया न,शक्यमितिवत्[७] ।

त्रिविधो विरोधः प्रतिज्ञाहेतुदृष्टान्तभेदेन । प्रमाणविरुद्धार्थप्रतिज्ञा प्रतिज्ञाविरोधः । हेतुस्वरूपासिद्धिरव्याप्तिरिति[८] हेतुविरोधः । साध्यस्य साधनस्य वाऽननुगमो दृष्टान्तविरोधः । प्रतिज्ञायाः समविरोध[९] एव सप्रतिसाधनः । स एवोपाधिदोषोऽपि ।

सर्वे एते दृश्यत्वानुमाने द्रष्टव्याः । प्रत्यक्षागमादिभिर्जगतः सत्यत्वात्, तत्पक्षे दृश्यत्वस्य च मित्थ्यात्वात्, अनिर्वचनीयस्य प्रतिवादिनोऽसिद्धत्वात्, आत्मनोऽपि दृश्यत्वात्, शुक्तिरजतादेरप्यनिर्वचनीय[१०]त्वाभावात्, अनिर्वचनीयदृश्यत्वाभावात्, मानसिद्धत्वादिति सप्रतिसाधनत्वाच्च ।

जगत्सत्यत्वग्राहिप्रत्यक्षस्य वर्त्तमानग्राहित्वेऽनुमानागमप्रामाण्यग्राहिणोऽपि प्रत्यक्षत्वाविशेषादुत्तरक्षणे प्रामाण्यं न सेत्स्यतीति मेदादिवाक्यानामेव प्रामाण्यं स्यात् । तस्य साक्षिसिद्धत्वं चेज्जगत्सत्यत्वमपि साक्षिसिद्धम् । व्यभिचारश्चेदागमार्थानुमादिनिर्दोषत्वा[११]द्व्यवसाये च समः । अत उत्तरदिवसेऽमेदवाक्यस्य मेदोऽर्थः स्यात् । निर्दोषानुमायाः सदोषत्वं सदोषाया[१२] निर्दोषत्वमित्यव्यवस्था ।

---

१ "प्रतिज्ञायां" इति प्र. पाठः । २ "न्यूनाधिके" इति प्र. पाठः ।

३ "–नुक्तिसंयुता निग्रहाः" इति काचनिकः प्र. पाठः ।

४ –"जातिरूपेण" इति प्र. पाठः । ५ "जातिर्नाम न मेये" इति क्वचित् कोशे ।

६ "अन्यच्चेति । विरोधान्तर्भूतं छलमित्यर्थः । छलस्यासङ्गतत्वमुदाहरणेन दर्शयति- गृष्टिविवक्षयेति" इति प्राचीनटीका ।

७ "पृथिवीविवक्षया गवानयनमशक्य–" इति प्र. पाठः ।

८ "–रव्याप्तिश्चेति" इति प्र. पाठः । ९ "समबलविरोध–" इति प्र. पाठः ।

१० "–रजतादेरनिर्वचनीय–" इति प्र. पाठः । ११ "–नुमानिर्दोषत्वा–" इति प्र. पाठः ।

१२ "सदोषानुमाया–" इति प्र. पाठः ।

आश्रयसाद्धयव्यधिकरणासिद्धयो न दूषणम् । अतिप्रसङ्गाभावात् । अतिप्रसङ्गेन हि दोषत्वं कल्प्यम्[१] । व्याप्तिरेव हि प्रयोजका[२] । असत्यपि व्याप्तिरस्त्येव । असदाश्रयस्य साधनत्वं[३] नेत्यपि व्याप्तिं विना कथं निवार्यते? असदाश्रयमित्यादिविशेषणत्वसम्भवे कथमव्याप्तिः? नचात्यन्ताभावोऽपि सर्वधर्म्मरहितः; प्रमेयत्वाद्यनुभवात् । परिशेषात्र्थापत्तिप्रामाण्याभ्युपगमाच्च । "विमतं सकर्त्तृकम्" इत्यत्र सर्वज्ञत्वस्य पक्षधर्म्मताबलेन सिद्धयङ्गीकारात् ।

परिशेषोऽर्त्थापत्तिरनुमानमित्यविशेषः; उपपत्तिमात्रत्वात् । उपपत्तेश्च व्याप्त्यपेक्षा सर्वथाऽङ्गीकार्येत्याग्रहमात्रेण भेदः । उपमानस्यापि; व्याप्तिरूपत्वात् । नहि स्वसदृशेनासदृशत्वं[४] क्वचिद् दृष्टम् । योग्यानुपलब्धेश्च लिङ्गत्वमविशेषात् ॥ * ॥

उक्तदोषेष्वेवाशेषानुमादोषा[५]णामन्तर्भावः । साद्ध्याविशिष्टोऽसिद्धः सिद्धसाधको वा । सिद्धसाधकोऽसङ्गतः[६] ॥ * ॥

न प्रमासाधनं प्रमाणम् । ज्ञानव्यतिरिक्तप्रमायां प्रमाणाभावात् । नचाज्ञातपरिच्छित्तिरेव प्रमेत्यत्र मानम्[७] । याथार्त्थ्यमेव प्रामाण्यमित्यङ्गीकारात् । नचानुभूतिरेव प्रमाणम् । स्मृत्यादावव्याप्तेः । वेदानुमादि[८]प्रामाण्यप्रसिद्धेश्च ॥

> "श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्[९] । प्रमाणमिति विज्ञेयं धर्म्माद्यर्त्थे बुभूषुभिः" इति श्रुतेश्च ।

ऐतिह्यमागमभेदः । नच सम्यगनुभवसाधनं प्रमाणम् । ईश्वरज्ञानादावव्याप्तेः[१०] प्रामाण्ये । अप्रामाण्ये प्रमाणाभावाच्च । प्रामाण्यज्ञाने च । तत्राप्यङ्गीकारेऽनवस्थितेः । स्वयम्प्रकाशात्मा[११]ङ्गीकारे तत्राव्याप्तेः । स्मृतेः प्रामाण्यानङ्गीकारादनुभूतं[१२] मयेत्यत्र प्रमाणाभावाच्च[१३] । लिङ्गत्वेन

---

१ "दोषत्वादोषत्वे कल्प्ये" इति प्र. पाठः ।

२ "प्रयोजिका" इति प्र. पाठः । प्रयोजका, साधका इत्यादि च प्राचीनं रूपम् । 'साधका युक्तयः', 'शिवे सर्वार्थसाधके' इत्यादि हि दृश्यते ।

३ "साधकत्वम्" इति प्र. पाठः ।

४ "–नासदृशम्" इति प्र. पाठः ।

५ "–नुमानदोषाणा–" इति प्र. पाठः ।

६ "साद्धयाविशिष्टोऽसिद्धः, सिद्धसाधकोऽसङ्गतः" इति प्र. पाठः ।

७ "–त्यत्र किञ्चिन्मानम्" इति प्र. पाठः ।

८ "वेदानुमानादि–" इति प्र. पाठः ।

९ "–मनुमानश्चतुष्टयम्" इति प्र. पाठः ।

१० "–ज्ञानादावव्याप्तेः । अप्रामाण्ये" इति प्र. पाठः ।

११ "स्वप्रकाशात्मा–" इति प्र. पाठः ।

१२ "स्मृतेश्च प्रामाण्यानङ्गीकारेऽनुभूतम्" इति प्र. पाठः ।

१३ "प्रमाणाभावात् । लिङ्गत्वेन–" इति प्र. पाठः ।

प्रामाण्ये कल्पनागौरवम्; दृष्टहानिश्च । स्मृतिप्रमाणद्वैविध्यमात्रकल्पने मित्थ्याज्ञानादेर्न्निराकरणादनुभवविरोधः । तदनुभवाभाव इत्युक्तेऽनुभवः स्मृतिश्च नास्तीत्युक्तेः[१] किमुत्तरम्?

स्वसिद्धैः साधनम् । परसिद्धैर्दूषणम् । अतो न दूषणेऽपसिद्धान्तादिः[२] । इष्टापत्तिः सिद्धसाधनत्वादसङ्गतमेव ॥ * ॥

आनन्दतीर्थमुनिना ब्रह्मतर्कोक्तिमार्ग्गतः[३] ।
मानलक्षणमित्युक्तं सङ्क्षेपाद् ब्रह्मसिद्धये ॥ * ॥

अशेषमानमेयैकसाक्षिणेऽक्षयमूर्त्तये ।
अजेशपुरुहूतेड्य नमो नारायणाय ते ॥ * ॥

इति श्रीमदानन्दतीर्थभगवत्पादकृतं
प्रमाणलक्षणं समाप्तम्

---

१ "नास्तीत्युक्ते" इति प्र. पाठः । २ "–पसिद्धान्तादि" इति प्र. पाठः ।
३ "ब्रह्मतर्क्कोक्तमार्गतः" इति क्वचित् प्र. पाठः ।

# वादलक्षणम्

ॐ ॥ नृसिंहमखिलाज्ञानतिमिराशिशिरद्युतिम् ।
सम्प्रणम्य प्रवक्ष्यामि कथालक्षणमञ्जसा ॥ १ ॥

वादो जल्पो वितण्डेति त्रिविधा विदुषां कथा ।
तत्वनिर्णयमुद्दिश्य केवलं गुरुशिष्ययोः ।
कथाऽन्येषामपि सतां वादो वा समितेः शुभा ॥ २ ॥

ख्यात्याद्यर्थं स्पर्द्धया वा सतां जल्प इतीर्यते ।
वितण्डा तु सतामन्यैस्तत्वमेषु निगूहितुम्[1] ॥ ३ ॥

[[2]विद्यापरीक्षापूर्वैव वितण्डा जल्प एव च ।
उच्चनीचत्वनिर्णीतिर्यतो जयपराजयौ ॥ ४ ॥

विनैव तत्वनिर्णीतिं नहि जल्पादिना क्वचित् ।
उच्चनीचत्वविज्ञानमिति विद्यापरीक्षणम् ॥ ५ ॥

---

१ "निगूहितम्" इति प्र. पाठः । "सत्सिद्धान्तमुत्सादयितुं यत्रासन्तः स्वपक्षसाधनं कुर्युः, तत्रासत्सु तत्वस्याकथनीयत्वात् स्वपक्षसाधनमकृत्वा सन्तोऽसत्पक्षदूषणमेव कुर्युः, सेयं स्वपक्षस्थापनरहिता परपक्षदूषणरूपा कथा वितण्डेत्यर्थः" इति प्राचीनटीका । तत्वं निर्णेतुं वादः, तत्वं निगूहितुं वितण्डा, ख्यात्याद्यर्थं जल्प इति ।

२ "विद्यापरीक्षा-" इत्याद्यारभ्य "-पक्षपातविवर्जिताः" इत्येकादशश्लोकपर्यन्तं अष्टौ श्लोकाः (४-११) प्रचलितपाठे न पठ्यन्ते। नच व्याख्यायि टीकाकृद्भिः। एत एव च श्लोका अविकलमनुव्याख्यानेऽपि (२. १. ४२-५०) पठ्यन्ते । एवं सम्भाव्यते—पूर्वं विनैवैतान् श्लोकान् ग्रन्थः प्राणायि । परस्तात् शिष्यबुद्धिशुद्ध्यर्थं शिष्यप्रार्थनया वा भगवत्पादैरेव मद्ध्येग्रन्थ निवेशिता इति। ततश्च ब्रह्मतर्कादुद्धृता हि एते श्लोका अनुव्याख्यानेऽपि पठिता अत्रापि पठ्यन्त इति न कोऽपि दोषः । अत एवच पद्मनाभतीर्थभट्टारकैरप्यनुव्याख्याने कृतव्याख्याना इति नात्र पुनर्व्याख्याता भवेयुः । एतेन प्राचीनपाठप्राचीनटीकयोः विरोध इत्यप्यपास्तं भवति । अधिकं मायावाददूषणटिप्पण्यां स्फुटम् ।

वादेन चोच्चनीचत्वविज्ञानं भवति स्फुटम् ।
इति वादस्य पूर्वत्वं तत्सिद्धौ व्यर्थताऽन्ययोः ॥ ६ ॥

बहुविद्यत्वसिद्धौ तु नैव वादोऽपि कारणम् ।
सभासभापप्राश्नीकपूर्वस्तु स्पर्द्धिनामपि ।
वाद एवोभयार्थः स्यान्निर्णीतिजयकारकः ॥ ७ ॥

तत्वाप्रकाश एवैको वितण्डाजल्पयोः फलम् ।
विना वादेन विद्याया यदि शक्यं परीक्षणम् ।
स्याज्जल्पादिरपि क्वापि वाद एवान्यथा भवेत् ॥ ८ ॥

जल्प इत्यपि नाम स्याद् वादस्यैतादृशस्य तु ।
प्रतिज्ञामात्रसाद्ध्यत्वमपि स्याद् याज्ञवल्क्यवत् ।
संवादे वादिनोः क्वापि विवादे हेतुरिष्यते ॥ ९ ॥

सभा सभापतिश्चैव प्राश्निकाश्चैव वैष्णवाः ।
रागद्वेषविहीनाश्च स्युः सभ्याः सर्ववेदिनः ॥ १० ॥

प्राश्निकाश्चैतदज्ञाने सभ्याश्चैषां च दूरगाः ।
प्रमाणनिर्णयाय स्युः पक्षपातविवर्जिताः ॥ ११ ॥]

स्वयं वा प्राश्निकैर्वादे चिन्तयेत् तत्वनिर्णयम् ।
रागद्वेषविहीनास्तु सर्वविद्याविशारदाः ।
प्राश्निका इति सम्प्रोक्ता[1] विषमा एक एव वा ॥ १२ ॥

अशेषसंशयच्छेत्ता निस्संशय उदारधीः ।
एकश्चेत् प्राश्निको ज्ञेयः सर्वदोषविवर्जितः ॥ १३ ॥

एको वा बहवो वा स्युर्विष्णुभक्तिपराः सदा ।
विष्णुभक्तिर्हि सर्वेषां सद्गुणानां[2] स्वलक्षणम् ॥ १४ ॥

[3]परीक्ष्य विद्यां समयोर्वितण्डा जल्प एव च ।
पृष्टेनाऽगम एवाऽदौ वक्तव्यः साद्ध्यसिद्धये ॥ १५ ॥

---

१ "विज्ञेयाः" इति प्र. पाठः ।

२ "सद्गुणानां समीचीनगुणवतां सर्वेषां चेतनानां विष्णुभक्तिरेव स्वलक्षणमव्यभिचरितं लक्षणम्" इति प्राचीनटी०।

३ इदमर्द्धं प्र. पाठे न पठ्यते । "–स्वलक्षणम्" इत्यनन्तरं "पृष्टेनाऽगम–" इत्याद्येव पठ्यते ।

नैषा तर्केणाऽपनेया मतिरित्याह हि श्रुतिः ।
अन्यार्थ एवाऽऽगमस्य वक्तव्यः प्रतिवादिना ॥ १६ ॥

[1]ऋग्यजुःसामाथर्वाः सपञ्चरात्रं च भारतम् ।
मूलरामायणं चैव सम्प्रोच्यन्ते सदागमाः ॥ १७ ॥

अनुकूला य एतेषां ते च प्रोक्ताः सदागमाः ।
अन्ये दुरागमा नाम तैर्न साध्यं हि साध्यते ॥ १८ ॥

स्वपक्ष आगमश्चैव वक्तव्यः प्रतिवादिना ।
तस्याप्यन्यार्थता साध्या वादिना स्वार्थसिद्धये ॥ १९ ॥

अन्यार्थता निराकार्या स्वागमस्य विनिश्चयात् ।
उपपत्त्यवकाशोऽत्र ह्यागमार्थविनिर्णये ॥ २० ॥

वाद्यागमार्थे निर्णीत आगमार्थः परस्य तु ।
निर्णेयः सहितः[2] पश्चात् ततो निश्शेषनिर्णयः ॥ २१ ॥

प्रत्यक्षसिद्धेष्वर्थेषु प्रश्ने मामक्षजं वदेत् ।
ज्ञानं वा ज्ञानसिद्धेषु[3] नानुमां प्रथमं वदेत् ॥ २२ ॥

परतुष्टिकरं वाक्यं वदेतां यदि वादिनौ ।
स एवात्राऽऽगमो ज्ञेयः परतुष्टिर्हि तत्फलम् ॥ २३ ॥

एवं निर्णयपर्यन्तं वादे सुबहवोऽपि हि ।
घटेयुश्चिरकालं च जल्पे यावत् परो जितः ॥ २४ ॥

तत्वनिर्णयवैलोम्यं वादे साक्षात् पराजयः ।
संवादे श्लाघ्यतैव स्याद् गुरुत्वमितरस्य च ।
तत्वनिर्णयवैलोम्ये निन्द्यो दण्ड्योऽथवा भवेत् ॥ २५ ॥

विरोधासङ्गतिन्यूनतूष्णीम्भावाधिकैर्ज्जितः[4] ।
भवेज्जल्पे वितण्डाया[5] न्यायो जल्पवदीरितः ॥ २६ ॥

---

१ "ऋग्यजुस्सामाथर्वाश्च भारत पञ्चरात्रकम्" इति प्र. पाठः ।

२ "सहितैः" इति प्र. पाठः । सहितः युक्त्यादिसहकृतः इत्यर्थः ।

३ "घटादिसद्भावं प्रत्यक्षेण प्रतिपादयेत् । सुखदुःखादिसद्भावमनुभवेन प्रतिपादयेत् । तद्दार्ढ्यायानन्तरमनुमानमपि प्रयुञ्ज्यात्" इति प्राचीनटीका ।

४ "—तूष्णीम्भावादिकैर्जित." इति प्र पाठः ।

५ "वितण्डायाम्" इति प्र. पाठः । यद्यपि प्राचीनकोशे "जल्पवितण्डायाः" इति पठ्यते । तथाऽपि बहुकोशसंवादात् अर्थानुगुण्याच्च स्खलितं तदिति सम्भाव्यते ।

संवादे दण्ड्यता न स्याद् वितण्डाजल्पयोरपि ।
पराजितत्वमात्रं स्यान्निन्द्यो दण्ड्योऽपिवाऽन्यथा ॥ २७ ॥

अनुवादादिराहित्यं नैव जल्पेऽपि दूषणम् ।
विद्याहीनत्वलिङ्गेऽपि वादिनोः स्यात् पराजयः[1] ॥ २८ ॥

तदभावान्नैव षट्कादन्यो निग्रह इष्यते ।
अन्तर्भावादिहान्येषां निग्रहाणामिति स्म ह ॥ २९ ॥

[2]विद्यापरिक्षापूर्वैव वृत्तिर्जल्पवितण्डयोः ।
[3]स्खलितत्वादिमात्रेण न तत्रापि पराजयः ।
वादजल्पवितण्डानामिति शुद्धं स्वलक्षणम् ॥ ३० ॥

आनन्दतीर्थमुनिना ब्रह्मतर्कानुसारतः ।
कथालक्षणमित्युक्तं प्रीत्यर्थं शार्ङ्गधन्वनः ॥ ३१ ॥

सदोदितामितज्ञानपूरवारितहृत्तमाः ।
नरसिंहः प्रियतमः प्रीयतां पुरुषोत्तमः ॥ ३२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितं
[4]वादलक्षणं समाप्तम्

---

१ "नहि हीनविद्यस्याधिकविद्येन जल्पो वितण्डा वा युज्यते । समानविद्ययोरेव तस्य युक्तत्वात्" इति प्राचीनटीका ।

२ "यद् विद्याहीनत्वं तद् वादिप्रतिवादिविद्यापरीक्षाकाले प्राश्निकैरेव मन्तव्यम् । नतु वादिनि प्रतिवादिना वा, प्रतिवादिनि वादिना वा उद्भाव्यम् । अतो न तन्निग्रहस्थानान्तरम्" इति प्राचीनटीका । एतदेव च "विद्यापरीक्षापूर्वैव–" (४–११)इत्यादिभिः पूर्वतनैः श्लोकैर्विवृतमित्यवगन्तव्यम् । अत्र पुनः पूर्वोक्तमेव सङ्गृह्योपसंह्रियते ।

३ "न्यूनोक्त्यनन्तरमेवाधिकोक्तौ न न्यूनोक्त्यादिना पराजयो भवतीत्यर्थः" इति प्राचीनटीका ।

४ "कथालक्षणम्" इति प्रचलितं नाम । यद्यपि वाद इति कथास्वेकः । अथापि प्राधान्यात्, तत्वनिर्णयाय तस्यैव ग्राह्यत्वाच "वादलक्षणम्" इति नाम चकार । त्रिविधा कथाऽपिच क्वचिद् वादपदेनोच्यते । तद्यथा–तत्ववादः, जल्पाख्यो वादः, वितण्डावाद इत्यादि । अत एव च 'तत्वोद्योत'स्य वाद इति नाम । अतश्चैतद् युक्तम्–वादलक्षणमिति ।

[²असम्बद्धप्रवचनमसम्बद्धाः प्रवृत्तयः ।
प्रतिज्ञायाश्च सन्त्यागः कथायाः पूर्वनिग्रहः ॥ * ॥

श्रुतिर्नाम समुद्दिष्टं लिङ्गं तल्लक्षण स्मृतम् ।
पदानि निरपेक्षाणि वाक्यं प्रकरणं तथा ।
एकस्य प्रतिपत्त्यङ्गवचनं स्थानमुच्यते ।
अन्यत्र तत्समोक्तिस्तु समाख्या स्थानमेव च ।
अध्यायादिप्रबन्धस्तु प्रभेदा आगमस्य च ॥ * ॥]

---

२ एतानि वाक्यानि, एतद्ग्रन्थान्ते श्रीहृषीकेशतीर्थैर्लिखितानि दृश्यन्ते । एतद्ग्रन्थप्रमेयोपयुक्तमाचार्यैरेवान्यान्यसन्दर्भेषूक्तं तच्छिष्यप्रवरैरत्र लिपिबद्धं कृतं स्यात् । "श्रुतिर्नाम– " इत्यादीनि वाक्यानि ब्रह्मसूत्रभाष्यान्तेऽपि लिखितानि दृश्यन्त इति पूर्वमेवोक्तम् । तत्वदीपिकाकृद्भिरपीमानि प्रमाणवचनानि स्वग्रन्थे निबद्धानि । तत इदमाचार्यवचनमेव भवेत् । आहो, स्वोक्तिसम्बद्धं वा प्रमाणवचनं शिष्यबोधनाय भगवत्पादैरुद्धृतं भवेत् ।

# सङ्कीर्णग्रन्थाः (२)

[ आचारप्रकरणम् ]

*

कृष्णामृतमहार्णवः
तन्त्रसारसङ्ग्रहः
सदाचारस्मृतिः
जयन्तीनिर्णयः
ओन्ततत्सत्प्रणवकल्पः
न्यासपद्धतिः
तिथिनिर्णयः

# कृष्णामृतमहार्ण्णवः*

ॐ ॥ अर्च्चितः संस्मृतो ध्यातः कीर्त्तितः कथितः श्रुतः ।
यो ददात्यमृतत्वं हि स मां रक्षतु केशवः ॥ १ ॥

तापत्रयेण सन्तप्तं यदेतदखिलं जगत् ।
वक्ष्यामि शान्तये ह्यस्य कृष्णामृतमहार्ण्णवम् ॥ २ ॥

ते नराः पशवो लोके किं तेषां जीवने फलम् ।
यैर्न्न लब्धा हरेर्द्दीक्षा नार्च्चितो वा जनार्द्दनः ॥ ३ ॥

संसारेऽस्मिन् महाघोरे जन्मरोगभयाकुले ।
अयमेको महाभागः पूज्यते यदधोक्षजः ॥ ४ ॥

स नाम सुकृती लोके कुलं तेन ह्यलङ्कृतम्[1] ।
आधारः सर्वभूतानां येन विष्णुः प्रसादितः ॥ ५ ॥

यज्ञानां तपसां चैव शुभानां चैव कर्म्मणाम् ।
तद्विशिष्टफल नृणां सदैवाऽऽराधनं हरेः ॥ ६ ॥

कलौ कलिमलध्वंसिसर्वपापहरं हरिम् ।
येऽर्च्चयन्ति नरा नित्यं तेऽपि वन्द्या यथा हरिः ॥ ७ ॥

नास्ति श्रेयस्करं नृणां विष्णोराराधनान्मुने ।
युगेऽस्मिंस्तामसे लोके सततं पूज्यते नृभिः ॥ ८ ॥

---

* यद्यपि कृष्णामृतमहार्ण्णवः हृषीकेशतीर्थीये मूलकोशे सम्प्रति नोपलभ्यते । तथाऽपि श्रीरघुवर्यतीर्थश्रीपादैः मूलकोशानुसारेण लिखितं पुस्तकमनुसृत्यात्र पाठो निरणायि । एवमुत्तरत्र तन्त्रसारसङ्ग्रहेऽपि ।

१ "तेनाभ्यलङ्कृतम्" इति प्र. पाठः । "तेनात्यलङ्कृतम्" इति क्वचित् ।

अर्चिते देवदेवेशे[1] शङ्खचक्रगदाधरे ।
अर्चिताः सर्वदेवाः स्युर्यतः सर्वगतो हरिः ॥ ९ ॥

स्वर्चिते सर्वलोकेशे[2] सुरासुरनमस्कृते ।
केशवे कंसकेशिघ्ने न याति नरकं नरः ॥ १० ॥

सकृदभ्यर्च्य गोविन्दं बिल्वपत्रेण मानवः ।
मुक्तिभागी निरातङ्की विष्णुलोके चिरं वसेत् ॥ ११ ॥

[3]सकृदभ्यर्चितो येन हेळयाऽपि[4] नमस्कृतः ।
स याति परमं स्थानं यत् सुरैरपि दुर्लभम् ॥ १२ ॥

॥ नारदः ॥

समस्तलोकनाथस्य देवदेवस्य शार्ङ्गिणः ।
साक्षाद् भगवतो विष्णोः पूजनं जन्मनः फलम् ॥ १३ ॥

॥ पुलस्त्यः[5] ॥

भक्त्या दूर्वाङ्कुरैः पुम्भिः पूजितः पुरुषोत्तमः ।
हरिर्ददाति हि फलं सर्वयज्ञैश्च दुर्लभम् ॥ १४ ॥

विधिना देवदेवेशः शङ्खचक्रधरो हरिः ।
फलं ददाति सुलभं सलिलेनापि पूजितः ॥ १५ ॥

नरके पच्यमानस्तु यमेन परिभाषितः ।
किं त्वया नार्चितो देवः केशवः क्लेशनाशनः ॥ १६ ॥

॥ धर्म्मः[6] ॥

[7]नरसिंहो हृषीकेशः पुण्डरीकनिभेक्षणः ।
स्मरणान्मुक्तिदो नृणां स त्वया किं न पूजितः ॥ १७ ॥

---

१ "सर्वदेवेशे" इति प्र. पाठः । २ "अर्चिते सर्वदेवेशे" इति क्वचित् ।
३ अत्राऽदौ "शङ्करः ।" इति प्र. पाठेऽधिकम् ।
४ "हेलयाऽपि" इति प्र. पाठः । अपिचात्राधिकं पठ्यते । तद्यथा—
"सकृदभ्यर्चितो येन देवदेवो जनार्दनः ।
यत् कृतं तत् कृतं तेन सम्प्राप्तं परमं पदम् ।
सकृदभ्यर्चितो येन हेलयाऽपि नमस्कृतः" इति ।
उत्तरत्र मार्कण्डेयवचनत्वेन (श्लो. २०) पुनरिदं पठ्यत इत्यत्र न वक्तव्यमेतत् ।
५ "पुलहः" इति क्वचित् । ६ "यमः" इति क्वचित् । ७ "नारसिंहो—" इति प्र. पाठः ।

[1]द्रव्याणामप्यभावे तु सलिलेनापि पूजितः ।
यो ददाति स्वकं स्थानं स त्वया किं न पूजितः ॥ १८ ॥

[1]गर्भस्थिता मृता वाऽपि मुषितास्ते सुदूषिताः ।
न प्राप्ता यैर्हरेर्दीक्षा सर्वदुःखविमोचनी ॥ १९ ॥

॥ मार्कण्डेयः ॥

सकृदभ्यर्च्चितो येन देवदेवो जनार्दनः ।
यत्कृतं तत्कृतं तेन सम्प्राप्तं परमं पदम् ॥ २० ॥

धर्म्मार्त्थकाममोक्षाणां नान्योपायस्तु विद्यते ।
सत्यं ब्रवीमि देवेश हृषीकेशार्च्चनादृते ॥ २१ ॥

तस्य यज्ञवराहस्य विष्णोरमिततेजसः ।
प्रणामं येऽपि[2] कुर्वन्ति तेषामपि नमोनमः ॥ २२ ॥

॥ मरीचिः ॥

अनाराधितगोविन्दैर्न्नरैः स्थानं नृपात्मज ।
नहि सम्प्राप्यते श्रेष्ठं तस्मादाराधयाच्युतम् ॥ २३ ॥

॥ अत्रिः ॥

परः पराणां पुरुषस्तुष्टो यस्य जनार्दनः ।
स चाऽप्नोत्यक्षयं स्थानमेतत् सत्यं मयोदितम् ॥ २४ ॥

॥ अङ्गिराः ॥

यस्यान्तः सर्वमेवेदमच्युतस्याव्ययात्मनः ।
तमाराधय गोविन्दं स्थानमग्र्यं यदीच्छसि ॥ २५ ॥

॥ पुलहः[4] ॥

परं ब्रह्म परं धाम योऽसौ ब्रह्म सनातनम्[5] ।
तमाराध्य हरिं याति मुक्तिमप्यतिदुर्ल्लभाम्[6] ॥ २६ ॥

---

१ प्र. पाठे तु इमौ [१७–१८] श्लोकौ व्यत्यासेन पठ्येते– "द्रव्याणामप्यभावे तु–" इत्ययमादौ, ततः परं "नारसिंहो हृषीकेशः–" इत्यादिरिति ।

२ "अत्राऽदौ "ब्रह्मा" इति प्र. पाठेऽधिकम् । ३ "ये च" इति क्वचित् ।

४ "पुलस्त्यः" इति प्र. पाठः । क्वचित् कोशेषु च । विष्णुपुराणेऽपि पुलस्त्यवचनत्वेनैवेदं पठ्यते ।

५ "सनातनः" इति क्वचित् ।

६ "यान्ति मुक्तिमप्यथ दुर्ल्लभाम्" इति प्र. पाठः । "याति मुक्तिमप्यथ दुर्ल्लभाम्" इति क्वचित् ।

[1]ऐन्द्रमिन्द्रः परं स्थानं यमाराध्य जगत्पतिम् ।
प्राप यज्ञपतिं विष्णुं तमाराधय सुव्रत ॥ २७ ॥

[2]प्राप्नोत्याराधिते विष्णौ मनसा यद्यदिच्छति ।
त्रैलोक्यान्तर्गतं स्थानं किमु लोकोत्तरोत्तरान्[3] ॥ २८ ॥

[4]ये स्मरन्ति सदा विष्णुं शङ्खचक्रगदाधरम् ।
सर्वपापविनिर्मुक्ताः परं ब्रह्म विशन्ति[5] ते ॥ २९ ॥

ततोऽनिरुद्धं देवेशं प्रद्युम्नं च ततः परम् ।
ततः सङ्कर्षणं देवं वासुदेवं परात्परम् ॥ ३० ॥

वासुदेवात् परं नास्ति इति वेदान्तनिश्चयः ।
वासुदेवं प्रविष्टानां पुनरावर्त्तनं कुतः ॥ ३१ ॥

॥ [6]आत्रेयः ॥

यो यानिच्छेन्नरः कामान् नारी वा वरवर्णिनी ।
तान् समाप्नोति विपुलान्[7] समाराध्य जनार्द्दनम्[8] ॥ ३२ ॥

॥ ब्रह्मा ॥

बाहुभ्यां सागरं तर्त्तुं क इच्छेत पुमान् भुवि ।
वासुदेवमनाराध्य को मोक्षं गन्तुमिच्छति ॥ ३३ ॥

॥ [9]शङ्करः ॥

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्योक्तं हरिसंस्मरणं परम् ॥ ३४ ॥

[10]नह्यपुण्यवतां लोके मूढानां कुटिलात्मनाम् ।
भक्तिर्भवति गोविन्दे स्मरणं कीर्त्तनं तथा ॥ ३५ ॥

---

१ अत्राऽदौ "पुलहः" इति प्र. पाठे । पुराणे च तथा ।

२ इदं वसिष्ठवचनमिति पुराणे स्थितम् ।

३ "लोकोत्तरोत्तरम्" इति प्र. पाठः ।

४ "येऽर्चयन्ति" इति कोशेषु पाठान्तरम् ।

५ "ब्रह्म व्रजन्ति" इति क्वचित् ।

६ "अत्रिः" इति क्वचित् ।

७ "समाप्नोत्यविकलम्" इतिं क्वचित् ।

८ इतः परं क्वचित्—"कौशिकः– अनाराधितगोविन्दास्ते नरा दुःखभागिनः । आराध्य वासुदेवं स्युः सर्वानन्दैकभागिनः" इत्येकं पद्यमधिकम् । तत्रापि "–वासुदेवं स्यात् सर्वानन्दैकभाजनः" इति पाठान्तरं क्वचित् । क्वचिच्चेदं "बाहुभ्याम्–" इत्याद्युत्तर (३३) श्लोकानन्तरं पठ्यते ।

९ "पराशरः" इति क्वचित् ।

१० अत्राऽदौ "ब्रह्मा" इति क्वचित् कोशेषु पठ्यते

तदैव पुरुषो मुक्तो जन्मदुःखजरादिभिः[1] ।
जितेन्द्रियो विशुद्धात्मा यदैव स्मरते हरिम् ॥ ३६ ॥

प्राप्ते कलियुगे घोरे धर्म्मज्ञानविवर्ज्जिते ।
न कश्चित् स्मरते देवं कृष्णं[2] कलिमलापहम् ॥ ३७ ॥

न कलौ देवदेवस्य [3]जन्मदुःखापहारिणः ।
करोति मर्त्त्यो मूढात्मा स्मरणं कीर्त्तनं हरेः ॥ ३८ ॥

ये स्मरन्ति सदा विष्णुं विशुद्धेनान्तरात्मना ।
ते प्रयान्ति भवं त्यक्त्वा[4] विष्णुलोकमनामयम् ॥ ३९ ॥

गर्भजन्मजरारोगदुःख[5]संसारबन्धनैः ।
[6]न बाध्यते नरो नित्यं [7]वासुदेवमनुस्मरन् ॥ ४० ॥

यममार्ग्गं महाघोरं नरकाणि यमं तथा ।
स्वप्नेऽपिच न पश्येत्[8] यः स्मरेद् गरुडद्ध्वजम् ॥ ४१ ॥

हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
पादोदकं च निर्म्माल्यं मस्तके यस्य सोऽच्युतः ॥ ४२ ॥

गोविन्दस्मरणं पुंसां [9]पापराशिमहाचलम् ।
असंशयं दहत्याशु तूलराशिमिवानलः ॥ ४३ ॥

॥ अगस्त्यः ॥

स्मरणादेव कृष्णस्य पापसङ्घातपञ्जरम्[10] ।
शतधा भेदमायाति गिरिर्वज्रहतो यथा ॥ ४४ ॥

कृष्णे रताः कृष्णमनुस्मरन्त[11]-
स्तद्भावितास्तद्गतमानसाश्च ।

---

१ "–जराधिभिः" इति क्वचित् । "जन्ममृत्युभयादिभिः" इति च ।
२ "विष्णुम्" इति क्वचित् ।
३ "सर्वदुःखा–" इति क्वचित् ।
४ "भयं त्यक्त्वा" इति प्र. पाठः ।
५ "जरामृत्युदुःख–" इति प्र. पाठः ।
६ "नरो न बाद्ध्यते नित्यम्" इति क्वचित् ।
७ "नारायणमनु–" इति क्वचित् पाठान्तरम् ।
८ "स्वप्नेऽपि नैव पश्येत" इति प्र. पाठः । क्वचित् कोशेऽपि तथा । "स्वप्नेऽपि वा न पश्येत" इत्यपि क्वचित् ।
९ "पापराशिं महा–" इति क्वचित् ।
१० "–पञ्जरः" इति प्र. पाठः ।
११ "कृष्णमनुस्मरन्ति तद्भा–" इति प्र. पाठः ।

[1]ते भिन्नदेहाः प्रविशन्ति विष्णुं
हविर्यथा मन्त्रहुतं हुताशे ॥ ४५ ॥

सा हानिस्तन्महच्छिद्रं सा चान्धजडमूकता ।
यन्मुहूर्त्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते ॥ ४६ ॥

नारायणो नाम नरो नराणां
प्रसँह्य चोरः कथितः पृथिव्याम् ।
अनेकजन्मार्ज्जितपापसञ्चयं
[2]दहत्यशेषं स्मृतमात्र एव[3] ॥ ४७ ॥

यस्य संस्मरणादेव वासुदेवस्य शार्ङ्गिणः ।
कोटिजन्मार्ज्जितं पापं तत्क्षणादेव नश्यति ॥ ४८ ॥

किं तस्य बहुभिस्तीर्त्थैः किं तपोभिः किमद्ध्वरैः ।
यो नित्यं द्ध्यायते देवं नारायणमनन्यधीः ॥ ४९ ॥

ये मानवा विगतरागपरावरज्ञा
नारायणं सुरगुरुं सततं स्मरन्ति ।
द्ध्यानेन तेन हतकिल्बिषचेतनास्ते
मातुः पयोधररसं न पुनः पिबन्ति ॥ ५० ॥

हे चित्त चिन्तयस्वेह वासुदेवमहर्न्निशम् ।
नूनं यश्चिन्तितः पुंसां हन्ति संसारबन्धनम ॥ ५१ ॥

आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः ।
इदमेकं सुनिष्पन्नं द्ध्येयो नारायणः सदा ॥ ५२ ॥

स्मृते सकलकल्याणभाजनं यत्र जायते ।
पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥ ५३ ॥

वेदेषु यज्ञेषु तपस्सु चैव
दानेषु तीर्त्थेषु व्रतेषु चैव[4] ।
इष्टेषु पूर्त्तेषु च यत् प्रदिष्टं
[5]पुण्यं स्मृते तत् खलु वासुदेवे ॥ ५४ ॥

---

१ "भिन्नेऽपि देहे प्रवि–" इति प्र. पाठः ।
२ "हरत्यशेषम्" इति प्र. पाठः । हरतीति पाठः स्वरसः प्रतिभाति । कोशेषु दहतीत्येव पठ्यते ।
३ "स्मृतिमात्रयैव" इति क्वचित् ।
४ "व्रतेषु यच्च" इति प्र. पाठः । क्वचित् कोशेषु च ।
५ "पुंसां स्मृते" इति क्वचित् ।

॥ [1]और्वैः ॥

आराद्ध्यैव नरो विष्णुं मनसा यद्यदिच्छति ।
फलं प्राप्नोत्यविकलं[2] भूरि स्वल्पमथापि वा ॥ ५५ ॥

यन्नामकीर्त्तनं भक्त्या [3]विलायनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः ॥ ५६ ॥

कलिकल्मषमत्युग्रं नरकार्त्तिप्रदं नृणाम् ।
प्रयाति विलयं सद्यः सकृत् सङ्कीर्त्तितेऽच्युते ॥ ५७ ॥

अनायासेन चाऽयान्ति[4] मुक्तिं केशवमाश्रिताः[5] ।
तद्विघाताय जायन्ते शक्राद्याः परिपन्थिनः ॥ ५८ ॥

चतुस्सागरमासाद्य [6]जम्बूद्वीपोत्तमे क्वचित् ।
न पुमान् केशवादन्यः सर्वपापचिकित्सकः ॥ ५९ ॥

यदभ्यर्च्चर्य हरिं भक्त्या कृते वर्षशतैरपि ।
फलं प्राप्नोत्यविकलं[7] कलौ सङ्कीर्त्त्य केशवम् ॥ ६० ॥

क्षीयते तु यदा धर्म्मः प्राप्ते घोरे कलौ युगे ।
तदा न कीर्त्तयेत् कश्चिन्मुक्तिदं देवमच्युतम् ॥ ६१ ॥

अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तमृगैरिव[8] ॥ ६२ ॥

नारायणेतिमन्त्रोऽस्ति वागस्ति वशवर्त्तिनी ।
तथाऽपि नरके घोरे [9]मज्जन्तीत्येतदद्भुतम् ॥ ६३ ॥

आर्त्ता विषण्णाः शिथिलाश्च भीता
घोरेषु च व्याधिषु वर्त्तमानाः ।
सङ्कीर्त्त्य नारायणशब्दमात्रं
विमुक्तदुःखाः सुखिनो भवन्ति ॥ ६४ ॥

---

१ प्र. पाठे "और्वः" इति न पठ्यते । क्वचित् कोशेषु च ।
२ "प्राप्नोति विपुलम्" इति प्र. पाठः ।
३ "विलापनमनु–" इति प्र. पाठः ।
४ "अनायासेन ते यान्ति" इति क्वचित् ।
५ "केशवसंश्रिताः" इति प्र. पाठः । क्वचित् कोशेषु च ।
६ "जम्बुद्वीपो–" इति क्वचित् ।
७ "प्राप्नोति विपुलम्" इति प्र. पाठः ।
८ "सिंहत्रस्तैर्मृगैरिव" इति प्र. पाठः । "सिंहत्रस्ता मृगा इव" इति "सिंहत्रस्तमृगा इव" इति च कोशान्तरे ।
९ "घोरे पतन्ती–" इति प्र. पाठः । क्वचित् कोशेषु च ।

॥ [1]कौशिकः ॥

[2]सकृदुच्चारितं यैस्तु कृष्णेति न विशन्ति ते ।
[3]गर्भागारं गृहं मातुर्यमलोकं च दुस्सहम् ॥ ६५ ॥

[4]क नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् ।
क जपो वासुदेवेति मुक्तिबीजमनुत्तमम् ॥ ६६ ॥

बुद्ध्या बुद्ध्वा वदस्वैनं[5] हरिरित्यक्षरद्वयम् ।
स्मरणादेव कृष्णस्य[6] न पुनर्जायते कचित्[7] ॥ ६७ ॥

हे जिह्वे मम निस्नेहे हरिं किं नु न भाषसे[8] ।
हरिं वदस्व कल्याणि संसारोदधिनौर्हरिः ॥ ६८ ॥

असारे खलु संसारे सारात् सारतरो हरिः ।
पुण्यहीना न विन्दन्ति सारङ्गाश्च यथा जलम् ॥ ६९ ॥

कुरुक्षेत्रेण किं तस्य किं काश्या पुष्करेण वा[9] ।
जिह्वाग्रे वर्त्तते यस्य हरिरित्यक्षरद्वयम् ॥ ७० ॥

॥ [10]ब्रह्मोवाच ॥

असारे खलु संसारे सारमेकं निरूपितम् ।
समस्तलोकनाथस्य सारमाराधनं हरेः ॥ ७१ ॥

सा जिह्वा या हरिं स्तौति तच्चित्तं यत् तदर्प्पणम् ।
तावेव केवलौ श्लाघ्यौ[11] यौ [12]तत्पूजाकरौ करौ ॥ ७२ ॥

यस्तु विष्णुपरो नित्यं दृढभक्तिर्जितेन्द्रियः ।
स्वगृहेऽपि वसन् याति तद् विष्णोः परमं पदम् ॥ ७३ ॥

---

१ अत्र "कौशिकः" इति क्वचिन्न पठ्यते ।
२ "सकृदुच्चरितम्" इति प्र. पाठः । "सकृदभ्यर्चितम्" इति क्वचित् ।
३ "गर्भागारगृहम्" इति प्र. पाठः । ४ अत्रादौ क्वचित् कोशे–"श्रीभगवानुवाच" इति पठ्यते ।
५ "बुद्ध्वाऽभ्यसेदेतत्" इति प्र. पाठः । एनं हरिं बुद्ध्या विज्ञाय ।
६ "स्मरणात् कीर्त्तनाद् यस्य" इति प्र. पाठः । क्वचित् कोशेषु च ।
७ "-यते भुवि" इति प्र. पाठः । ८ "किं नानुभाषसे" इति प्र. पाठः । क्वचित् कोशेषु च ।
९ "पुष्करेण किम्" इति प्र. पाठः । क्वचित् कोशेषु च ।
१० प्र. पाठे, क्वचित् कोशेषु च "ब्रह्मोवाच" इत्येतन्न पठ्यते ।
११ "केवलं श्लाघ्यौ" इति क्वचित् । १२ "त्वत्पूजा-" इति क्वचित् ।

॥ [1]शङ्करः ॥

साधुसाधु महाभाग साधु दानवनाशन ।
यन्मां पृच्छसि धर्म्मज्ञ केशवाराधनं प्रति ॥ ७४ ॥

निमिषं निमिषार्द्धं वा मुहूर्त्तमपि भार्गव ।
नादग्धाशेषपापानां भक्तिर्भवति केशवे ॥ ७५ ॥

किं तेन मनसा कार्यं यन्न तिष्ठति केशवे ।
मनो मुक्तिफलावाप्त्यै[2] कारणं सप्रयोजनम्[3] ॥ ७६ ॥

रोगो नाम न सा जिह्वा यया न स्तूयते हरिः ।
गर्त्तौ नाम न तौ कर्णौ याभ्यां तत्कर्म्म न श्रुतम् ॥ ७७ ॥

नूनं तत् कण्ठशालूकमथवाऽप्युपजिह्विका ।
रोगो नाम न सा जिह्वा या न वक्ति हरेर्गुणान् ॥ ७८ ॥

भारभूतैः कार्यमेभिः[4] किं तस्य नृपशोर्द्विज ।
चरणौ तौ तु सफलौ[5] केशवालयगामिनौ ।
ते च नेत्रे महाभाग[6] याभ्यां सन्दृश्यते हरिः ॥ ७९ ॥

किं तस्य चरणैः कार्यं वृथासञ्चरणैर्द्विज ।
यैर्हि न व्रजते जन्तुः केशवालयदर्शने ॥ ८० ॥

वेदवेदाङ्गविदुषां मुनीनां भावितात्मनाम् ।
ऋषित्वमपि धर्म्मज्ञ विज्ञेयं तत्प्रसादजम् ॥ ८१ ॥

विचित्ररत्नपर्यङ्के[7] महाभोगेन [8]भोगिनः ।
रमन्ते नाकनारीभिः[9] केशवस्मरणात् फलम् ॥ ८२ ॥

---

१ "शङ्करः" इत्येतत् क्वचिन्न पठ्यते । २ "-फलावाप्तौ" इति प्र. पाठः ।

३ "सुप्रयोजितम्" इति प्र. पाठः । "सुप्रयोजनम्" इति, "सम्प्रयोजितम्" इति च कोशान्तरेषु ।

४ एभिरिति पूर्वोक्तैः श्रवणजिह्वादिभिर्वा, वक्ष्यमाणैश्चरणनेत्रादिभिर्वा । "भारभूतैः पदैः कार्यं किमेभिर्नृपशोर्द्विज" इति क्वचित् पाठान्तरम् । प्र. पाठे किञ्चिदधिकं च पठ्यते । तथाहि प्रचलिताऽऽनुपूर्वी—

"भारभूतैः करैः कार्यं किं तस्य नृपशोर्द्विज ।
यैर्हि न क्रियते विष्णोर्गृहसम्मार्ज्जनादिकम् ।
चरणौ तौ तु सफलौ—" इत्यादि ।

५ "सुभगौ" इति क्वचित् । ६ "महाभागे" इति क्वचित् । ७ "-पर्यन्ते" इति क्वचित् ।

८ "महाभोगे च भोगिनः" इति प्र. पाठः । कोशेषु च क्वचित् ।

९ "नाकिरामाभिः" इति प्र. पाठः । "नाकरामाभिः" इति क्वचित् ।

अश्वमेधसहस्राणां यः सहस्रं समाचरेत् ।
नासौ तत् फलमाप्नोति तद्भक्तैर्यदवाप्यते ॥ ८३ ॥

रेरे मनुष्याः पुरुषोत्तमस्य
करौ न [१]कस्मान्मुकुळीकुरुद्ध्वे ।
क्रियाजुषां को भवतां प्रयासः
फलं हि यत् तत् पदमुच्यतस्य ॥ ८४ ॥

विष्णोर्विमानं यः कुर्यात् सकृद् भक्त्या प्रदक्षिणम् ।
अश्वमेधसहस्रस्य फलमाप्नोति[२] मानवः ॥ ८५ ॥

प्रदक्षिणं तु यः कुर्याद्धरिभक्त्या[३] समन्वितः ।
हंसयुक्तिविमानेन विष्णुलोकं[४] स गच्छति ॥ ८६ ॥

तीर्त्थकोटिसहस्राणि व्रतकोटिशतानि[५] च ।
नारायणप्रणामस्य कलां नार्हन्ति षोडशीम् ॥ ८७ ॥

उरसा शिरसा दृष्ट्या मनसा वचसा तथा ।
पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः ॥ ८८ ॥

शाठ्येनापि नमस्कारं कुर्वतः शार्ङ्गपाणये ।
शतजन्मार्ज्जितं पापं नश्यत्येव न संशयः ॥ ८९ ॥

संसारार्ण्णवमग्नानां नराणां पापकर्म्मणाम् ।
नान्यो धर्त्ता[६] जगन्नाथं मुक्त्वा नारायणं परम्[७] ॥ ९० ॥

रेणुकुण्ठिगात्रस्य कणा यावन्ति भारत ।
तावद् वर्षसहस्राणि विष्णुलोके महीयते ॥ ९१ ॥

पावनं विष्णुनैवेद्यं सुभोज्यमृषिभिः स्मृतम् ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् ॥ ९२ ॥

---

१ "कस्मान्मुकुली—" इति प्र. पाठः । २ "फलं प्राप्नोति" इति प्र. पाठः । कोशेषु च क्वचित् ।
३ "हरिं भक्त्या" इति प्र. पाठः । कोशान्तरे च । "सकृद् भक्त्या" इति च क्वचित् ।
४ "विष्णोर्ल्लोकम्" इति प्र. पाठः ।
५ अत्र तु प्राचीनकोशावलम्बिनि रघुवर्य्ययतिलिखिते कोशे "तीर्त्थकोटिशतानि च" इत्येव पठ्यते । अर्त्थस्वारस्यादर्शनात् तत् प्रमादपतितमिति सम्भाव्यते ।
६ "नान्योद्धर्त्ता" इति प्र. पाठः । कोशान्तरेषु च तथा ।
७ "प्रभुम्" इति प्र. पाठः । "विभुम्" इति क्वचित् ।

कोट्यैन्दवसहस्रैस्तु मासोपोषणकोटिभिः ।
[1]यत् फलं लभ्यते पुम्भिर्विष्णोर्नैवेद्य[2]भक्षणात्[3] ॥ ९३ ॥

त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगास्तु पक्षस्य मासस्य सरिताम्पतिः ॥ ९४ ॥

षण्मासफलदा गोदा वत्सरस्य तु जाह्नवी ।
विष्णुपादोदकस्यैते[4] कलां नार्हन्ति षोडशीम् ॥ ९५ ॥

गङ्गाप्रयागगयपुष्करनैमिशानि[5]
संसेवितानि बहुशः कुरुजाङ्गलानि ।
कालेन तीर्थसलिलानि पुनन्ति पापं
पादोदकं भगवतः प्रपुनाति सद्यः ॥ ९६ ॥

यानि कानि च तीर्थानि ब्रह्माण्डान्तर्गतानि[6] वै ।
विष्णुपादोदकस्यैते[7] कलां नार्हन्ति षोडशीम् ॥ ९७ ॥

स्नानं[8] पादोदकं विष्णोः पिबन् शिरसि धारयन्[9] ।
सर्वं पापविनिर्म्मुक्तो वैष्णवीं सिद्धिमाप्नुयात् ॥ ९८ ॥

---

१ "तत् फलम्" इति प्र. पाठः । "तत् फलं प्राप्यते पुम्भिः" इति क्वचित् ।

२ "विष्णुनैवेद्य-" इति क्वचित् ।

३ इतः परं प्र. पाठे श्लोकद्वयमधिकं पठ्यते । तद् यथा—

"विष्णोर्नैवेद्यशेषेण यो भुनक्ति दिनेदिने ।
सिक्थेसिक्थे लभेत् पुण्यं चान्द्रायणशताधिकम् ।
नैवेद्यशेषं तुलसीविमिश्रितं विशेषतः पादजलेन सिक्तम् ।
योऽश्नाति नित्यं पुरतो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यम् ॥"

इति । तत्राऽद्यं पद्यं किञ्चिद्व्यत्यासेन उपरिष्टात् (श्लो.२९३) पुनः पठ्यते ।

४ "-दकस्यैताः" इति प्र. पाठः ।

५ "-नैमिषाणि" इति प्र. पाठः । "-गयनैमिषपुष्कराणि" इति क्वचित् । नैमिशमित्येव साधु, न नैमिषमिति । मुनिभोज्यफला हि निमिशा नाम वृक्षाः । तदाश्रयत्वान्नैमिशमिति भागवतव्याख्याने यादवेन्द्रतीर्थीये स्फुटम् ।

६ "-न्तर्गतानि च" इति पाठान्तरम् । प्र. पाठोऽपि तथा । "ब्रह्माण्डान्तस्थितानि वै" इति क्वचित् ।

७ "-दकस्यैताः" इति प्र. पाठः ।

८ "स्नात्वा पादो-" इति प्र. पाठः । "स्नानपादोदकम्" इति क्वचित् ।

९ "धारयेत्" इति प्र. पाठः ।

यथा पादोदकं पुण्यं निर्म्माल्यं चानुलेपनम् ।
नैवेद्यं धूपशेषं च[1] आरार्त्तिश्च तथा हरेः ॥ ९९ ॥

[2]तुळस्यास्तु रजोजुष्टं नैवेद्यस्य च भक्षणम् ।
निर्म्माल्यं शिरसा धार्यं महापातकनाशनम् ॥ १०० ॥

भक्त्या वा यदिवाऽभक्त्या चक्राङ्कितशिलां प्रति ।
दर्शनं स्पर्शनं वाऽपि सर्वपापप्रणाशनम् ॥ १०१ ॥

[3]साळग्रामोद्भवो देवो देवो द्वारवतीभवः ।
[4]उभयोः स्नानतोयेन ब्रह्महत्यां व्यपोहति ॥ १०२ ॥

[5]म्लेच्छदेशेऽशुचौ वाऽपि चक्राङ्को यत्र तिष्ठति ।
योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे ॥ १०३ ॥

साळग्रामोद्भवं देवं[6] शैलं चक्राङ्कमण्डितम्[7] ।
यत्रापि नीयते तत्र वारणस्या यवाधिकम्[8] ॥ १०४ ॥

[9]साळग्रामोद्भवो देवो देवो द्वारवतीभवः ।
उभयोः सङ्गमो यत्र तत्र मुक्तिर्न्न संशयः ॥ १०५ ॥

---

१ "धूपशेषश्च" इणि प्र. पाठः । क्वचित् कोशेषु च । २ "तुलस्यास्तु" इति प्र. पाठः ।

३ अस्य श्लोकस्य स्थाने श्लोकान्तरं पठ्यते प्र. पाठे । तद् यथा—

"शालग्रामशिला यत्र तत्र सन्निहितो हरिः ।
तत्र स्नानं च दानं च वाराणस्याः शताधिकम्" इति ।

"शालग्रामोद्भवो देवो देवो द्वारावर्तीभवः" इति च कोशान्तरे ।

४ "उभयोः सङ्गमो यत्र तत्र मुक्तिर्न्न संशयः" इति च क्वचित् ।

५ एकस्मिन् कोशे इदमेकं पद्यं न पठ्यते । तत्र च "उभयोः सङ्गमो यत्र तत्र मुक्तिर्न्न संशयः" इत्यस्यानन्तरम् ,'शालग्रामोद्भवं देवम्—" इत्याद्येव पठ्यते ।

६ "शालग्रामोद्भवो देवः" इति प्र. पाठः । क्वचित् कोशे च ।

७ "-मण्डलम्" इति प्र. पाठः । "शिला चक्राङ्कमण्डिता" इति क्वचित् ।

८ "वाराणस्याः शताधिकम्" इति प्र. पाठः । क्वचित् कोशेषु च तथा । "वारणस्याः शताधिकम्" इति च क्वचित् । "वारणास्याः शताधिकम्" इत्यन्यत्र । वाराणसी, वारणसी, वरणासी, वराणसी, वारणासी इत्यादि बहुरूपमेतत् पदम् ।

९ "शालग्रामो-" इति प्र. पाठः । क्वचित् कोशे त्विदं पद्यमेव न पठ्यते । "वाराणस्याः शताधिकम्" इत्यतः परम्-"हरिणः मुक्तिदानीह" इत्याद्येव पठ्यते ।

हरिणा मुक्तिदानीह मुक्तिस्थानानि सर्वशः ।
[1]स यस्य सर्वभावेषु तस्य तैः किं प्रयोजनम् ॥ १०६ ॥

हरिर्याति हरिर्याति दस्युव्याजेन यो वदेत् ।
सोऽपि [2]सद्गतिमाप्नोति गतिं सुकृतिनो यथा ॥ १०७ ॥

वासुदेवं परित्यज्य योऽन्यं [3]देवमुपासते ।
त्यक्त्वाऽमृतं स मूढात्मा भुङ्क्ते हालाहलं विषम् ॥ १०८ ॥

त्यक्त्वाऽमृतं यथा कश्चिदन्यपानं पिबेन्नरः ।
तथा हरिं परित्यज्य [4]चान्यं देवमुपासते ॥ १०९ ॥

स्वधर्म्मं तु परित्यज्य परधर्म्मं यथा चरेत्[5] ।
तथा हरिं परित्यज्य [6]चान्यं देवमुपासते[7] ॥ ११० ॥

गां च त्यक्त्वा विमूढात्मा गर्द्दभीं वन्दते यथा ।
तथा हरिं परित्यज्य [6]चान्यं देवमुपासते[8] ॥ १११ ॥

[9]वासुदेवं परित्यज्य योऽन्यं देवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्म्मतिः ॥ ११२ ॥

[10]यथा गङ्गोदकं त्यक्त्वा पिबेत् कूपोदकं नरः ।
तथा हरिं परित्यज्य योऽन्यं देवमुपासते ॥ ११३ ॥

[10]स्वमातरं परित्यज्य श्वपाकीं वन्दते यथा ।
तथा हरिं परित्यज्य [11]योऽन्यं देवमुपासते ॥ ११४ ॥

---

१ "सर्वस्य" इति क्वचित् । २ "तद्गति-" इति क्वचित् ।

३ "दैवमुपासते" इति क्वचित् । उपासते उपास्ते इत्यर्थः । "तं यथा यथोपासते तदेव भवति" इत्यादिवत् ।

४ "योऽन्यं देव-" इति प्र. पाठः । "चान्यं दैव-" इति क्वचित् ।

५ "परधर्म्मं चरेद् यथा" इति प्र. पाठः । एतदर्द्धस्थाने क्वचित् "यथा गङ्गोदकं त्यक्त्वा पिबेत् कूपोदकं नरः" इत्यर्द्धं पठ्यते ! कोशान्तरे च "स्वमातरं परित्यज्य श्वपाकीं वन्दते यथा" इत्येतत् पठ्यते ।

६ "चान्यं दैव-" इति क्वचित् । "योऽन्यं देव-" इति प्र. पाठः ।

७ इतः परं "यथा गङ्गोदकं त्यक्त्वा पिबेत् कूपोदकं नरः । तथा हरिं परित्यज्य योऽन्यं देवमुपासते" इति प्र. पाठे पठ्यते । ततः परं "गां च त्यक्त्वा-" इत्यादि । कोशान्तरे च तथा ।

८ इतः परं प्र. पाठे- "स्वमातरं परित्यज्य श्वपाकीं वन्दते यथा । तथा हरिं परित्यज्य योऽन्यं देवमुपासते" इत्ययं श्लोकः पठ्यते । ततः परम्- "वासुदेवं परित्यज्य-" इत्यादि ।

९ क्वचित् कोशे इदम्, "यथा गङ्गोदकम्" इत्याद्युपरितनं चेति पद्यद्वयं न पठ्यते ।

१० प्र. पाठे चेदं पूर्वमेव पठितमिति नात्र पठ्यते । ११ "चान्यं दैव-" इति क्वचित् ।

यावत् स्वस्थमिदं पिण्डं निरुजं करणान्वितम् ।
तावत् कुरुष्वाऽऽत्महितं पश्चात्तापेन तप्यसे ॥ ११५ ॥

यावत् स्वास्थ्यं शरीरेषु करणेषु च पाटवम् ।
तावदर्चय गोविन्दमायुष्यं सार्थकं कुरु ॥ ११६ ॥

स्मर्यतां तु हृषीकेशो हृषीकेषु दृढेषु च ।
अदृढेषु हृषीकेषु हृषीकेशं स्मरन्ति के ॥ ११७ ॥

यावच्चिन्तयते जन्तुर्विषयान् विषसन्निभान् ।
तावच्चेत् स्मरते विष्णुं को न मुच्येत बन्धनात् ॥ ११८ ॥

यावत् प्रलपते जन्तुर्विषयान् विषसन्निभान्[१] ।
तावच्चेत् [२]स्मरते विष्णुं को न मुच्येत बन्धनात् ॥ ११९ ॥

[३]सूत उवाच

ज्ञात्वा [४]विप्रास्तिथिं सम्यग् दैवज्ञैः समुदीरिताम् ।
कर्तव्य उपवासश्च[५] अन्यथा नरकं व्रजेत् ॥ १२० ॥

क्षये वाऽप्यथवा वृद्धौ सम्प्राप्ते वा दिनक्षये ।
उपोष्या द्वादशी पुण्या पूर्वविद्धां परित्यजेत् ॥ १२१ ॥

पूर्वविद्धां प्रकुर्वाणो नरो धर्म्मान् निकृन्तति ।
सन्ततेस्तु विनाशाय सम्पदो हरणाय च ॥ १२२ ॥

कलावेधे तु विप्रेन्द्रा[६] दशम्यैकादशीं त्यजेत्[७] ।
सुराया बिन्दुना स्पृष्टं गङ्गाम्भ इव सन्त्यजेत् ॥ १२३ ॥

श्ववृतौ पञ्चगव्यं च दशम्या दूषितां त्यजेत् ।
एकादशीं द्विजश्रेष्ठाः पक्षयोरुभयोरपि ॥ १२४ ॥

---

१ "जन्तुर्लोकवार्त्तादिभिः सदा" इति प्र. पाठः । "लोकवार्त्तादिभिः सह" इति क्वचित् ।

२ "तावच्चेद् वदते" इति प्र. पाठः । क्वचित् कोशेषु च तथा ।

३ "श्रीसूतः । ज्ञात्वा–" इत्यादि प्र. पाठः । "सूतः । ज्ञात्वा–" इत्यादि क्वचित् ।

४ "विप्रैस्तिथिम्" इति प्र. पाठः ।

५ "उपवासस्तु" इति प्र. पाठः । कोशेषु च क्वचित् । "कर्त्तव्यैकादशी पुण्या अन्यथा नरकं व्रजेत्" इति कोशान्तरे ।

६ "विप्रेन्द्र" इति प्र. पाठः । कोशेषु च क्वचित् ।　　　७ "दशम्यैकादशी यदि" इति क्वचित् ।

तस्माद् विप्रा न विद्धा हि कर्त्तव्यैकादशी क्वचित् ।
विद्धा हन्ति पुरापुण्यं श्राद्धं च वृषळीपतिः[1] ॥ १२५ ॥

जप्तं दत्तं हुतं स्नातं तथा पूजा कृता हरेः ।
तत् सर्वं विलयं याति तमः सूर्योदये यथा ॥ १२६ ॥

एकादश्यां यदा ब्रह्मन् दिनक्षयतिथिर्भवेत् ।
उपोष्या द्वादशी तत्र[2] त्रयोदश्यां तु पारणम् ॥ १२७ ॥

प्रतिपत्प्रभृतयः सर्वा उदयादुदयाद् रवेः ।
सम्पूर्ण्णा इति विज्ञेया हरिवासरवर्ज्जिताः ॥ १२८ ॥

अरुणोदयकाले तु दशमी यदि दृश्यते ।
पापमूलं तदा ज्ञेयमेकादश्युपवासिनाम्[3] ॥ १२९ ॥

अरुणोदयकाले तु[4] दशमी यदि दृश्यते[5] ।
न तत्रैकादशी कार्या धर्म्मकामार्त्थनाशिनी ॥ १३० ॥

चतस्रो घटिकाः प्रातररुणोदय उच्यते ।
यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशः[6] स्मृतः ॥ १३१ ॥

उदयात् प्राग् यदा विप्रा मुहूर्त्तद्वयसंयुता ।
सम्पूर्ण्णैकादशी नाम तत्रैवोपवसेद् व्रती[7] ॥ १३२ ॥

उदयात् प्राक् त्रिघटिकाव्यापिन्येकादशी यदा[8] ।
[9]सन्दिग्धैकादशी नाम वर्ज्ज्या धर्म्मार्त्थनाशिनी[10] ॥ १३३ ॥

पुत्रपौत्रविवृद्ध्यर्त्थं[11] द्वादश्यामुपवासयेत्[12] ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥ १३४ ॥

---

१ "वृषलीपतिः" इति प्र. पाठः ।
२ "द्वादशी पुण्या" इति क्वचित् ।
३ "-दश्युपवासनम्" इति प्र. पाठः । कोशेषु च क्वचित् ।
४ "-दयवेलायाम्" इति प्र. पाठः । कोशेषु च क्वचित् ।
५ "विद्यते" इति क्वचित् ।
६ "-सदृशं स्मृतः" इति क्वचित् ।
७ "-वसेद् गृही" इति क्वचित् पाठः ।
८ "यदि" इति क्वचित् ।
९ "सङ्कीर्ण्णैकादशी" इति क्वचित् ।
१० "-नाशनी" इति क्वचित् ।
११ "-पौत्रप्रवृद्ध्यर्त्थम्" इति प्र. पाठः । "पुत्रराज्यविवृद्ध्यर्त्थम्" इति क्वचित् ।
१२ "-मुपवासनम्" इति क्वचित् ।

उदयात् प्राग् द्विघटिकाव्यापिन्येकादशी यदा[1] ।
सङ्कीर्ण्णैकादशी नाम वर्ज्ज्या धर्म्मार्त्थकाङ्क्षिभिः[2] ॥ १३५ ॥

[3]पुत्रराज्यविवृद्ध्यर्थं[4] द्वादश्यामुपवासनम् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥ १३६ ॥

दशमीशेषसंयुक्ता गान्धार्या समुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात् तां परिवर्ज्जयेत्[5] ॥ १३७ ॥

बह्वागमविरोधेषु ब्राह्मणेषु विवादिषु ।
उपोष्या द्वादशी पुण्या[6] त्रयोदश्यां तु पारणम्[7] ॥ १३८ ॥

एकादश्यां तु विद्धायां सम्प्राप्ते श्रवणे तथा ।
उपोष्या द्वादशी पुण्या पक्षयोरुभयोरपि ॥ १३९ ॥

उपरागसहस्राणि व्यतीपातायुतानि च ।
अमालक्षं तु द्वादश्याः कलां नार्हन्ति षोडशीम् ॥ १४० ॥

शुद्धाऽपि द्वादशी ग्राह्या परतो द्वादशी यदि ।
विषं तु दशमी ज्ञेयाऽमृतं[8] चैकादशी तिथिः ।
विषप्रधाना वर्ज्ज्या साऽमृता ग्राह्या प्रधानतः[9] ॥ १४१ ॥

द्वादश्यां भोजनं चैव विद्धायां ह्युपोषणम् ।
यः कुर्य्यान्मन्दबुद्धित्वान्निरयं सोऽधिगच्छति ॥ १४२ ॥

यानि कानि च वाक्यानि विद्धोपास्यापराणि[10] तु ।
धनदार्च्चापराणि स्युर्वैष्णवी न दशायुता[11] ॥ १४३ ॥

---

१ "यदि" इति क्वचित् ।

२ "सन्दिग्धैकादशी नाम न तत्रोपवसेद् गृही" इति क्वचिदिदमर्द्धमन्यथा पठ्यते ।

३ क्वचित् कोशे इदं १३४ तमश्लोकत्वेन पठितमिति नात्र पठ्यते ।

४ "–राज्यप्रवृद्ध्यर्थम्" इति प्र॰ पाठः ।

५ इतः परं प्र. पाठे—"अपीषद्दशमीविद्धा सदा तां परिवर्ज्जयेत् ।
सुराबिन्दुसमायुक्तां प्रवदन्ति मनीषिणः" इत्यधिकं पठ्यते ।

६ "द्वादशी तत्र" इति प्र. पाठः ।

७ क्वचित् कोशे इदमर्द्ध उत्तरश्लोकस्य पूर्वार्द्धं च न पठ्यते । "बह्वागमविरोधेषु ब्राह्मणेषु विवादिषु । उपोष्या द्वादशी पुण्या पक्षयोरुभयोरपि" इति पूर्वोत्तरश्लोकयोराद्यन्तावेव पठ्येते ।

८ "ज्ञेयाऽमृता" इति प्र. पाठः । ९ "ग्राह्या प्रयत्नतः" इति प्र. पाठः । कोशेषु च क्वचित् ।

१० "विद्धोपोष्यपराणि" इति प्र. पाठः । "विद्धोपास्तिपराणि" इति क्वचित् ।

११ दशायुतेति दशमीयुता ।

अथवा मोहनार्त्थाय[1] मोहिन्या[2] भगवान् हरिः ।
अर्त्थितः कारयामास व्यासरूपी जनार्द्दनः ॥ १४४ ॥

धनदार्चाविवृद्ध्यर्थं महावित्तलयस्य च ।
असुराणां मोहनार्त्थं पाषण्डानां विवृद्धये ।
[3]आत्मस्वरूपाविज्ञप्त्यै स्वरूपाप्राप्तये तथा ॥ १४५ ॥

एवं विद्धां परित्यज्य द्वादश्यामुपवासने[4] ।
कोटिजन्मार्ज्जितं पापमेकयैव विनश्यति ।
ततः कोटिगुणं वाऽपि[5] निषिद्धस्येतरैर्ज्जनैः[6] ॥ १४६ ॥

यदनादिकृतं पापं तदूर्ध्वं[7] यत् करिष्यति[8] ।
तत् सर्वं विलयं याति परेषामुपवासनात् ।
नच तस्मात् प्रियतमः केशवस्य ममापि वा[9] ॥ १४७ ॥

एकादश्या ह्यवेधे[10] तु द्वादशीं न परित्यजेत् ।
पारणे मरणे चैव तिथिस्तात्कालिकी स्मृता ॥ १४८ ॥

ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो भर्त्तृमती तथा ॥ १४९ ॥

अभर्त्तृका तथाऽन्ये वा[11] सूतवैदेहिकादयः[12] ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥ १५० ॥

एकादश्यां तु यो भुङ्क्ते मोहेनाऽवृतचेतनः[13] ।
शुक्लायामथ कृष्णायां निरयं याति स ध्रुवम् ॥ १५१ ॥

---

१ "मोहनार्त्थानि" (?) इति क्वचित् ।

२ रुग्माङ्गदे राज्यं शासति सर्वेऽप्येकादशीदीक्षिताः पुण्यभाजोऽभूवन्निति तद्वारणाय देवमोहिन्या अर्थितो व्यास इति कथां कथयन्ति ।

३ यद्यपि प्राचीनकोशानुसारिणि रघुवर्यतीर्थलिखिते कोशे—"आत्मस्वरूपविज्ञप्त्यै स्वरूपप्राप्तये तथा" इति पठ्यते । न ज्ञायते किमयमेव पाठ उत दैर्घ्यं प्रमादात् स्खलितमिति। अस्यैव प्रामाणिकत्वे तु उत्तरश्लोकेनान्वयः। आत्मज्ञानाय स्वलोकगमनाय च विद्धां परित्यज्य द्वादश्यामुपवासन इति ।

४ "-मुपवासयेत्" इति प्रः पाठः ।

५ "चापि" इति प्र. पाठः ।

६ "निषिद्धस्य च वर्ज्जने" इति क्वचित् ।

७ "यदूर्ध्वम्" इति प्र. पाठः ।

८ "तदूर्ध्वं सङ्करिष्यति" इति क्वचित् ।

९ "ममापि च" इति प्र. पाठः ।

१० "एकादश्यां ह्यवेधे" इति प्र. पाठः ।

११ "तथाऽन्ये च सूत-" इति प्र. पाठः । कोशेषु च क्वचित् ।

१२ "-वैदेहिकादिकाः" इति क्वचित् ।

१३ "-चेतसा" इति प्र. पाठः । क्वचित् कोशेषु च तथा ।

विवेचयति यो मोहाच्छुक्ला कृष्णेति पापकृत्[1] ।
एकादशीं स वै याति निरयं नात्र संशयः ॥ १५२ ॥

यथा गौर्नैव हन्तव्या शुक्ला कृष्णेति भामिनि ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥ १५३ ॥

यानि कानि च वाक्यानि कृष्णैकादशिवर्ज्जने ।
भरण्यादिनिषेधेऽपि[2] तानि काम्यफलार्त्थिनाम् ॥ १५४ ॥

कामिनोऽपि हि नित्यार्त्थं[3] कुर्युरेवोपवासनम् ।
प्रीणनार्त्थं हरेर्न्नित्यं नतु काम्यव्यपेक्षया[4] ॥ १५२ ॥

तस्माच्छुक्लामथो कृष्णां भरण्यादियुतामपि ।
प्रत्यवायनिषेधार्त्थं[5]मुपवासीत नित्यशः ।
प्रीणनार्त्थं हरेश्चापि विष्णुलोकस्य चाऽप्तये ॥ १५६ ॥

कला वा घटिका वाऽपि अपरे द्वादशी[6] यदि ।
द्वादश द्वादशीर्हन्ति पूर्वेद्युः पारणे कृते ॥ १५७ ॥

अतिरिक्ता द्वादशी चेत् स तां[7] नोपोषयेद् यदि ।
द्वादश द्वादशीर्हन्ति द्वादशी चातिलङ्घिता ॥ १५८ ॥

[8]द्वादश्यामतिरिक्तायां यो भुङ्क्ते पूर्ववासरे[9] ।
द्वादश द्वादशीर्हन्ति द्वादशीं वा परित्यजेत् ॥ १५९ ॥

द्वादशीं श्रवणोपेतां यो नोपोष्यात् सुमन्दधीः ।
पञ्चसंवत्सरकृतं पुण्यं तस्य विनश्यति ॥ १६० ॥

एकादशीमुपोष्याथ द्वादशीमप्युपोषयेत् ।
न तत्र विधिलोपः स्यादुभयोर्दैवता हरिः[10] ॥ १६१ ॥

---

१ "मोहकृत्" इति क्वचित् । २ "–निषेधे च" इति प्र. पाठः । क्वचित् कोशेषु च ।
३ "हि सिद्ध्यर्त्थम्" इति प्र. पाठः । "हि मोक्षार्त्थम्" इति क्वचित् ।
४ "काम्यव्यपेक्षया" इति प्र. पाठः । ५ "–निषेधार्त्थामुप–" इति प्र. पाठः ।
६ "कला वाऽर्द्धकला वाऽपि परतो द्वादशी" इति प्र. पाठः ।
७ "चेद् यस्ताम्" इति प्र. पाठः । ८ अयं श्लोकः क्वचित् कोशे न पठ्यते ।
९ "भुङ्क्ते हरिवासरे" इति क्वचित् ।
१० इतः परं प्र. पाठे–"अल्पायामपि विप्रेन्द्र पारणं तु कथं भवेत्" इत्यर्द्धमधिकम् ।

पारयित्वोदकेनापि भुञ्जानो नैव दुष्यति ।
अशितानशिता यस्मादापो विद्वद्भिरीरिताः ।
अम्भसा केवलेनाथ[1] करिष्ये व्रतपारणम्[2] ॥ १६२ ॥

न काशी न गया गङ्गा न रेवा नच गौतमी[3] ।
नचापि कौरवं क्षेत्रं समा[4] भूप हरेर्दिनात् ॥ १६३ ॥

अश्वमेधसहस्राणि वाजपेयायुतानि[5] च ।
एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ॥ १६४ ॥

एकादशीसमुत्थेन वह्निना पातकेन्धनम् ।
भस्मीभवति राजेन्द्र अपि जन्मशतोद्भवम् ॥ १६५ ॥

नेदृशं पावनं किञ्चिन्नराणां भुवि विद्यते ।
यादृशं पद्मनाभस्य दिनं पातकहानिदम्[6] ॥ १६६ ॥

तावत् पापानि देहेऽस्मिंस्तिष्ठन्ति मनुजाधिप ।
यावन्नोपोषयेज्जन्तुः पद्मनाभदिनं शिवम्[7] ॥ १६७ ॥

एकादशेन्द्रियैः पापं यत् कृतं भवति प्रभो ।
एकादश्युपवासेन तत् सर्वं विलयं नयेत्[8] ॥ १६८ ॥

एकादशीसमं किञ्चित् पापत्राणं न विद्यते[9] ।
व्याजेनापि कृता राजन्[10] न दर्शयति भास्करिम् ॥ १६९ ॥

॥ श्रीवेदव्यास उवाच[11] ॥

स ब्रह्महा स गोघ्नश्च स्तेनः स[12] गुरुतल्पगः ।
एकादश्यां तु भुञ्जानः[13] पक्षयोरुभयोरपि ॥ १७० ॥

---

१ "केवलेनैव" इति प्र. पाठः । क्वचित् कोशेषु च ।

२ इतः परं प्र. पाठे–"तद्विशिष्टं मुनिप्रोक्तमशितानशितं च यत्" इत्यर्द्धमधिकम् ।

३ "नच पुष्करम्" इति प्र. पाठः ।

४ "क्षेत्रं तुल्यम्" इति प्र. पाठः ।

५ "वाजपेयशतानि च" इति प्र. पाठः ।

६ "पातकनाशनम्" इति क्वचित् ।

७ "–दिनं शुभम्" इति प्र. पाठः । क्वचित् कोशेषु च तथा । "–दिने शुभे" इति च क्वचित् ।

८ "विलयं व्रजेत्" इति प्र. पाठः । प्राचीनपाठे उपवासेन एकादशी विलयं नयेत् ।

९ "किञ्चित् पवित्रं नहि विद्यते" इति प्र. पाठः ।

१० "कृतं राजन्" इति क्वचित् ।

११ प्र पाठे तु "श्रीव्यासः । अन्नं निवेदयेन्मह्यं प्राप्ते मद्वासरे शुभे । तस्यापि नरकप्राप्तिः किम्पुनर्भोजने कृते" इति पठित्वा ततः परं "स ब्रह्महा—" इत्यादि पठ्यते । बहुसम्प्रदायविरोधात् प्रक्षिप्तमेतदिति सम्प्रदायविदः ।

१२ "गोघ्नश्च स स्तेनो गुरु–" इति प्र. पाठः ।

१३ "–दश्यां हि भुञ्जानः" इति क्वचित् ।

वरं स्वमातृगमनं वरं गोमांसभक्षणम् ।
वरं हत्या सुरापानमेकादश्यां तु भोजनात्[1] ॥ १७१ ॥

एकादशीदिने पुण्ये भुञ्जते ये नराधमाः ।
अवलोक्य मुखं तेषामादित्यमवलोकयेत् ॥ १७२ ॥

पृथिव्यां यानि पापानि ब्रह्महत्यादिकानि च ।
अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ॥ १७३ ॥

॥ [2]रुग्माङ्गदः ॥

अष्टवर्षाधिको यस्तु[3] अशीतिर्न्नहि पूर्य्यते ।
यो भुङ्क्ते मानवः पापो विष्णोरहनि चाऽगते ॥ १७४ ॥

पिता वा यदि वा पुत्रो भार्य्या वाऽपि सुहृज्जनः ।
पद्मनाभदिने भुङ्क्ते निग्राह्यो दस्युवद् भवेत्[4] ॥ १७५ ॥

॥ धर्म्मविभूषणः ॥

प्रातर्हरिदिने लोकास्तिष्ठध्वं चैकभोजनाः ।
अक्षारलवणाः सर्वे हविष्यान्ननिषेविणः ॥ १७६ ॥

अवनीतलपशयनाः प्रियासङ्गविवर्ज्जिताः ।
स्मरध्वं देवदेवेशं पुराणपुरुषोत्तमम् ॥ १७७ ॥

सकृद्भोजनसंयुक्ता ह्युपवासे भविष्यथ ।
अकृतश्राद्धनिचया जलपिण्डोदकक्रियाः ॥ १७८ ॥

॥ ब्रह्मा[5] ॥

उपोष्य द्वादशीं पुण्यां[6] सर्वपापक्षयप्रदाम् ।
न पश्यति[7] यमं वाऽपि नरकान् नच यातनाः[8] ॥ १७९ ॥

---

१ "–कादश्यन्नभोजनात्" इति प्र. पाठः । २ "रुक्माङ्गदः" इति प्र. पाठः ।
३ "यस्तु ह्यशीति–" इति प्र. पाठः । क्वचित् कोशेषु च ।
४ इतः परं "धर्म्मविभूषणः" इत्यादि श्लोकत्रयं प्र. पाठे न पठ्यते ।
५. "ब्रह्मा" इति क्वचिन्न पठ्यते ।
६ "उपोष्या द्वादशी पुण्या सर्वपापक्षयप्रदा" इति क्वचित् । ७ "न पश्यन्ति" इति क्वचित् ।
८ "नरकाणि न यातनाम्" इति प्र. पाठः । क्वचित् कोशेषु च ।

[1]रटन्तीह पुराणानि भूयोभूयो वरानने ।
न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे ॥ १८० ॥

द्वादशी न प्रमोक्तव्या यावदायुः प्रवर्तते ।
अर्चनीयो हृषीकेशो विशुद्धेनान्तरात्मना ॥ १८१ ॥

भक्त्या ग्राह्यो हृषीकेशो न धनैर्द्धरणीसुराः ।
[2]भक्त्या सम्पूजितो विष्णुः फलं दत्ते[3] समीहितम् ॥ १८२ ॥

जलेनापि जगन्नाथः पूजितः क्लेशनाशनः ।
परितोषं प्रयात्याशु[4] तृषार्त्तास्तु[5] यथा जलैः ॥ १८३ ॥

आसीनस्य शयानस्य तिष्ठतो व्रजतोऽपि वा ।
रमस्व पुण्डरीकाक्ष[6] हृदये मम सर्वदा ॥ १८४ ॥

[7]सर्वगश्चैव सर्वात्मा[8] सर्वावस्थासु चाच्युत ।
रमस्व पुण्डरीकाक्ष नृसिंह हृदये मम ॥ १८५ ॥

करावलम्बनं देहि श्रीकृष्ण कमलेक्षण ।
भवपङ्कार्णवे घोरे मज्जतो मम शाश्वत[9] ॥ १८६ ॥

त्राहित्राहि जगन्नाथ वासुदेवाच्युताव्यय ।
मां समुद्धर गोविन्द [10]दुःखसंसारसागरात् ॥ १८७ ॥

[11]एतत् पुण्यं परं गुह्यं[12] पवित्रं पापनाशनम् ।
आयुष्यं च यशस्यं च [13]कलिदुःस्वप्ननाशनम् ॥ १८८ ॥

---

१ "शङ्करः । रटन्तीह-" इति प्र. पाठेऽधिकम् ।
२ इदमर्द्धं क्वचिन्न पठ्यते ।
३ "धत्ते" इति प्र. पाठः । क्वचित् कोशेषु च तथा ।
४ "-तोषं व्रजत्याशु" इति क्वचित् ।
५ "तृषार्त्तस्तु" इति प्र. पाठः ।
६ "-काक्ष नृसिंह हृदये मम" इति प्र. पाठः ।
७ इदं पद्यं प्र. पाठे "करावलम्बनम्-" इत्येतदनन्तरं पठ्यते ।
८ "सर्वात्मन्" इति क्वचित् पाठः । "सर्वगश्च स सर्वात्मन्" इति च क्वचित् ।
९ "मम सर्वदा" इति प्र. पाठः । इतः परं च "सर्वगश्चैव" इत्यादि पद्यम् । ततः परम्- "एकादश्यां न भुञ्जीत न सुरां वा पिबेत् क्वचित् । ब्राह्मणो नैव हन्तव्य इत्येषा वैदिकी स्मृतिः" इत्येकं पद्यमधिकं प्र. पाठे ।
१० "गोविन्द मृत्युसंसार-" इति क्वचित् ।
११ "एतत् पुण्यम्-" इत्येतदादि, "कृष्णामृतमहार्णवः" इत्यन्तमष्टौ श्लोकाः (१८८-१९४) केषुचित् कोशेष्वत्र न पठ्यन्ते । "निष्कामं ज्ञानपूर्वं तु -" (२२८) इत्यादि ग्रन्थान्त्यश्लोकानन्तरं पठ्यन्ते ।
१२ "पुण्यमिदं गुह्यम्" इति प्र. पाठः ।
१३ "यशस्यं च धन्यं दुःस्वप्न -" इति प्र. पाठः ।

कलौ पापं कियन्मात्रं हत्यास्तेयादिसम्भवम् ।
स्मृते मनसि गोविन्दे दह्यते तूलराशिवत् ॥ १८९ ॥

कलौ केशवभक्तानां न भयं विद्यते क्वचित् ।
स्मृते सङ्कीर्त्तिते ध्याते सङ्क्षयं याति पातकम् ॥ १९० ॥

अद्ध्येतव्यमिदं शास्त्रं श्रोतव्यमनसूयया[1] ।
भक्तेभ्यश्च प्रदातव्यं धार्म्मिकेभ्यः पुनःपुनः ॥ १९१ ॥

अधीयान इदं सत्यं[2] विष्णोर्म्माहात्म्यमुत्तमम् ।
सर्वपापविनिर्म्मुक्तः[3] प्राप्नोति परमं पदम् ॥ १९२ ॥

श्रुत्वा धर्म्मं विजानाति श्रुत्वा त्यजति दुर्म्मतिम् ।
श्रुत्वा ज्ञानमवाप्नोति श्रुत्वा मोक्षं च गच्छति ॥ १९३ ॥

तस्मादिदं समाश्राव्यं[4] श्रोतव्यं च सदैव हि ।
कुतर्कदावदग्धेभ्यो न दातव्यं कथञ्चन[5] ॥ १९४ ॥

संसारविषपानेन[6] ये मृताः प्राणिनो भुवि ।
अमृताय [7]स्मृतस्तेषां कृष्णामृतमहार्ण्णवः ॥ १९५ ॥

क्लिन्नं पादोदकेनैव यस्य नित्यं कळेवरम्[8] ।
तीर्त्थकोटिसहस्रैस्तु स्नातो भवति प्रत्यहम् ॥ १९६ ॥

[9]तीर्त्थकोटिसहस्रैस्तु सेवितैः किं प्रयोजनम् ।
तोयं यदि पिबेन्नित्यं [10]साळग्रामशिलाच्युतम् ॥ १९७ ॥

---

१ "श्रोतव्यं च सदैव हि" इति क्वचित् ।

२ "अधीयाना इदं शास्त्रम्" इति प्र. पाठः । "अधीयाना इदं सत्यम्" इति क्वचित् ।

३ "–निर्म्मुक्ताः प्राप्नुवन्ति परं पदम्" इति प्र. पाठः । क्वाचित्ककोशपाठश्च तथा ।

४ "सदा सेव्यम्" इति प्र. पाठः । "सदा श्राव्यम्" इति क्वचित् ।

५ "कदाचन" इति कचित् ।

६ यद्यपि प्राचीनकोशानुसारिणि कोशे "संसारविषपापेन"(?) इति पठ्यते । स्खलितमिति सम्भाव्यते ।

७ "कृतस्तेषाम्" इति क्वचित् पाठः । कृष्णामृतमहार्ण्णव इति नायं ग्रन्थनिर्द्देशः । कृष्णाख्योऽमृतमहार्ण्णवः संसारिणाममृतत्वाय स्मृत इति भगवन्तं निर्द्दिदेश । अतः स्मृत इत्येव साधीयान् पाठः । नहि कृष्णाख्यो महार्ण्णवः क्रियते । अत एव "कृतस्तेषाम्–" इति पाठं पठन्त इमं श्लोकमपि ग्रन्थान्ते पेठुः । तथाच तत्पक्षे कृष्णामृतमहार्ण्णवाख्यो ग्रन्थः कृत इत्येव ।

८ "कलेवरम्" इति प्र. पाठः ।

९ क्वचित् कोशेऽत्र पूर्वार्द्धमुत्तरार्द्धं च व्यत्यस्य पठ्यते । "तोयं यदि–" इत्यादि पठित्वा ततः "तीर्त्थकोटि–" इत्यादि पठ्यत इति ।

१० "शालग्राम–" इति प्र. पाठः ।

[1]साळग्रामशिलास्पर्शं ये कुर्वन्ति दिनेदिने ।
वाञ्छन्ति करसंस्पर्शं तेषां देवाः सवासवाः ॥ १९८ ॥

दुःसहो नारको वह्निर्दुःसहा यमकिङ्कराः ।
विषमश्चान्तकपथः प्रेतत्वं चातिदारुणम् ॥ १९९ ॥

विचिन्त्य[2] मनसाऽप्येवं पातकाद् विनिवर्त्तयेत् ।
स्मरणं कीर्त्तनं विष्णोः सदैव न परित्यजेत् ॥ २०० ॥

॥ [3]श्रीवेदव्यासः ॥

अच्युतानन्तगोविन्दनामोच्चारणभीषिताः[4] ।
नश्यन्ति सकला रोगाः सत्यंसत्यं वदाम्यहम् ॥ २०१ ॥

सकृदुच्चारितं[5] येन हरिरित्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ २०२ ॥

एवं ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।
कीर्त्तयन्ति सुरश्रेष्ठं[6] देवं नारायणं प्रभुम् ॥ २०३ ॥

किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ।
यो नित्यं ध्यायते देवं नारायणमनन्यधीः ॥ २०४ ॥

नित्योत्सवो नित्यता च[7] नित्यश्रीर्नित्यशो जयः ।
येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः[8] ॥ २०५ ॥

जीवंश्चतुर्द्दशादूर्ध्वं पुरुषो [9]नियमेन तु[10] ।
स्त्री वाऽप्यनूनदशकं देहं मानुषमार्ज्जते[11] ॥ २०६ ॥

---

१ "शालग्राम–" इति प्र. पाठः । २ "सञ्चिन्त्य" इति प्र. पाठः । क्वचित् कोशे च ।

३ प्र. पाठे "श्रीवेदव्यासः" इत्येतन्न पठ्यते । क्वचित् "श्रीवेदव्यास उवाच" इतीयत् पठ्यते ।

४ "–रणभेषजात्" इति प्र. पाठः । क्वचित् कोशेषु च ।

५ "सकृदुचरितम्" इति प्र. पाठः । ६ "कीर्त्तयन्ति परं श्रेष्ठम्" इति प्र. पाठ. ।

७ "–त्सवो भवेत् तेषां नित्यश्री–" इति प्र. पाठः । "–त्सवो नित्ययशो नित्यश्री–" इति क्वचित् । प्राचीनपाठे नित्यता नित्यं भावः । नित्यमुत्सवादिर्भवति । स च नित्यं चिरकालमनुवर्त्तत इति उत्सवजयादेः स्थिरस्थायित्वमुच्यते ।

८ "मङ्गलायतनं हरिः" इति प्र. पाठः । क्वचित् कोशे च तथा ।

९ "निमिषेण तु" इति क्वचित् पाठः ।

१० इतः परं प्र. पाठे–"दशावराणां देहानां कारणानि करोत्ययम्" इत्यर्द्धमधिकम् । ततः परं "स्त्री वाऽप्यनूत–" इत्यादि पठ्यते । ११ "–मार्ज्जयेत्" इति प्र. पाठः ।

चतुर्द्दशोर्ध्वजीवीनि[1] संसारश्चाऽदिवर्ज्जितः ।
अतोऽवित्त्वा[2] परं देवं मोक्षाशा का महामुने ॥ २०७ ॥

आचतुर्द्दशमाद् वर्षात्[3] कर्म्माणि नियमेन तु ।
दशावराणां देहानां कारणानि करोत्ययम् ।
अतः कर्म्मक्षयान्मुक्तिः कुत एव भविष्यति ॥ २०८ ॥

समानां विषमा पूजा विषमाणां समा तथा ।
क्रियते येन देवोऽपि स्वपदाद् भ्रश्यते हि सः[4] ॥ २०९ ॥

वित्तं बन्धुर्वयः कर्म्म विद्या चैव तु पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम्[5] ॥ २१० ॥

गुणानुसारिणीं पूजां समां दृष्टिं च यो नरः ।
सर्वभूतेषु कुरुते तस्य विष्णुः प्रसीदति ॥ २११ ॥

यथा सुहृत्सु कर्त्तव्यं [6]पितृशत्रुसुतेषु च ।
तथा करोति पूजादि[7] समबुद्धिः स उच्यते ॥ २१२ ॥

तिर्यक् पुण्ड्रं न कुर्वीत सम्प्राप्ते मरणेऽपि च[8] ।
नचान्यन्नाम[9] विब्रूयात् परं [10]नारायणादृते ॥ २१३ ॥

नैवेद्यशेषं देवस्य यो भुनक्ति[11] दिनेदिने ।
सिक्थेसिक्थे भवेत् पुण्यं चान्द्रायणशताधिकम् ॥ २१४ ॥

ऊर्ध्वपुण्ड्रमृजुं सौम्यं[12] ललाटे यस्य दृश्यते ।
स चण्डालोऽपि शुद्धात्मा पूज्य एव न संशयः ॥ २१५ ॥

---

१ "–र्ध्वजीवी तु" इति क्वचित् । चतुर्द्दशोर्ध्वजीवीनि, व्यत्यासेन चतुर्द्दशोर्ध्वजीविनी स्त्री वाऽपीति पूर्वश्लोकेनान्वय इति सम्प्रदायविदः ।

२ "अविदित्वा" इति क्वचित् ।

३ "वर्षान् पुरुषो नियमेन तु" इति प्र. पाठः ।

४ "भ्रश्यते हि स इति पाद्मे" इति कोशान्तरे लिखितम् । आकरं स्मरन् लिपिकृत् तदुल्लेखमकृत्वा चाऽत्मानं नियमयितुमप्रभवन् तदपि लिलेखैव ।

५ "गरीयो ह्युत्तरोत्तरम्" इति प्र. पाठः ।

६ "पितृभ्रातृसुतेषु" इति प्र. पाठः । "पितृमातृसुतेषु" इति क्वचित् ।

७ "पूजां हि" इति प्र. पाठः ।

८ "मरणे तथा" इति प्र. पाठः । "मरणेऽपि वा" इति क्वचित् ।

९ "नचान्यनाम" इति क्वचित् ।

१० "परान्नाराय–" इति प्र. पाठः । "–ब्रूयादृते नारायणात् परम्" इति क्वचित् ।

११ भुनक्ति भुङ्क्ते । 'भुजोऽनवने' इति नाऽश्रितम् ।

१२ प्रथमार्थे द्वितीया ।

अशुचिर्वाऽप्यनाचारो मनसा पापमाचरन्[1] ।
शुचिरेव भवेन्नित्यमूर्ध्वपुण्ड्राङ्कितो नरः ॥ २१६ ॥

ऊर्ध्वपुण्ड्रविहीनस्य श्मशानसदृशं मुखम् ।
अवलोक्य मुखं[2] तेषामादित्यमवलोकयेत् ॥ २१७ ॥

यज्ञो दानं तपश्चैव[3] स्वाध्यायः पितृतर्पणम् ।
व्यर्थं भवति तत् सर्वमूर्ध्वपुण्ड्रं विना कृतम् ॥ २१८ ॥

गोपीचन्दनलिप्ताङ्गो यँयं पश्यति चक्षुषा ।
तन्तं शुद्धं विजानीयान्नात्र कार्या विचारणा ॥ २१९ ॥

आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः ।
वैष्णवोऽस्मत्कुले जातः स नः सन्तारयिष्यति ॥ २२० ॥

जीवितं विष्णुभक्तस्य वरं पञ्चदिनान्यपि ।
नतु कल्पसहस्रैस्तु भक्तिहीनस्य केशवे ॥ २२१ ॥

किं तेन जातमात्रेण भूभारेणान्नशत्रुणा ।
यो जातो नार्च्चयेद् विष्णुं न स्मरेन्नापि[4] कीर्त्तयेत् ॥ २२२ ॥

यो ददाति द्विजातिभ्यश्चन्दनं गोपिमर्द्दितम् ।
अपि सर्षपमात्रेण पुनात्यासप्तमं[5] कुलम ॥ २२३ ॥

ज्ञानी च कर्म्माणि[6] सदोदितानि
कुर्यादकामः सततं भवेत ॥ २२४ ॥

अतीतानागतज्ञानी [7]त्रैलोक्योद्धरणक्षमः ।
एतादृशोऽपि नाऽचारं श्रौतं स्मार्त्तं परित्यजेत् ॥ २२५ ॥

यदेव विद्यया करोति श्रद्धयोपनिषदा
तदेव वीर्यवत्तरं भवति ॥ २२६ ॥

---

१ "पापमाचरेत्" इति क्वचित् ।

२ "मुखं तस्य आदित्य–" इति प्र. पाठः । प्राचीनपाठे–येये तादृशास्तेषां सर्वेषामिति सामस्त्येन निषेधाय बहुवचनम् । पूर्वं तु प्रतिज्ञा एकवचनेनापि पूर्यते हि ।

३ "तपो होमः स्वाध्यायः" इति क्वचित् ।

४ "न स्मरेद्वाऽपि" इति क्वचित् ।

५ "पुनात्यासप्तकं कुलम्" इति क्वचित् ।

६ "ज्ञानी ह कर्म्माणि" इति क्वचित् ।

७ "त्रिलोक्युद्धरणक्षमः" इति प्र. पाठः ।

कुर्वन्नेवेह कर्म्माणि जिजीविषेच्छतꣳ समाः ।
एवं त्वयि[1] नान्यथेतोऽस्ति न कर्म्म लिप्यते नरे ॥ २२७ ॥

आचारश्चैव साधूनामात्मनस्तुष्टिरेव च[2] ।
वेदप्रणिहितो धर्म्मो ह्यधर्म्मस्तद्विपर्ययः ॥ २२८ ॥

निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते ।
निवृत्तं सेवमानस्तु ब्रह्माभ्येति[3] सनातनम्[4] ॥ २२९ ॥

॥ इति कृष्णामृतमहार्ण्णवः समाप्तः[5] ॥

---

१ "एवं च त्वयि" इति क्वचित् पाठः प्रामादिकः ।

२ "–स्तुष्टिरेव तु" इति क्वचित् ।

३ "ब्रह्माप्येति" इति क्वचित् ।

४ इतः परं प्र. पाठे— "श्रीमदानन्दतीर्थार्यसहस्रकिरणोत्थिता ।
गोततिः सततं सेव्या गीर्वाणैः सिद्धिदा भवेत् ॥
यस्य त्रीण्युदितानि वेदवचने रुपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्म्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥
यः सर्वगुणसम्पूर्णः सर्वदोषविवर्ज्जितः ।
प्रीयतां प्रीत एवालं विष्णुर्म्मे परमः सुहृत्" इति श्लोयत्रयमधिकं पठ्यते । क्वचित् कोशेषु च "सनातनम्" इत्यतः परं "एतत् पुण्यम्–" इत्याद्यष्टौ (१८८–१९४) श्लोकाः, ततः "श्रीमदानन्दतीर्थार्य–" इत्यादिश्लोकद्वयं च पठितम् । क्वचित्तु "यस्य त्रीणि–" इत्याद्येकमेव पद्यं पठ्यते । ततश्च समाप्तिवाक्यम् । श्रीमदानन्दतीर्थेत्यादि पद्यं तु केनचित् परस्तात् कृत्वाऽऽचार्यस्तुतिपरं ग्रन्थतो निवेशितमिति सूक्ष्मदृशां प्रतिभाति । अत्र ग्रन्थे आद्यं पद्यद्वयं विहायावशिष्टाः सर्वेऽपि श्लोकाः पुराणादिभिरुद्धृता इति श्रीमदानन्दतीर्थार्यसहस्रकिरणोत्थितेति वचनं नातीव सङ्गतत् । अत एवोपसंहारवाक्येऽपि प्राचीनकोशेषु "इति कृष्णामृतमहार्ण्णवः समाप्तः" इत्येव पठ्यते, नत्वन्यत्रेव "श्रीमदानन्दतीर्थभगवत्पादकृतः" इति । भगवत्पादसङ्गृहीत इति तु साधु वचः ।

५ क्वचित् कोशे प्र. पाठे च "इति श्रीमदानन्दतीर्थभगवत्पादविरचितः कृष्णामृतमहार्णवः समाप्तः" इति पठ्यते ।

# तन्त्रसारसङ्ग्रहः*

ॐ॥ जयत्यब्जभवेशेन्द्रवन्दितः कमळापतिः[1] ।
अनन्तविभवानन्दशक्तिज्ञानादिसद्गुणः ॥ १ ॥

विधिं विधाय सर्गादौ तेन पृष्टोऽब्जलोचनः ।
आह देवो रमोत्सङ्गविलसत्पादपल्लवः ॥ २ ॥

अहमेकोऽखिलगुणो वाचकः प्रणवो मम ।
अकाराद्यतिशान्तान्तः सोऽयमष्टाक्षरो मतः ॥ ३ ॥

स विश्वतैजसप्राज्ञ[2]तुरीयात्मान्तरात्मनाम् ।
[3]परमात्मज्ञानात्मयुजां मद्रूपाणां च वाचकः ॥ ४ ॥

तद्रूपभेदाः पञ्चाशन्मूर्त्तयो मम चापराः ।
पञ्चाशद्वर्णवाच्यास्ता वर्णास्ताराणर्णभेदिताः ।
द्विरष्टपञ्चक[4]चतुष्पञ्चेत्येवाष्टवर्गगाः ॥ ५ ॥

अज आनन्द इन्द्रेशावुग्र ऊर्ज्ज ऋतम्भरः[5] ।
ॠघलृशौ ॡजिरेकात्मा ऐर[6] ओ[ज]जोभृदौरसः ॥ ६ ॥

---

* तन्त्रसारसङ्ग्रहोऽपि हृषीकेशतीर्थीये सम्प्रति नोपलभ्यते इत्यावेदितमेव पुरस्तात् । ततोऽत्रापि रघुवर्य तीर्थीयमेव शरणम् ।

१ "कमला-" इति प्र. पाठः । २ "तुर्यात्मान्त-" इति क्वचित् ।

३ "परात्म-" इति क्वचित् । ४ -"चतुःपञ्चेत्ये-" इति प्र. पाठः ।

५ "ऋतुम्भरः" इति प्र. पाठः प्रामादिकः । "-ऋतम्भराः" इति क्वचित् ।

६ "-रेकात्मैर ओजोभृदौ-" इति प्र. पाठः । प्राचीनपाठे 'एकात्मा ऐरः' इति विसंहिततया पाठः ऐर इति नामनिर्देशस्फुटत्वाय । एकात्मैर इति संहिततया पाठे एर इति ऐर इति च द्वेधाऽपि च्छेदः सम्भवी । ओजभृदिति च प्राचीनकोशे लिपिकृत्स्खलनं स्यात् । अथवा ओजःशब्दवदोजशब्दोऽप्यस्तीति योजनीयम् ।

अन्तोऽर्द्धगर्भः कपिलः खपतिर्ग्गरुडासनः ।
घर्म्मो ङसारश्चार्वङ्गश्छन्दोगम्यो जनार्द्दनः ॥ ७ ॥

झाटितारिर्ञमग्ङ्गी ठकलो डरको[1] ढरी ।
णात्मा तारस्थभो[2] दण्डी धन्वी नम्यः परः फली ॥ ८ ॥

बली भगो मनुर्यज्ञो रामो लक्ष्मीपतिर्वरः ।
शान्तसंवित् षड्गुणश्च सारात्मा हंसळाळुकौ ।
पञ्चाशन्मूर्त्तयस्त्वेता ममाकारादिलक्षकाः ॥ ९ ॥

नारायणाष्टाक्षरश्च ताराष्टाक्षरभेदवान् ।
आद्यैस्तारचतुर्वर्ण्णैर्भिन्ना व्याहृतयः क्रमात् ॥ १० ॥

अनिरुद्धादिकास्तासां देवता व्युत्क्रमेण वा ।
ताश्चतुर्मूर्त्तयस्त्वेव द्वादशार्ण्णपदोदिताः ॥ ११ ॥

नारायणाष्टाक्षराच्च व्याहृतिभ्यस्तथैव च ।
विभेदो द्वादशार्ण्णानां केशवाद्याश्च देवताः ॥ १२ ॥

नारायणाष्टाक्षराच्च व्याहृतित्रिगुणात् पुनः ।
वेदमाता तु गायत्री द्विगुणा द्वादशाक्षरात् ।
चतुर्विंशन्मूर्त्तयोऽस्याः कथिता वर्ण्णदेवताः ॥ १३ ॥

तद्भेदः पौरुषं सूक्तं वेदाः पुरुषसूक्तगाः ।
वैदिकाः सर्वशब्दाश्च तस्मात् सर्वाभिधो ह्यहम्[3] ।
पञ्चाशद्वर्ण्णभिन्नाश्च सर्वशब्दा अतोऽपि च ॥ १४ ॥

ऋषिश्च देवतैकोऽहं तारादीनां विशेषतः ।
छन्दो मदीया गायत्री ताराष्टाक्षरयोर्म्मता ॥ १५ ॥

उद्यद्भास्वत्समाभासश्चिदानन्दैकदेहवान् ।
चक्रशङ्खगदापद्मधरो ध्येयोऽहमीश्वरः ॥ १६ ॥

लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्त्तिगणमद्ध्यगः ।
ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ।
सेव्यमानोऽधिकं भक्त्या नित्यनिश्शेषशक्तिमान् ॥ १७ ॥

---

१ "ठलको डलको-" इति प्र. पाठः । "ठकरो डकरो-" इति क्वचित् ।
२ "तारस्थपो-" इति प्र. पाठः । ३ "-मिधोऽस्म्यहम्" इति प्र. पाठः ।

मूर्त्तयोऽष्टावभि[1]द्धयेयाश्चक्रशङ्खवराभयैः ।
युक्ताः प्रदीपवर्ण्णाश्च सर्वाभरणभूषिताः ॥ १८ ॥

तादृग्रूपाश्च पञ्चाशज्ज्ञानमुद्राभयोद्यताः ।
[2]टङ्की धन्वी च दण्डी च तत्तद्युक्तास्तु वामतः ॥ १९ ॥

वासुदेवादिकाः शुक्लरक्तपीतासितोज्ज्वलाः ।
चक्रशङ्खगदाब्जैतः प्रथमो मुसली हली ॥ २० ॥

[3]सचक्रशङ्खस्त्वपरस्तृतीयः शार्ङ्गबाणवान् ।
[4]सशङ्खचक्रस्तुर्यस्तु चक्रशङ्खासिचर्म्मवान् ॥ २१ ॥

केशवो मधुसूदनः सङ्कर्षणदामोदरौ ।
[5]सवासुदेवप्रद्युम्ना [6]दक्षोच्चकरशङ्खिनः ॥ २२ ॥

विष्णुमाधवानिरुद्धपुरुषोत्तमाधोक्षजाः ।
जनार्द्दनश्च वामोच्चकरस्थितदरा मताः ॥ २३ ॥

गोविन्दश्च त्रिविक्रमः सश्रीधरहृषीकपाः[7] ।
नृसिंहश्चाच्युतश्चैव वामाधःकरशङ्खिनः ॥ २४ ॥

वामनः सनारायणः पद्मनाभ उपेन्द्रकः ।
हरिः कृष्णश्च दक्षाधःकरे शङ्खधरा मताः ॥ २५ ॥

शङ्खचक्रगदापद्मधराश्चैते हि सर्वशः ।
क्रमव्युत्क्रमपद्मादिगदादिव्युत्क्रमस्तथा ।
अर्द्धक्रमः सान्तरश्च षट्सुपद्स्वरिपूर्विणाम्[8] ॥ २६ ॥

---

१ "–योऽष्टावपि द्धयेया–" इति प्र. पाठः । क्वचित् कोशेषु च तथा ।

२ "टङ्की दण्डी च धन्वी च" इति प्र. पाठः । कोशेषु च क्वचित् ।

३ "सशङ्खचक्रस्त्व–" इति प्र. पाठः ।

४ "सचक्रशङ्खस्तुर्यस्तु शङ्खचक्रासि–" इति प्र. पाठः ।

५ "सवासुदेवः प्रद्युम्नो–" इति प्र· पाठः ।        ६ "दक्षोर्ध्वकर–" इति क्वचित् ।

७ "–हृषीकपः" इति प्र. पाठः ।

८ तथाहि पञ्चरात्रवचनम्—

"केशवस्याम्बुजं शङ्खं चक्रं दण्डस्तथाऽऽयुधम् ।
प्रादक्षिण्येन बाहूनामन्येषामुच्यते क्रमात् ॥ (१)
नारायणः शङ्खपद्मगदाचक्रधरः स्मृतः । (२)
माधवो गदया सार्द्धं चक्रशङ्खाम्बुजायुधः । (३)

वर्णानां देवतानां च नित्यत्वान्न क्रमः स्वतः ।
व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते ॥ २७ ॥

समासव्यासयोगेन व्याहृतीनां चतुष्टयम् ।
सत्यं चाङ्गानि[१] तारस्य [२]प्रोच्यतेऽष्टाक्षरस्य च ॥ २८ ॥

---

गोविन्दश्चक्रदण्डाब्जशङ्खायुधधरो भवेत् । (४)
विष्णुर्गदाब्जशङ्खारिधरः स्यात् (५) मधुसूदनः ।
चक्रशङ्खाब्जदण्डास्त्रधरः कार्यः (६) त्रिविक्रमः ।
पद्मदण्डारिशङ्खास्त्रः (७) वामनः शङ्खचक्रधृत् ।
गदाब्जपाणिश्च (८) तथा श्रीधरो धृतवारिजः ।
सार्द्धं चक्रगदाशङ्खैः (९) हृषीकेशमतः शृणु ।
गदाचक्राब्जशङ्खास्त्रधरः (१०) पङ्कजनाभिकः ।
शङ्खपद्मारिदण्डास्त्रधरः(११) दामोदरः स्मृतः ।
अब्जशङ्खगदाचक्रधरः (१२) द्वादशमूर्त्तयः ।
एताः, कौमोदकीशङ्खचक्राम्भोजधरः स्मृतः ।
वासुदेवो जगद्योनिः (१३) सङ्कर्षणमतः शृणु ।
गदाशङ्खाब्जचक्राणि धारयन्तं चतुर्भुजम । (१४)
प्रद्युम्नश्चक्रशङ्खाभ्यां सह दण्डधरोऽब्जवान् । (१५)
अनिरुद्धोऽरिदण्डाब्जपद्मपाणिश्चतुर्भुजः । (१६)
चक्रपद्मधरः शङ्खगदावान् पुरुषोत्तमः । (१७)
अधोक्षजः पद्मगदाशङ्खचक्रधरः स्मृतः । (१८)
नृसिंहश्चारिजलजगदाशङ्खधरः स्मृतः । (१९)
अच्युतो दण्डपद्मारिशङ्खहस्तश्चतुर्भुजः । (२०)
जनार्द्दनः पद्मचक्रशङ्खदण्डश्चतुर्भुजः । (२१)
उपेन्द्रः शङ्खदण्डारिपद्मायुधविभूषितः । (२२)
शङ्खचक्राब्जदण्डास्त्रो हरिः स्यात् कमलासनः । (२३)
कृष्णः शङ्खगदापद्मचक्रपाणिश्चतुर्भुजः" (२४) इति ।

अत्र दक्षाधःकरमारभ्य प्रादक्षिण्येन गणना । दण्ड इति गदा । अस्त्रमित्यायुधम् । 'अनिरुद्धोऽरिदण्डाब्जपद्मपाणिः' इत्यत्राब्जः शङ्खः । 'अनिरुद्धश्चक्रगदी शङ्खी पद्मी च' इति ह्यग्निपुराणे । अन्यत् सुगमम् । स्कान्दादिष्वप्येवमेव मूर्त्तिलक्षणमिति सर्वाविरुद्धोऽयं पन्थाः ।

१ तथात्र न्यासः—"भूः हृदयाय नमः । भुवः शिरसे स्वाहा । स्वः शिखायै वषट् । भूर्भुवः स्वः कवचाय हुम् । सत्यं अस्त्राय फट् ।"

२ "प्रोच्यन्ते—" इति प्र. पाठः । कोशेषु च तथा क्वचित् ।

[1]क्रुद्धमहावीरद्युसहस्रसहितोल्ककाः ।
चतुर्थ्यन्ता हृदादीनि[2] पृथग्रूपाणि तानि च ।
विष्णोरेवात्यभेदेऽपि तदैश्वर्यात् तदन्यवत् ॥ २९ ॥

चक्रशङ्खवराभीतिहस्तान्येतानि सर्वशः ।
मूलरूपसवर्णानि कृष्णवर्णा शिखोच्यते ।
चतुर्विंशन्मूर्त्तयश्च मूलरूपसवर्णकाः ॥ ३० ॥

आदिवर्णत्रयं नाभिहृच्छिरस्सु यथाक्रमम् ।
न्यसनीयं[3] च तद्वर्णदेवताद्ध्यानपूर्वकम् ॥ ३१ ॥

पज्जानुनाभिहृदयवाङ्नासानेत्रकेषु च ।
अष्टाक्षराणां न्यासः[4] स्याद् व्याहृतीनां प्रजापतिः ॥ ३२ ॥

मुनिश्छन्दस्तु गायत्री देवता भगवान् हरिः ।
उद्यदादित्यवर्णश्च ज्ञानमुद्राभयोद्यतः ॥ ३३ ॥

तारेण व्याहृतीभिश्च ज्ञेयान्यङ्गानि पञ्च च ।
नाभिहृत्केषु सर्वेषु चतस्रो व्याहृतीर्न्यसेत्[5] ॥ ३४ ॥

---

१ "अथ क्रुद्धमहावीरद्युसहस्रसहोल्ककाः" इति क्वचित् प्र. पाठः । "क्रुद्धमहा-—" इत्यादि च कोशान्तर-पाठः ।

२ तथाहि न्यासः–"क्रुद्धोल्काय हृदयाय नमः । महोल्काय शिरसे स्वाहा । वीरोल्काय शिखायै वषट् । द्युल्काय कवचाय हुम् । सहस्रोल्काय अस्त्राय फट्" इति । अत्र कवचमन्त्रे 'द्युल्काय' इति ह्रस्वं पठन्ति रघुनाथतीर्थाः । तथाहि तद्वचनम्– "द्यूल्केति वक्तव्ये द्युल्केत्युकारलोपेन वचनं मन्त्राणां छन्दस्तुल्यत्वज्ञापनाय" इति । क्वचित् क्रुद्धोल्काद्यनन्तरं हृदयादितः पूर्वं स्वाहाशब्दः पठ्यते– "क्रुद्धोल्काय स्वाहा हृदयाय नमः । महोल्काय स्वाहा शिरसे स्वाहा" इत्यादि । तथाहि च श्रूयते-–"शब्दैः क्रुद्धमहावीरद्युसहस्रेति पञ्चभिः । प्रत्येकमेभिर्न्यस्तव्यमुल्क इत्युत्तरं पदम् । एषां विभक्तियुक्तानां स्वाहाशब्दोऽन्तरा भवेत्" इत्यादि ।

३ तथाच न्यासः "अँ विश्वाय नमः (नाभौ) । उँ तैजसाय नमः (हृदये) । मँ प्राज्ञाय नमः (शिरसि)" इति ।

४ तथा च न्यासः "ॐ विश्वाय नमः(पादयोः) । नँ तैजसाय नमः (जान्वोः) । मोँ प्राज्ञाय नमः (नाभौ) । नाँ तुरीयाय नमः (हृदये) । राँ आत्मने नमः (मुखे) । यँ अन्तरात्मने नमः (नासयोः) । णाँ परमात्मने नमः (नेत्रयोः) । यँ ज्ञानात्मने नमः (शिरसि)" इति । अयं संहृतिन्यासः । सृष्टिन्यासे तु विपर्ययेण शिरआदित्वम् । एवमुत्तरत्रापि ।

५ तथा च न्यासौ- "ॐ हृदयाय नमः । भूः शिरसे स्वाहा । भुवः शिखायै वषट् । स्वः कवचाय हुम् । भूर्भुवःस्वः अस्त्राय फट्" इति, "भूः अनिरुद्धाय नमः (नाभौ) । भुवः प्रद्युम्नाय नमः (हृदये) । स्वः सङ्कर्षणाय नमः (शिरसि) । भूर्भुवःस्वः वासुदेवाय नमः (सर्वाङ्गेषु)" इति च ।

द्वादशार्ण्णस्य जगती च्छन्दोऽन्यत् तारवत् स्मृतम् ।
अच्छवर्ण्णोऽभयवरकरो ध्येयोऽमितद्युतिः ॥ ३५ ॥

पदैर्व्यस्तैः समस्तैश्च ज्ञेयान्यङ्गानि पञ्च च ।
अष्टाक्षराणां स्थानेषु बाह्वोरूर्वोश्च विन्यसेत्[१] ॥ ३६ ॥

विश्वामित्रस्तु सन्ध्यार्त्थे तदन्यत्र प्रजापतिः ।
मुनिर्द्देवस्तु सवितृनामा स्रष्टृत्वतो हरिः ॥ ३७ ॥

प्रोद्यदादित्यवर्ण्णश्च सूर्यमण्डलमध्यगः ।
चक्रशङ्खधरोऽङ्कस्थदोर्द्वयो ध्येय एव च ॥ ३८ ॥

सताराश्च व्याहृतयो गायत्र्यङ्गानि पञ्च च ।
दोःपत्सन्धिषु साग्रेषु नाभिहृन्मुखकेषु च ।
वर्ण्णन्यासश्च[२] कर्त्तव्यस्तारवन्निखिलं स्मृतम् ॥ ३९ ॥

---

१ तथा च न्यासौ– "ॐ हृदयाय नमः । नमः शिरसे स्वाहा । भगवते शिखायै वषट् । वासुदेवाय कवचाय हुम् । ॐ नमो भगवते वासुदेवाय अस्त्राय फट्" इति; "ॐ केशवाय नमः (पादयोः) । नँ नारायणाय नमः (जान्वोः) । मोँ माधवाय नमः (नाभौ) । भँ गोविन्दाय नमः (हृदये) । गँ विष्णवे नमः (मुखे) । वँ मधुसूदनाय नमः (नासायाम्) । तेँ त्रिविक्रमाय नमः (नेत्रयोः) । वाँ वामनाय नमः (शिरसि) । सुँ श्रीधराय नमः । देँ हृषीकेशाय नमः (बाहुद्वये) । वाँ पद्मनाभाय नमः । यँ दामोराय नमः (ऊरुद्वये)" इति । यद्यपि द्वादशाक्षरमन्त्राणामन्यादृशो न्यासक्रमश्चतुर्त्थे वक्ष्यते । अयं तु विशिष्य वासुदेवमन्त्रस्य न्यासस्थाननिर्द्देशक्रम इत्यवधेयम् । तथाहि रघुनाथतीर्त्थीयम्–"पज्जानुनाभिहृदयवाङ्नासानेत्रकाणि ओङ्कारादिवाकारान्तानां न्यासस्थानानि । सुकारादियकारान्तानां चतुर्ण्णां वर्ण्णानां बाहुद्वयमूरुद्वयं चेति चत्वारि न्यासस्थानानि" इति । वस्तुतस्तु चतुर्त्थाध्याये वक्ष्यमाणदिशा जानुन्यासानन्तरं नाभिन्यासात् पूर्वं ऊरुद्वये, तथा हृदये न्यासानन्तरं मुखे न्यासात् पूर्वं बाहुद्वये न्यासः साधीयानिति भाति । सृष्टिसंहृत्योस्तदात्वे क्रमसौकर्यं च भवति । तथाहि न्यासक्रमप्रतिपादकं वचनान्तरम्–"पादयोर्ज्जानुनोरूर्वोर्न्नाभौ हृदि तथोरसोः । भुजद्वये च कण्ठे च" इत्यादि ।

२ व्याहृत्युक्तक्रमेणैवात्राप्यङ्गन्यासः । अक्षरन्यासस्तु–"तँ केशवाय नमः । सँ नारायणाय नमः । विँ माधवाय नमः । तुँ गोविन्दाय नमः (दक्षिणहस्ताङ्गुलिसन्धिषु चतुर्षु) । वँ विष्णवे नमः (अङ्गुलीनामग्रे) । रेँ मधुसूदनाय नमः । णँ त्रिविक्रमाय नमः । यँ वामनाय नमः । भँ श्रीधराय नमः (वामहस्ताङ्गुलिसन्धिषु चतुर्षु) । गोँ हृषीकेशाय नमः (अङ्गुलीनामग्रे) । देँ पद्मनाभाय नमः । वँ दामोदराय नमः । स्यँ सङ्कर्षणाय नमः । धीँ वासुदेवाय नमः । (दक्षिणपादाङ्गुलिसन्धिषु) । मँ प्रद्युम्नाय नमः (अङ्गुलीनामग्रे) । हिँ अनिरुद्धाय नमः । धिँ पुरुषोत्तमाय नमः । योँ अधोक्षजाय नमः । योँ नारसिंहाय नमः (वामपादाङ्गुलिसन्धिषु) । नँ अच्युताय नमः (अङ्गुलीनामग्रे) । प्रँ जनार्द्दनाय नमः (नाभौ) । चोँ उपेन्द्राय नमः (हृदये) । दँ हरये नमः (मुखे) । याँ कृष्णाय नमः (शिरसि)" इति । अयमपि रघुनाथतीर्त्थीयोक्तदिशा न्यासक्रमः । अत्रापि पादद्वयसन्धिषु साग्रेषु न्यासानन्तरं नाभौ हृदये च न्यासः, ततो बाहुद्वयसन्धिषु साग्रेषु न्यासः, ततो मुखे शिरसि च न्यास इत्ययमपि क्रमः साधीयानिति भाति ।

पञ्चाशदक्षराणां च[1] पुंसूक्तस्यापि सर्वशः[2]।
अनुष्टुभश्च त्रिष्टुप् च च्छन्दोऽस्य त्रिष्टुभोऽपि वा ॥ ४० ॥

विष्णुशब्दश्चतुर्थ्यन्तो हृदयेतः षडक्षरः।
तारवत् सर्वमस्यापि[3] श्यामो ध्येयो हरिः स्वयम् ॥ ४१ ॥

वर्ण्णा एव षडङ्गानि षणयोर्भेदयोगतः[4]।
पज्जानुनाभिहृन्नासाकेषु न्यासश्च[5] वर्ण्णशः[6] ॥ ४२ ॥

एते तु सर्वमन्त्राणां मूलमन्त्रा विशेषतः।
एतज्ज्ञानात् समस्तं च ज्ञातं स्याच्छब्दगोचरम्।
एतज्जपात् समस्तानां मन्त्राणां जापको भवेत् ॥ ४३ ॥

पूज्यश्च भगवान् नित्यं चक्राब्जादिकमण्डले।
अचले हृदये वाऽपि चले वा[7] केवलस्थले ॥ ४४ ॥

अष्टाक्षरेण सम्पूज्य प्रथमं देवतां पराम्।
मद्ध्ये सव्ये गुरूंश्चैव दक्षिणे सर्वदेवताः ॥ ४५ ॥

[8]पुनः सव्ये सर्वगुरूनाग्नेयादिषु च क्रमात्।
गरुडं व्यासदेवं च दुर्ग्गां चैव सरस्वतीम् ॥ ४६ ॥

धर्म्मं ज्ञानं च वैराग्यमैश्वर्यं चैव कोणगान्।
तदन्तः पूर्वदिक्पूर्वमधर्म्मादींश्च पूजयेत् ॥ ४७ ॥

---

१ पञ्चाशदक्षरणां च तारवन्निखिलं स्मृतम्। अन्तर्यामी ऋषिः। गायत्री च्छन्दः। परमात्मा देवतेत्यर्थः।

२ पुंसूक्तस्यापि ऋषिदेवते ते एव। छन्दस्तु बह्वृचानां षोळशर्चे सूक्ते आद्याः पञ्चदशानुष्टुभः। अन्त्या त्रिष्टुप्। अष्टादशर्चे याजुषपाठे अन्त्यास्तिस्रस्त्रिष्टुभः।

३ तारवदन्तर्याम्येव ऋषिः। गायत्री छन्दः। परमात्मैव विष्णुर्देवता।

४ "विँ हृदयाय नमः। षँ शिरसे स्वाहा। णँ शिखायै वषट्। वेँ कवचाय हुम्। नँ नेत्राभ्यां वौषट्। मँ अस्त्राय फट्" इति षडङ्गन्यासः। अष्टसु महामन्त्रेष्वयमेक एव षडङ्गः। अन्ये पञ्चाङ्गाः। अत एवास्यान्ते निर्देशः।

५ अक्षरन्यासो यथा—"विँ विश्वाय नमः (पादयोः)। षँ तैजसाय नमः (जान्वोः)। णँ प्राज्ञाय नमः (नाभौ)। वेँ तुरीयाय नमः (हृदये)। नँ आत्मने नमः (नासायाम्)। मँ परमात्मने नमः (शिरसि)" इति।

६ "न्यासश्च सर्वशः" इति क्वचित्।

७ "हृदये वा चले वाऽपि जले वा" इति क्वचित्। "चले वा हृदये वाऽपि जले वा" इति च। "अचले हृदये वाऽपि जले वा" इति च क्वचित्।

८ "दक्षिणे गुरवः पार्श्वे सम्पूज्याः सर्वदेवताः। सव्ये तु सर्वगुरवः" इति योगदीपिका।

अपूजिता अधर्म्मादिदातारस्ते तथाभिधाः ।
निरृतिश्चैव दुर्ग्गा च कामो रुद्रश्च देवताः ।
यमवायुशिवेन्द्राश्च ज्ञेया धर्म्मादिदेवताः ॥ ४८ ॥

परमः पुरुषो मद्धये शक्तिराधाररूपिणी ।
[1]कूर्म्मोऽनन्तश्च पृथिवी क्षीरसागर एव च ॥ ४९ ॥

श्वेतद्वीपो मण्डपश्च[2] दिव्यरत्नमयो महान् ।
पद्ममेतत्त्रयं देवी रमैव बहुरूपिणी ॥ ५० ॥

सूर्यसोमहुताशाश्च पद्मे श्रीस्त्रिगुणात्मिका ।
आत्मान्तरात्मपरमात्मज्ञाना[3]त्मानश्च[4] मूर्त्तयः ॥ ५१ ॥

विमलोत्कर्षिणी[5] ज्ञाना क्रिया योगा तथैव च ।
प्रह्वी सत्या तथेशानाऽनुग्रहा चेति शक्तयः ॥ ५२ ॥

अष्टदिक्षु च मद्धये च स्वरूपाण्येव ता हरेः ।
ततोऽनन्तं योगपीठस्वरूपं पूजयेद्धरेः ॥ ५३ ॥

तत्राऽवाह्य हरिं चार्घ्यं पाद्यमाचमनीयकम् ।
मधुपर्कं पुनश्चाऽचां[6] स्नानं वासोविभूषणे[7] ॥ ५४ ॥

उपवीतासने दत्त्वा गन्धपुष्पे तथैव च ।
लक्ष्मीधरे यजेत् तत्र पार्श्वयोरुभयोर्हरेः ॥ ५५ ॥

हृदयादींस्तथेन्द्रादिदिक्ष्वस्त्रं कोणकेषु च ।
वासुदेवादिकान् दिक्षु केशवादींस्ततः परम्[8] ॥ ५६ ॥

मत्स्यकूर्म्मवराहांश्च नारसिंहं च वामनम् ।
भार्ग्गवं राघवं कृष्णं बुद्धं कल्किनमेव च ।
अनन्तं विश्वरूपं च तद्बहिः पूजयेत् क्रमात् ॥ ५७ ॥

---

१ "बिभर्त्यण्डं हरिः कूर्म्म अण्डे चाप्युदकं महत् । उदके कूर्म्मरूपस्य वायुः पुच्छं समाश्रितः" इति बृहद्भाष्योक्तिदिशा अण्डाद् बहिरन्तश्चेति विष्णुकूर्म्मद्वयम्, तत्पुच्छाश्रितो वायुकूर्म्मश्चेति त्रयः कूर्म्मा अत्र विवक्षिता इति रघुनाथतीर्थपादाः । "कूर्म्मानन्तौ च पृथिवीम्" इति योगदीपिकायाम्, "आधारशक्तिं कूर्म्मं चाप्यनन्तं पृथिवीं तथा" इति विष्णुतीर्थीये च केवलमेकस्यैव कूर्म्मस्य निर्देशो दृश्यते ।

२ "मण्टपश्च" इति प्र. पाठः ।

३ "–परमज्ञाना–" इति प्र. पाठः ।

४ "–त्मानस्तु" इति क्वचित् ।

५ "विमलोत्कर्षणी" इति प्र. पाठः ।

६ "पुनश्चाचांम्" इति मुद्रितः प्र. पाठः प्रामादिकः ।

७ "वासो विभूषणम्" इति प्र. पाठः ।

८ "केशवादींश्च राशिषु" इति क्वचित् ।

अनन्तब्रह्मवाय्वीशान् वीशं चाग्रे प्रपूजयेत् ।
वारुणीं चैव गायत्रीं भारतीं गिरिजामपि ॥ ५८ ॥

कोणेषु वीन्द्रवामे च सुपर्ण्णीं प्रयजेदपि[1] ।
इन्द्रादीन् शेषविद्धयन्तान् सभार्यान् सपरिग्रहान् ॥ ५९ ॥

धूपदीपौ ततो दत्त्वा नैवेद्यं मूलमन्त्रतः ।
अनेन क्रमयोगेन जुहुयात् संस्कृतेऽनले ॥ ६० ॥

पुष्पाञ्जलिश्च होमश्च मूलेनाष्टोत्तरं शतम् ।
सकृत्सकृत् पुष्पमन्यैर्होमस्तस्य चतुर्ग्गुणः ॥ ६१ ॥

विसर्ज्जयित्वा नैवेद्यं मूलेन त्रिः समर्च्चयं च ।
धूपदीपौ पुनर्द्दत्वा पुनर्म्मूलेन पूर्ववत् ।
अर्च्चयित्वा पुनर्द्ध्यात्वा जपेदष्टोत्तरं शतम् ॥ ६२ ॥

पुनर्द्ध्यायेद्धरिं सर्वदेवदेवेश्वरं प्रभुम् ।
जपद्ध्यानहुतार्च्चादीनेवं यः कुरुते सदा ।
धर्म्मार्थकाममोक्षाणां भाजनं स्यात् स एव हि ॥ ६३ ॥

सर्वोत्तमं हरिं ज्ञात्वा य एवं भक्तिपूर्वकम् ।
जपद्ध्यानादिभिर्न्नित्यं पूजयेन्नास्य दुर्ल्लभम् ॥ ६४ ॥

भक्तिं कृत्वाऽन्यदेवेषु ब्रह्मरुद्रादिकेष्वपि ।
सर्वोत्कर्षमविज्ञाय विष्णोर्यांति तमो ध्रुवम् ॥ ६५ ॥

न यज्ञा नच तीर्त्थानि नोपवासव्रतानि च ।
दैवतानि च सर्वाणि त्रातुं तं शक्नुयुः[2] क्वचित् ॥ ६६ ॥

हरिर्हि सर्वदेवानां परमः पूर्ण्णशक्तिमान् ।
स्वतन्त्रोऽन्ये तद्वशा हि सर्वेऽतः स जगद्गुरुः ॥ ६७ ॥

ब्रह्मादयश्च तद्भक्त्या भागिनो भोगमोक्षयोः[3] ।
तस्माज्ज्ञेयश्च पूज्यश्च वन्द्यो द्ध्येयः सदा हरिः ॥ ६८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमत्तन्त्रसारसङ्ग्रहे प्रथमोऽद्ध्यायः

---

१ "सौपर्ण्णीं पूजयेदपि" इति प्र. पाठः ।
२ "सर्वाणि न त्रातुं शक्नुयुः" इति क्वचित् ।　　३ "भोगिनो मोक्षभोगयोः" इति क्वचित् ।

## [द्वितीयोऽध्यायः]

ॐ ॥ यस्यकस्यापि मन्त्रस्य न्यासः पञ्चाशदक्षरैः ।
वीर्यदः केऽभितोवक्त्रमक्षिकर्णेषु नासयोः ॥ १ ॥

गण्डयोरोष्ठयोर्दन्तपङ्क्त्योर्म्मूर्द्धनि वाचि च ।
दोःपत्सन्धिषु साग्रेषु पार्श्वयोः पृष्ठगुह्ययोः ॥ २ ॥

तुन्दे च हृदि धातूनां सप्तके प्राणजीवयोः ।
सक्षकारान् न्यसेद् वर्णान् नृसिंहः क्षस्य देवता ।
जपे न्यासे च विहितः क्षोऽक्षराणां सदाऽन्ततः ॥ ३ ॥

प्राणायामो रेचयित्वा पूरयित्वा च कुम्भके ।
[1]तारत्रिद्वादशावर्त्तैर्ध्येकद्वादशकेन वा ।
तत्तन्मन्त्रेण वा कार्यो गायत्र्या दशतारकैः[2] ॥ ४ ॥

आदावेव जपे कुर्याच्छोषणं दहनं प्लुतिम् ।
वाय्वग्निवारुणैर्बीजैर्ध्यात्वा तन्मण्डले हरिम् ॥ ५ ॥

एकपञ्चाशदर्णानां[3] चतुर्विंशति[4] मूर्त्तयः ।
आत्माद्या वासुदेवाद्या विश्वाद्या मत्स्यकच्छपौ ॥ ६ ॥

---

१ तारैस्त्रिर्द्वादशावृत्तै-" इति प्र. पाठः । "तारत्रिद्वादशावृत्तैः" इति "तारत्रिद्वादशावृत्ते" इति च क्वचित् ।

२ दशतारकैः सहितया गायत्र्या । तथाच मन्त्रः- "ॐ भूः ।ॐ भुवः । ॐ स्वः । ॐ महः । ॐ जनः । ॐ तपः । ॐ सत्यम् । ॐ तत् सवितुर्वरेण्यम् । ॐ भर्गो देवस्य धीमहि । ॐ धियो यो नः प्रचोदयात्" इति । अयं च वानप्रस्थानामेवेति रघुनाथतीर्थाः । तथाहि तत्वकणिकायाम्-"व्याहृतित्रये ॐकारत्रयं महर्जनस्तपःसत्यशब्देभ्यः पूर्वमोङ्कारचतुष्टयम्, गायत्र्याः प्रतिपादमोङ्कारत्रयमिति । अयं वनस्थानामेवाधिकारिविशेषाणामिति व्यवस्थितो विकल्पः" इति । अथवा गायत्र्या दशतारकैरित्ययं प्राणायामक्रमः—ॐ भूरित्यादि भूरादिसत्यान्तं पूर्ववत् सप्तोङ्काराः । ततः पुनरोङ्कारोऽष्टमः । ततो ब्रह्मगायत्री । ततः परम्—"ओमापोज्योतीरसोऽमृतं ब्रह्म भूर्भुवःसुवरोम्" इति शिरोमन्त्राद्यन्तयोर्द्वाविति दशतारका गायत्री । तथाहि योगयाज्ञवल्क्यः "भूर्भुवःस्वर्महर्जनस्तपः सत्यं तथैव च । सप्तोङ्कारसमायुक्तं तथा तत्सवितुः परम् । ओमापो ज्योतिरित्येतत् शिरः पश्चात् प्रयोजयेत्" इति । अत्र ब्रह्मगायत्र्यादावोङ्कारस्य सिद्धत्वादनुक्तिः ।

३ "-शद्वर्णानाम्" इति प्र. पाठः ।

४ "चतुर्विंशति" इत्यविभक्तिको निर्देशः । "चतुर्विंशच" इति क्वचित् ।

कोलो नृसिंहः सवटुर्जामदग्न्यरघूद्वहौ ।
वासिष्ठयादवौ कृष्णावात्रेयो बुद्धकल्किनौ ।
शिंशुमारश्चेति शतं कलाः कलशनामकाः ॥ ७ ॥

एताभिः सहितां मूलमूर्त्तिं कुम्भोदके सुधीः ।
पूर्वोक्तविधिनाऽभ्यर्च्य प्रतिमां शिष्यमेव च[1] ॥ ८ ॥

स्नापयेत् पूर्वमर्च्चायां[2] जपोऽनूनः सहस्रतः ।
मूलमन्त्रस्य चाङ्गानां न्यासः स्नानादनन्तरम् ।
प्रतिमायां सन्निधिकृच्छिष्ये माहात्म्यकृद् भवेत् ॥ ९ ॥

कलशः कीर्त्तिमायुश्च[3] प्रज्ञां मेधां श्रियं भगम्[4] ।
योग्यतां पापहानिं च पुण्यवृद्धिं च साधयेत्[5] ॥ १० ॥

उपसर्गेषु जातेषु दैवभूतात्महेतुषु ।
आयुषे वाऽथ शान्त्यै वा श्रिये वा पुण्यवृद्धये ।
योग्यतायै मन्त्रसिद्धयै विष्णोः प्रीत्यर्थमेव वा ॥ ११ ॥

जुहुयात् सहस्रमयुतं लक्षं कोटिमथापि वा ।
पूर्ववत् संस्कृते वह्नौ ध्यात्वा देवं जनार्द्दनम् ॥ १२ ॥

कृत्वा त्रिमेखलं कुण्डं चतुर्विंशाङ्गुलोच्छ्रितम् ।
तावत् खातं चतुष्कोणमुच्छ्रितं द्वादशैव वा ॥ १३ ॥

द्व्यङ्गुलं त्र्यङ्गुलं वाऽपि चतुरङ्गुलमेव वा ।
विस्तारो मेखलानां स्यादन्त्या वा चतुरङ्गुला ।
चतुर्विंशाङ्गुला वा[6] तद्विस्तारो द्वादशैव वा ॥ १४ ॥

अश्वत्थपत्राकृतिः स्यान्मूलतो द्वादशाङ्गुला ।
योनिः खाते च विनता प्रविष्टा द्व्यङ्गुलं तथा ॥ १५ ॥

तदात्मनि हरिं ध्यायेत्[7] कुण्डे देवीं श्रियं तथा ।
विष्णुवीर्यात्मकं वह्निं निक्षिपेत् प्रणवेन ह[8] ॥ १६ ॥

---

१ "–मेव वा" इति क्वचित् ।
२ "पूर्वमर्चायाः" इति क्वचित् ।
३ "कीर्त्तिमायुष्यम्" इति प्र. पाठः ।
४ "श्रियं बलम्" इति प्र. पाठः ।
५ "कारयेत्" इति क्वचित् ।
६ "शाङ्गुलं वा" इति प्र. पाठः ।
७ "हरिं ध्यायन्" इति प्र. पाठः । क्वचित् कोशेषु च । "ध्यात्वा" इति क्वचित् ।
८ "प्रणवेन तु" इति प्र. पाठः ।

कुर्यात् क्रियाः षोडश च व्याहृतीभिः पृथक्पृथक् ।
वह्नेस्तद्गहरेः प्रीतिं कुर्वन् द्रव्यैर्यजेत् ततः ॥ १७ ॥

आज्येन वा पायसेन समिद्भिः क्षीरिणामथ ।
तिलैर्वा तण्डुलैर्वाऽथ[1] मधुरैस्त्रिभिरेव वा ॥ १८ ॥

ब्रह्मपत्र[2]समिद्भिर्वा समिद्भिर्वाऽमृतोद्भवैः ।
अमृताः समिधो ज्ञेयाः सर्वत्र चतुरङ्गुलाः ॥ १९ ॥

एवमेव तु[3] दीक्षायामाज्येनैव[4] हुतिक्रिया ।
पूजा च कार्या विधिवत् पूर्वं सर्वहुतेष्वपि ॥ २० ॥

गुरवे दक्षिणां दद्याल्लक्षेलक्षे शतं सुधीः ।
आत्मनैव कृते होमे शक्तितो गुरुदक्षिणा[5] ॥ २१ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमत्तन्त्रसारसङ्ग्रहे द्वितीयोऽध्याय.

---

[आदितः श्लोकाः–८९]

---

१ "–र्वाऽपि मधु–" इति प्र. पाठः ।

२ "ब्रह्मवृक्षसमिद्भिर्वा" इति पाठान्तरम् । ब्रह्मवृक्ष इति पलाशः । ब्रह्मपत्र इति च तस्यैव नामान्तरमिति वक्तव्यम् ।

३ "-मेव च दीक्षाया-" इति प्र. पाठः ।

४ "–नैवाऽहुतिक्रिया" इति प्र. पाठः । क्वचित् कोशेषु च ।

५ "–दक्षिणाम्" इति प्र. पाठः ।

## [तृतीयोऽध्यायः]

ॐ ॥ प्रतिष्ठां कारयन् विष्णोः कुर्यात् सुप्रतिमां बुधः ।
लोहैर्वा शिलया दार्वा मृदा वाऽपि यथाक्रमम् ॥ १॥

षण्णवत्यङ्गुलां योग आसीनामथवा स्थिताम् ।
शयानां वा मुमुक्षूणां व्याचक्षाणां निजां स्थितिम् ॥ २ ॥

मुखादूर्ध्वं द्व्यङ्गुलोच्चां नवाङ्गुललसन्मुखाम् ।
सुवृत्तत्र्यङ्गुलग्रीवामा स्तनाच्च षडङ्गुलाम् ॥ ३ ॥

[1]पञ्चादशाङ्गुलां नाभेरा सार्द्धदशकाङ्गुलाम् ।
वृषणादा मूलतश्च सार्द्धद्व्यङ्गुलमायताम् ॥ ४ ॥

तावदा गुदतो दीर्घां [2]चैत्यादाऽष्टादशाङ्गुलाम् ।
तथा द्व्यङ्गुलचैत्यां च द्वाविंशज्जङ्घया युताम् ॥ ५ ॥

आरभ्य गुल्फमद्धैव[3] सहार्द्धचतुरङ्गुलाम्[4] ।
षडङ्गुलोच्चप्रपदां सार्द्धत्र्यङ्गुलमेव च ।
प्रपदोच्चयुतामन्ते द्व्यङ्गुलप्रपदोच्छ्रयाम् ॥ ६ ॥

त्र्यङ्गुलद्व्यङ्गुलामर्द्धहीनमद्ध्याङ्गुलामपि ।
[5]त्रिपादाङ्गुलहीनान्यां[6] ततस्तादृशतत्पराम् ॥ ७ ॥

पादोनोच्चाङ्गुष्ठनखां तदर्द्धतदनन्तराम् ।
क्रमशः पादहीनान्यां रक्तपादनखां शुभाम् ॥ ८ ॥

---

१ "पञ्चाशदङ्गुलाम्" इति क्वचिन्मुद्रितः पाठः प्रामादिकः । दीर्घश्छान्दसः ।
२ "चैत्यादष्टादशा–" इति प्र. पाठः । "चैत्यं जानु" इति छलारीये तत्वकाणिकायां च ।
३ "गुल्फमद्धये च" इति प्र. पाठः । "गुल्फं मद्धये च" इति क्वचित् ।
४ "–चतुरङ्गुलम्" इति च प्र. पाठः । ५ "त्रिपदा–" इति प्र. पाठः ।
६ "–हीनान्यस्ततस्ता–" इति प्र. पाठः प्रामादिकः । "पूर्वमङ्गुष्ठपरिमाणत्वेनोक्ताङ्गुलत्रयापेक्षया त्रिपादाङ्गुलहीना अन्याऽङ्गुलिर्यस्याः सा ताम्" इति नारायणीयम् ।

विस्तारः प्रपदस्यापि षडङ्गुल उदाहृतः ।
अङ्गुष्ठपरिणाहस्तु चतुरङ्गुल ईरितः ।
त्र्यङ्गुलस्तु तदन्यः स्याद्[1] व्रीह्यर्द्धोनाः क्रमात् पराः ॥ ९ ॥

दशाङ्गुलं जङ्घमूलं मद्ध्यं तु[2] त्र्यङ्गुलाधिकम् ।
सप्तादशाङ्गुलं[3] तूर्ध्वं जानुरष्टादशाङ्गुलः ॥ १० ॥

ऊर्वन्तोऽपि तथा ज्ञेयो मद्ध्यं द्विद्वादशाङ्गुलम् ।
चतुरङ्गुलाधिकं मूलं गुह्यं सार्द्धचतुष्टयम् ॥ ११ ॥

सार्द्धत्रयं परीणाहाद् वृषणं चतुरङ्गुलम् ।
सप्ताङ्गुलं परीणाहाद् वृत्तं प्रोक्तं समस्तशः ॥ १२ ॥

अष्टत्रिंशाङ्गुलं[4] कट्याः परिणाह उदाहृतः ।
सुवृत्तत्वं तथा श्रोण्योः पीनत्वं च समस्तशः ॥ १३ ॥

विस्तारश्च तथा कट्याः सुप्रतिष्ठितता पदोः ।
कट्याश्चैवाङ्गुलाधिक्यं नाभेरध उदाहृतम्[5] ॥ १४ ॥

नाभिः सार्द्धाङ्गुलश्चैव[6] गम्भीरोऽर्द्धाङ्गुलोऽन्ततः[7] ।
वृत्तः प्रदक्षिणश्चैव द्विचत्वारिंशदङ्गुलम्[8] ।
मद्ध्यं स्तने परीणाहः षडङ्गुलमतोऽधिकः ॥ १५ ॥

एकोनविंशाङ्गुलं तदुरोविस्तारलक्षणम् ।
पादोनमङ्गुलं चैव भुजाभ्यां सह सार्द्धकम् ॥ १६ ॥

अंसयोर्विस्तृतिश्चैव पृथगष्टाङ्गुला मता ।
सत्पाङ्गुलोच्छ्रयः कक्षादुपरि स्कन्धयोर्म्मतः ॥ १७ ॥

अष्टत्रिंशाङ्गुलं चैव[9] हस्तयोर्म्मानमुच्यते ।
अष्टादशाङ्गुलो बाह्वोः परिणाह[10] उदाहृतः ।
क्रमादूनं तदन्ते तु सार्द्धाष्टाङ्गुलमीरितम् ॥ १८ ॥

---

१ "तदन्यस्य व्रीह्य- " इति प्र. पाठः । "तदन्यस्याः" इति रघुनाथतीर्थसम्मतः पाठः । "तदन्यस्या अङ्गुष्ठभिन्नाया द्वितीयाङ्गुलेः" इति हि तद्व्याख्यानम् ।
२ "मद्ध्यं च त्र्यङ्गु-" इति प्र. पाठः ।
३ "सप्तदशाङ्गुलम्" इति क्वचित् । "सप्तादशेति दीर्घश्छान्दसः" इति नारायणीयम् ।
४ "-ङ्गुलः कट्याः" इति प्र. पाठः ।
५ "उदाहृतः" इति प्र. पाठः ।
६ "सार्द्धाङ्गुलं चैव" इति क्वचित् ।
७ "-ङ्गुलोन्नतः" इति प्र. पाठः ।
८ "-शदङ्गुलः" इति क्वचित् ।
९ "-ङ्गुलश्चैव" इति क्वचित् ।
१० "परीणाह-" इति क्वचित् ।

साङ्गुलस्तु तळः[1] सार्द्धनवाङ्गुल उदाहृतः ।
समं तदुभयं ज्ञेयं तथैव तळविस्तृतिः[2] ॥ १९ ॥

अर्द्धाङ्गुलोनता मद्ध्याद् द्वयोः सार्द्धाङ्गुलोनता[3] ।
कनिष्ठिकायास्तस्यास्तु [4]व्रीहिमानाधिकः परः ॥ २० ॥

सार्द्धत्रयपरीणाहौ मद्ध्यज्येष्ठावुदाहृतौ ।
अन्यौ [5]व्रीहितदर्द्धोनावन्या सार्द्धद्वयाङ्गुला ।
पादोनान्तपरीणाहाः सर्वे[6] ज्येष्ठां विना स्मृताः ॥ २१ ॥

वक्षोविस्तारसदृशः परिणाहो गळस्य[7] च ।
ललाटकुक्षिकण्ठास्तु दीर्घरेखात्रयान्विताः ॥ २२ ॥

वृत्तो गळो[8] बाहवश्च स्तनावङ्गुलयस्तथा ।
[9]रक्तास्तळनखाश्चैव नेत्रान्तोऽधर एव च ॥ २३ ॥

उत्तरोष्ठश्च जिह्वा च नखौ पादोनकाङ्गुलौ ।
अर्द्धाङ्गुलौ तथा मद्ध्यावन्येऽष्टांशक्रमोनकाः ॥ २४ ॥

नासिकाया अधस्ताच्च नासिका च रराटिका ।
समा मानेन नासाया उच्चत्वेनैव मापने ।
अर्द्धाङ्गुलाधिकं सर्वमुखस्य तु भविष्यति ॥ २५ ॥

चतुरङ्गुलं तथैवाऽस्यं सार्द्धव्रीह्यधरं स्मृतम् ।
उत्तरं व्रीहिमात्रं तु तदूर्ध्वं चाधरोपमम् ।
सार्द्धाङ्गुलमधः [10]प्रोक्तमधरादध एव च ॥ २६ ॥

आस्यपार्श्वद्वयं प्रोक्तमा कर्ण्णात्तु षडङ्गुलम् ।
सप्ताङ्गुलं नासिकायाः पार्श्वमा कर्ण्णतः स्मृतम् ॥ २७ ॥

---

१ "तलः" इति प्र. पाठः ।
२ "तलविस्तृतिः" इति प्र. पाठः ।
३ "अर्द्धाङ्गुलोन्नता मद्ध्या द्वयोः सार्द्धाङ्गुलोन्नता" इति प्र. पाठः ।
४ "व्रीहि–" इति प्र. पाठः । "व्रीहिमात्राधिकः" इति क्वचित् ।
५ "व्रीहि–" इति प्र. पाठः ।
६ "सर्वा ज्येष्ठाम्" इति प्र. पाठः । "अङ्गुलिशब्दः पुँल्लिङ्गोऽप्यस्तीति सर्व इत्युक्तम्" इति तत्वकणिका ।
७ "गलस्य" इति प्र. पाठः ।
८ "गलो–" इति प्र. पाठः ।
९ "रक्तास्तळा नखाश्चैव" इति क्वचित् ।
१० "–मथ प्रोक्त–" इति प्र. पाठः ।

सपादाङ्गुलमुच्चा च नासिका परिकीर्त्तिता ।
अर्द्धाङ्गुले पुटे तस्या मद्धयं च समुदाहृतम्[१] ॥ २८ ॥

नासिका [२]व्रीहिविस्तारा चक्षुषी अङ्गुलत्रये[३] ।
अङ्गुलं चैव विस्तीर्णे फुल्लेऽर्द्धं च तदन्यथा ॥ २९ ॥

चतुरङ्गुलौ[४] भ्रुवौ चैव तथाऽर्द्धाङ्गुलविस्तृतौ ।
असंहतौ च निबिडौ तथा पक्ष्म सुनीलकम्[५] ॥ ३० ॥

कर्णौ च त्र्यङ्गुलौ सार्द्धद्वयविस्तारसंयुतौ ।
सकुण्डलौ[६] तावदेव विवरं सम्प्रकीर्त्तितम् ।
तथा द्व्यङ्गुलविस्तारं लताभ्यां सह कथ्यते ॥ ३१ ॥

कर्णपूरयुतौ कर्णावुत्पलाभ्यां च संयुतौ ।
[७]नीलाळकसहस्रेण युक्तं तन्मुखपङ्कजम् ॥ ३२ ॥

ललाटं सुविशालं च तथा सार्द्धनवाङ्गुलम् ।
विस्तारो मूर्ध्नि वृत्तं च शिरश्छत्राकृति स्मृतम् ॥ ३३ ॥

दीर्घाश्च कुञ्चिताग्राश्च नीलाः केशा हरेर्म्मताः ।
मुखमानेन चैवोर्ध्वं[८] किरीटं केशवस्य हि[९] ॥ ३४ ॥

कुण्डले मकराकारे वक्षश्चैव सकौस्तुभम् ।
सश्रीवत्सं दक्षिणतः [१०]पीनतुङ्गमुदाहृतम् ।
हारग्रैवेयसहितमुपवीतयुतं तथा ॥ ३५ ॥

बाहवश्च सकेयूरकङ्कणाङ्गदमुद्रिताः[११] ।
समद्धयवन्धं मद्धयं च नितम्बे पीतमम्बरम् ।
काञ्चीगुणश्च पदयोर्नूपुरे चातिसुस्वरे[१२] ॥ ३६ ॥

अङ्गुलीयानि च पदोः[१३] कृतिभिः साधु कारयेत् ।
सोत्तरीयं च चक्राद्यैरायुधैश्च समन्वितम् ॥ ३७ ॥

---

१ "मद्धयं च परिकीर्त्तितम्" इति क्वचित् ।
२ "व्रीहि-" इति प्र. पाठः ।
३ "चक्षुषी चाङ्गुलत्रये" इति क्वचित् । "चाङ्गुलित्रये" इति प्र. पाठः प्रामादिकः ।
४ "चतुरङ्गुले" इति क्वचित् ।
५ "पक्ष्मसु नीलकौ" इति क्वचित् ।
६ "सकुण्डलम्" इति प्र. पाठः ।
७ "नीलालक-" इति प्र. पाठः ।
८ "चैवोच्चम्" इति प्र. पाठः । "चैवोक्तम्" इति क्वचित् ।
९ "केशवस्य तु" इति क्वचित् ।
१० "पीनं तुङ्ग-" इति प्र. पाठः ।
११ "-मुद्रिकाः" इति प्र. पाठः ।
१२ "-सुस्वने" इति प्र. पाठः ।
१३ "-यानि पदयोः" इति क्वचित् । "-यानि च पदे" इति च ।

अनुन्नतैरविरलै[1]र्दन्तैर्युक्तं च सुस्मितम् ।
समदृष्टियुतं कार्यं स्निग्धं[2] चैव मनोहरम् ॥ ३८ ॥

प्रतिमार्थं व्रजन् पञ्चध्वनिभिर्मङ्गलै[3]र्युतः ।
गत्वा शुचि[4] स्थलं तत्र शिलां चैव परीक्षयेत् ॥ ३९ ॥

ध्वनिभेदेन विज्ञाय शिलां गर्भवतीं त्यजेत् ।
मूलमन्त्रं जपन् विष्णुं ध्यायंस्तिष्ठेदुपोषितः ।
वार्क्षी चेद् यज्ञवृक्षस्य[5] सारेणैव तु कारयेत् ॥ ४० ॥

बलिदानं च सङ्क्षेपविधानेनैव कथ्यते ।
अस्य सङ्क्षेपशास्त्रत्वान्न [6]विस्तरविरोधिता ॥ ४१ ॥

दत्त्वोपहारं हरये तद्भूतेभ्यो बलिं हरेत् ।
प्राच्येभ्यो विष्णुभूतेभ्य इत्याद्यखिलदिक्षु च ॥ ४२ ॥

आदाय विष्णुभूतेभ्यो लोकपेभ्यस्तथा हरेः ।
अनुज्ञामुद्धरेद् वृक्षं शिलां वा[7] प्रतिमाकृते ॥ ४३ ॥

प्रतिमां पिण्डिकां पीठं शिलाभिस्तु त्रिजातिभिः ।
[8]स्वरस्थूलत्वभेदेन पुंस्त्र्याद्या जातितः शिलाः ॥ ४४ ॥

पुंशिला प्रतिमार्थं तु स्त्रीशिला पीठक्लृप्तये ।
वेदमङ्गलघोषेण वाद्यैस्तत्प्रतिमां हरेत् ॥ ४५ ॥

प्रागुदक्प्रवणे देशे कुर्याद् देवालयं सुधीः ।
[9]समावृते दक्षिणतः पश्चाद् गिर्यग्र एव वा ॥ ४६ ॥

मध्ये वा ग्रामपुर्योर्विशाले सुशुचौ तथा ।
ऐशानीं दिशमेकां तु विनोदकविवर्जिते ॥ ४७ ॥

जलाशयस्य मध्ये वा शिलावृक्षविवर्जिते ।
श्मशानादिकदेशानां विदूरे सुमनोहरे ॥ ४८ ॥

---

१ "–विरलै–" इति प्र. पाठः ।
२ "कार्यं श्लक्ष्णं चैव" इति प्र. पाठः ।
३ "र्म्मङ्गलै–" इति प्र. पाठः ।
४ "शुचि स्थलं चैव शिलां तत्र परी–" इति प्र. पाठः । "शुभस्थलं तत्र शिलां चैव परी–" इति क्वचित् ।
५ "चेद् देववृक्षस्य" इति क्वचित् ।
६ "विस्तार–" इति क्वचित् ।
७ "शिलां च प्रति–" इति प्र. पाठः ।
८ "स्वरे स्थूलत्व–" इति प्र. पाठः ।
९ "रामावृते" इति क्वचित् पाठः ।

किष्कुद्वादशतोऽनूनं कुर्याद् देवालयस्थलम् ।
द्विगुणं चतुर्गुणं वाऽपि शतकिष्कुप्रमाणकम् ॥ ४९ ॥

कृत्वा भूशोधनं सम्यक् सार्द्धपुम्मानतस्त्वधः ।
केशाङ्गारास्थिवल्मीकलोष्टाश्मादिविवर्जिते ॥ ५० ॥

हरिं तत्रापि सम्पूज्य बलिं दत्त्वा च[1] पूर्ववत् ।
मृद्दारुशैलैर्लोहैर्वा[2] कुर्याद् देवालयं दृढम् ॥ ५१ ॥

[3]दीर्घस्थकळमास्तिस्रस्तिर्यगग्र्यवोदराः ।
अङ्गुल्या मद्ध्यरेखायाः समा लक्षणतः स्मृताः ॥ ५२ ॥

स्वाङ्गुल्या मद्ध्यरेखा तु प्रतिमादिषु लक्षणम् ।
ह्रस्वमद्ध्योच्चभेदेन तत्तन्मानं समस्तशः ।
प्रादेशहस्तपुरुषमानं सामान्यलक्षणम् ॥ ५३ ॥

प्रतिमाद्ध्यर्द्धकं द्वारमूर्ध्वमर्द्धं[4] च विस्तृतिः ।
प्रतिमार्द्धप्रमाणेन पीठस्योच्चत्वमिष्यते ॥ ५४ ॥

उन्नतिः [5]पिण्डिकायास्तच्चतुरङ्गुलमानतः ।
त्र्यङ्गुलं द्व्यङ्गुलं वाऽपि गृहान्तः प्रतिमासमम् ।
[6]ऊर्ध्वं पर्यक् च क्रमश उच्चत्वं मद्ध्यतः स्मृतम् ॥ ५५ ॥

तावदुच्चं बहिश्चैव [7]यद्येकशिखरं भवेत् ।
अर्द्धोच्चमथवाऽपि स्यादधस्तात् प्रतिमोन्नतम् ।
ततो द्विगुणमानं वा सार्द्धप्रतिममेव वा ॥ ५६ ॥

शिखरान्तरे तु प्रतिमामानं तद्गळ[8] उच्यते ।
[9]सत्रिपादं तदर्द्धं वा तदद्ध्यर्द्धमथापि वा ॥ ५७ ॥

वर्त्तुलं[10] पद्मसदृशं हस्तिपृष्ठसमं तथा ।
चतुरश्रं[11] चाष्टकोणं विमानं परिकीर्त्तितम् ॥ ५८ ॥

---

१ "दत्वाऽपि पूर्ववत्" इति प्र. पाठः । "दत्वाऽथ" इति क्वचित् । "तत्रापि" इति च क्वचित् ।
२ "-हैश्च कुर्याद्-" इति क्वचित् ।
३ "दीर्घास्तु कलमा-" इति क्वचित् पाठः ।
४ "-मूर्ध्वं मद्ध्यं च" इति क्वचित् ।
५ "पिण्डिकायास्तु चतु-" इति प्र. पाठः । "पिण्डिकायाश्च चतु-" इति क्वचित् ।
६ "उच्चं पर्यक्" इति प्र. पाठः ।
७ "यद्येकं शिखरम्" इति प्र. पाठः ।
८ "तद्गल-" इति प्र. पाठः ।
९ "तत्त्रिपादम्" इति प्र. पाठः ।
१० "वर्त्तुळम्" इति क्वचित् ।
११ "चतुरस्रम्" इति प्र. पाठः ।

प्रतिमाया दशगुणं[1] विंशद्गुणमथापि वा ।
वर्त्तुलं शिखरं त्वेकं किरीटाकृतिमद् भवेत् ॥ ५९ ॥

सभयाऽपि समेतं वा पृथक्सभमथापि वा ।
द्विसभं त्रिसभं वाऽपि सुगोपुरमथापि वा ॥ ६० ॥

प्राकारवृत्तयुक्तं वा सप्तप्राकारमेव वा ।
सद्म वृत्तं[2] किष्कुमात्रं बहिर्वा चतुरश्रकम्[3] ॥ ६१ ॥

ततः परं किष्कुमात्रं सभाया अन्तरं यदि ।
ततस्तावत् तृतीयायाः सार्द्धमेव ह्युदाहृतम् ॥ ६२ ॥

किष्कुत्रयं च शक्रादेः स्थानं तद्वृत्ततः स्मृतम् ।
ततस्तु मण्डपं[4] कुर्यात् प्रतिष्ठायाः[5] सुलक्षणम् ॥ ६३ ॥

पूजयेद् वास्तुपुरुषस्योपरिस्थांस्तु[6] सर्वदा ।
देवान् ब्रह्मादिकान् वास्तुर्वराहस्य हरेः सुतः ।
पतितो दैवतैर्भूमौ[7] चतुरश्राकृतिः[8] स्थितः ॥ ६४ ॥

कृत्वाऽष्टकाष्टकोष्ठानि[9] मद्धये ब्रह्मा चतुष्टये ।
पूज्यो द्वयेद्वये शक्रो यमो वरुण एव च ।
सोमश्च पूज्याः[10] कोणेषु वह्न्याद्याः कोणदेवताः ॥ ६५ ॥

पुनस्त्रयेत्रये[11] कामं धातारं सविधातृकम् ।
स्कन्दं च पूजयेत् कोणे सूर्यं चैव विनायकम् ।
कालं कुबेरं च बहिः प्रत्येकं दिक्षु पूजयेत् ॥ ६६ ॥

हारिं[12] हरिं गभीरं च गाहनं गहनं शुभम्[13] ।
[14]त्रातमङ्गारकं चैव पूर्वस्यां दिशि पूजयेत् ॥ ६७ ॥

---

१ "प्रतिमाद्वादशगुणम्" इति क्वचित् ।
२ "समावृत्तम्" इति च प्र. पाठः ।
३ "चतुरस्रकम्" इति प्र. पाठः ।
४ "मण्टपम्" इति प्र. पाठः ।
५ "प्रतिमायाः" इति क्वचित् ।
६ "–परिष्ठांस्तु" इति प्र. पाठः । "–परिस्थांश्च" इति क्वचित् ।
७ "दैवतैः सर्वैश्चतु–" इति प्र. पाठः ।
८ "चतुरस्राकृतिः" इति प्र. पाठः ।
९ "–काष्ठकोष्ठानि" इति क्वचिन्मुद्रितः पाठः प्रामादिकः ।
१० "पूज्यः कोणेषु" इति प्र. पाठः ।
११ "पुनस्त्रयस्त्रये" इति प्र. पाठः प्रामादिकः ।
१२ "हारं हरिम्" इति प्र. पाठः ।
१३ "गाहनं गेहनं गुहम्" इति प्र. पाठः । "गाहनं गहनं गुहम्" इति क्वचित् ।
१४ "भातमङ्गा–" इति प्र. पाठः ।

दारणं[1] विदरिं द्रुतं प्रद्योतं द्योतनं दरिम् ।
मृत्युं शनैश्चरं चैव दक्षिणस्यां प्रपूजयेत् ॥ ६८ ॥

पुष्करं क्षरणं क्षारिं विक्षरं क्षोभणं क्षणम्[2] ।
चार्वङ्गं भार्गवं चैव पश्चिमस्यां[3] प्रपूजयेत् ॥ ६९ ॥

चारं विचारं प्रचरं सञ्चरं चारणं चरम्[4] ।
बृहस्पतिं बुधं चैवाप्युत्तरस्यां प्रपूजयेत् ॥ ७० ॥

एवमेव विमानस्य कृतेः प्रागपि[5] पूजयेत् ।
सप्तपर्ण्णमयं साधु [6]कारयेन्मण्डपं[7] ततः ॥ ७१

सप्तहस्तं द्विषड्ढस्तमथवा द्विगुणं ततः ।
चतुर्ग्गुणं वा सम्यक् तु[8] चतुरश्रं सहाजिरम् ॥ ७२ ॥

अन्यच्च मण्डपं[9] दीर्घं पञ्चहस्तं[10] तु कारयेत् ।
त्रिचतुष्कोष्ठकं तत्र मद्ध्ये प्रागायतं शुभम् ॥ ७३ ॥

कारयेन्मण्डलं साधु हस्तमात्रसुविस्तृतम्[11] ।
तत्र द्वादश पात्राणि स्थापयेत्[12] पालिकादिकम् ॥ ७४ ॥

पालिकास्तु चतुर्विंशत्यङ्गुलोच्छ्रयसंयुताः ।
अष्टादशाङ्गुलाश्चैव तथा पञ्चमुखा इति ।
द्वादशाङ्गुलकाश्चैव शरावाः पश्चिमानुगाः ॥ ७५ ॥

---

१ "दारुणम्" इति प्र. पाठः ।

२ "क्षारं विक्षणं क्षोभणं क्षरम्" इति प्र. पाठः । "क्षारिं विक्षणं क्षोभणं क्षरम्" इति क्वचित् । "क्षारिं विक्षणं क्षोभणं क्षरिम्" इति च ।

३ "पश्चिमायाम्" इति प्र. पाठः । वस्तुतस्तु असर्वादित्वात् पश्चिमायामित्येव भाव्यम् । अथापि पञ्चादश-सप्तादशेत्यादिवत् इदमपि छान्दसं रूपान्तरमिति भाति ।

४ "सञ्चारं चरणं चरम्" इति प्र. पाठः । "सञ्चारं चारणं चरम्" इति कोशान्तरेषु ।

५ "प्रागथ पूजयेत्" इति क्वचित् ।

६ "साधु मण्डपं कारयेत् ततः" इति क्वचित् ।

७ "मण्टपम्" इति प्र. पाठः ।

८ "सम्यक् च चतुरस्रम्" इति प्र. पाठः ।

९ "अन्यं च मण्टपम्" इति प्र. पाठः । "अन्यत्तु मण्डपम्" इति क्वचित् ।

१० "चतुर्हस्तम्" इति क्वचित् ।

११ "–मात्रं तु विस्तृतम्" इति प्र. पाठः । "–मात्रं सुविस्तृतम्" इति क्वचित् । "–मात्रं सविस्तरम्" इति च क्वचित् ।

१२ "कारयेत्" इति क्वचित् ।

तत्र विष्णुं चतुर्म्मूर्त्तिं पूजयेद्भक्तितस्त्रिशः।
सप्तधान्यानि तेष्वेव[1] पूरयेदङ्कुरार्थतः ॥ ७६ ॥

तत्र नित्यं बलिं दद्याद् विष्णवे दशरात्रकम्।
ब्रह्मशङ्करगीर्वाणपितृगन्धर्वयक्षकैः।
भूतैश्च पायसेनैव तथा पद्माक्षतेन च[2] ॥ ७७ ॥

अन्नापूपेन पुष्पान्नैरन्नलाजाक्षतैरपि।
सक्तुभिश्च क्रमेणैव देवान्तं[3] पायसेन वा ॥ ७८ ॥

तत्रैव[4] प्रतिमायाश्च कारयेदधिवासनम्।
पञ्चगव्ये [5]सप्तरात्रं क्षिप्त्वा [6]पुरुषसूक्ततः ॥ ७९ ॥

वेदांश्च चतुरः सम्यक् पारयेयुर्द्विजोत्तमाः[7]।
प्राच्यादिद्वारगौ द्वौद्वावेकैकं तु दशावराः।
यथालब्धं यथावित्तमथवा विष्णुतत्पराः ॥ ८० ॥

त्रयोदशात्र कुण्डानि परितः कारयेद् बुधः।
उक्तलक्षणयुक्तानि प्रधानं त्वग्निकोणके।
साक्षात् तु [8]कोणकाद्धस्तमात्रनन्तरतः सुधीः ॥ ८१ ॥

आज्याहुतिं तेषु कुर्यात्[9] प्रत्येकं लक्षसङ्ख्यकम्[10]।
प्रत्येकमयुतं वाऽपि प्रधाने लक्षसङ्ख्यकम्।
अर्द्धं तदर्द्धमथवा मूलमन्त्रेण मन्त्रवित् ॥ ८२ ॥

पञ्चविंशतितत्वार्थं प्रधाने जुहुयात् पुरः।
प्रत्येकं तु सहस्रं वा प्रत्येकं शतमेव वा।
शतं पुरुषसूक्तेन गायत्र्या च सहस्रकम् ॥ ८३ ॥

कृत्वा जलाधिवासं च पूर्वं वा पञ्चगव्यतः।
चक्राब्जं भद्रकं वाऽपि मण्डपे मण्डलं शुभम् ॥ ८४ ॥

---

१ "तत्रैव" इति क्वचित्। "तेष्वेव पूजये-" इति क्वचित् प्र. पाठः।
२ "-क्षतेन वा" इति प्र. पाठः।
३ "वेदान्तम्" इति प्र. पाठः प्रामादिकः।
४ "तदैव" इति प्र. पाठः।
५ "पञ्चगव्ये पञ्चरात्रम्" इति क्वचित्।
६ "पौरुषसूक्ततः" इति क्वचित्।
७ "-जोत्तमैः" इति क्वचित्।
८ "कोणगाद्धस्त-" इति प्र. पाठः। कोशान्तरेषु च तथा।
९ "-तिं तत्र कुर्यात्" इति क्वचित्।
१० "लक्षमात्रकम्" इति क्वचित्।

पद्मं वृत्तत्रयं चक्रं राशयो वीथिका तथा[१] ।
शोभोपशोभिकाश्चैव[२] चक्राब्जस्य तु लक्षणम् ।
चतुरश्रं[३] विना चक्रं विशेषो भद्रके स्मृतः ॥ ८५ ॥

सहस्रमर्द्धं पादं वा कलशांस्तत्र पूरयेत् ।
शतं तदर्द्धं पादं वा वित्ताभावे निगद्यते ॥ ८६ ॥

क्वाथेन क्षीरवृक्षाणां[४] तथा पञ्चामृतैरपि ।
पञ्चगव्येन[५] शुद्धेन जलेन च पृथक्पृथक् ।
पूरयेत् कलशान् मद्धयं शुद्धोदेनैव[६] पूरयेत् ॥ ८७ ॥

ब्राह्मस्यैव चतुर्दिक्षु गन्धोदानां चतुष्टयम् ।
[७]चतुर्द्दळश्वेतपद्मचतुष्के मण्डलस्थिते ।
पूर्वादिक्रमयोगेन रस-क्वाथ-शुभोदकान् ॥ ८८ ॥

गन्धांश्च स्थापयेत्[८] पञ्चगव्यं शुद्धान्तरे न्यसेत् ।
पृथक् चतुर्द्दलं पद्मं रक्तं कृत्वाऽल्पकं सुधीः ॥ ८९ ॥

पञ्चाशत्त्वे तु गन्धोदं [९]सर्वमद्धये निधापयेत् ।
ब्राह्मस्य पुरतस्त्वेकं सार्वं[१०] संस्थापयेद् बृहत्[११] ।
अष्टदिक्ष्वष्टपद्मेषु पञ्चकम्पञ्चकं न्यसेत् ॥ ९० ॥

अनेन क्रमयोगेन कलशा अखिला अपि ।
तत्तद्द्रव्यमयास्तत्रतत्र स्थाप्यास्तु वाह्यतः ।
तदैवाङ्कुरपात्राणि परितस्तत्र विन्यसेत् ॥ ९१ ॥

---

१ "वीथिका लताः" इति प्र. पाठः । "वीथिकास्तथा" इति क्वचित् ।

२ "-शोभिकाश्चापि" इति प्र. प्राठः । "-शोभिकाश्चेति" इति क्वचित् । "-शोभिका चैव" इति च क्वचित् ।

३ "चतुरस्रम्" इति प्र. पाठः ।

४ "क्षीरिवृक्षाणाम्" इति क्वचित् । "क्षीरवृक्षाणामश्वत्थचूतवटप्लक्षौदुम्बरवृक्षाणाम्" इति नारायणीयम् ।

५ पयोदधिघृतमधुशर्कराः पञ्चामृतानि । पयोदधिघृतगोमूत्रगोमयानि पञ्चगव्यानि ।

६ "शुद्धोदैरेव" इति क्वचित् ।

७ "चतुर्द्दले सिते पद्मचतुष्के मण्डले स्थिते" इति प्र. पाठः । "चतुर्द्दळे सिते पद्मचतुष्के मण्डलस्थिते" इति क्वचित् ।

८ "स्थापयन्" इति क्वचित् ।

९ "सार्वमद्धये" इति क्वचित् ।

१० "शार्वम्" इति प्र. पाठः । "सर्वाभिमन्यमानं सार्वम्" इति तत्वकणिका ।

११ "-पयेद् बुधः" इति क्वचित् ।

कुशोदकं च कार्प्पूरं कौङ्कुमं चान्दनं तथा ।
[१]तुहिनोदं हैरिबेरमौशीरं कौष्ठसार्वके ॥ ९२ ॥

नदीसङ्गमजं[२] चैव ताटाकं कौप्यमेव च ।
निर्ज्झरोदमिति प्रोक्ता विशेषकलशा इमे ।
शुद्धोदद्वयमप्येतन्महातीर्थसमुद्भवम् ॥ ९३ ॥

चतुर्विंशश्चु[३] मूर्त्तीनां वर्ण्णमूर्त्तीस्तथाऽपराः ।
आवाहयेच्छतत्वे तु क्रमव्युत्क्रमतस्तु ताः ॥ ९४ ॥

वर्ण्णमूर्त्तीः पुनश्चात्र द्विचतुर्वारमेव च[४] ।
सहस्रकलशादित्वे जपेन्मन्त्रांश्च शक्तितः ॥ ९५ ॥

ततस्तु[५] पञ्चघोषैश्च वेदघोषैस्तथाऽऽदरात् ।
आनीय प्रतिमां स्नानं कारयेत् प्रणवेन तु ॥ ९६ ॥

मन्त्रैः पुरुषसूक्तान्तैर्विश्वतश्चक्षुषा तथा ।
पुनश्चाष्टाक्षरेणैव प्रणवेनैव भक्तितः ॥ ९७ ॥

स्नापयित्वा गन्धजलैर्गन्धपुष्पादिभिः[६] पुनः ।
अलङ्कृत्य स्थापयेत्तु प्रतिमां प्रणवेन तु ॥ ९८ ॥

जपेदष्टाक्षरं मन्त्रं तत्तन्मूर्त्तिमनुं तथा ।
अष्टोत्तरशतं मन्त्री ध्यायेत् तेजोमयीं पुनः ॥ ९९ ॥

प्रतिमां प्रतिमान्तःस्थां[७] तन्मद्ध्ये परमं वपुः ।
चिदानन्दरसं सर्वगुणसम्पूर्ण्णमुत्तमम्[८] ॥ १०० ॥

---

१ "तुहिनोदं हरिद्रोदमौशीरं कोष्टसार्षपम्" इति प्र. पाठः । "कोष्ठसार्वकम्" इति क्वचित् । "कोष्ठसारके" इत्यपि क्वचित् । "तुहिनोदं हैरवेरम्" इत्यपि पाठान्तरम् । ह्रीवेरस्यैव हीरवेरमिति नामान्तरम् । "उशीरं कुङ्कुमं मांसी कुष्ठं मलयजोऽगुरुः । हीरवेरं मुरं चेति गन्धाष्टकमुदीरितम्" इति योगदीपिका । "सार्वकशब्देन कृष्णागरुरुच्यते" इति तत्वकणिका । सर्वैरपि गन्धद्रव्यैर्मिश्रमिति वा स्यात् ।

२ "नदीसङ्गमगम्" इति क्वचित् ।

३ "चतुर्विंशति मूर्त्तीनाम्" इति प्र. पाठः । "चतुर्विंशच्छब्दः सङ्ख्यावाची । छान्दस इकारलोपः । द्वितीयान्तश्च" इति तत्वकणिका ।

४ "-मेव वा" इति प्र. पाठः ।

५ "ततश्च पञ्च-" इति क्वचित् ।

६ "-पुष्पाक्षतैः पुनः" इति क्वचित् ।

७ "प्रतिमां तस्याम्" इति प्र. पाठः प्रामादिकः ।

८ "-गुणपूर्णमनुत्तमम्" इति क्वचित् ।

पञ्चविंशतितत्वानां देवतास्तदनन्तरम् ।
स्थापयेत् प्रतिमामद्ध्ये परितः केशवस्य तु[१] ॥ १०१ ॥

तत्राऽऽत्वाहार्षसूक्तं च घर्म्मसूक्तं च वैष्णवम् ।
सूक्तं च विश्वकर्म्मीयं पौरुषं सूक्तमेव च[२] ॥ १०२ ॥

जप्त्वा चैव निजं मन्त्रं पुनरष्टाक्षरं[३] सुधीः ।
प्रणवं च जपेद् विष्णुं [४]द्ध्यायन्नुत्तमरूपिणम् ॥ १०३ ॥

ततस्तु कलशैर्वाह्यक्रमेणैव जनार्द्दनम ।
स्नापयेदुक्तमन्त्रैस्तु मद्ध्यमं प्रणवेन तु ॥ १०४ ॥

अष्टार्ण्णेन निजेनापि तथा पुरुषसूक्ततः ।
आवाहनं च स्नपनं पञ्चगव्यस्य[५] मद्ध्यवत् ॥ १०५ ॥

पूर्वाद्युत्तरपर्यन्तः[६] कलशक्रम उच्यते ।
जप्त्वा पुनश्च तन्मन्त्रान् पूजयेच्च विधानतः ॥ १०६ ॥

द्वारलोकपतिभ्यश्च बलिं दत्वा यथाक्रमम् ।
[७]वस्त्ररत्नहिरण्याद्यैरलङ्कृत्य विभूतितः[८] ।
गुरवे दक्षिणां दद्यात् कोटिं लक्षं सहस्रकम् ॥ १०७ ॥

शतमर्द्धं तदर्द्धं वा निस्स्वो भक्त्या क्षमापयेत् ।
तदर्द्धमृत्विजां चैव तदर्द्धं पारणाकृतम् ॥ १०८ ॥

आ श्वभ्य आ श्वपाकेभ्यो दद्यादन्नं समस्तशः ।
[९]पुरस्तात् परतश्चैव सप्तरात्रं निरन्तरम् ॥ १०९ ॥

---

१ "केशवस्य ताः" इति क्वचित् ।

२ आ त्वाहार्षसूक्तं षडर्चमानुष्टुभं ध्रुवदृष्टं राजदैवत्यम्(ऋ.१०.१७३.१-६)। घर्म्मसूक्तं वैरूपसध्रिदृष्टं तापसघर्म्मदृष्टं वा विश्वदेवदैवत्यं वर्गद्वयात्मकं दशर्चं त्रैष्टुभं जागतचतुर्थं च (ऋ. १०. ११४. १-१०)। विष्णोर्नुकमित्यादि विष्णुसूक्तं च दीर्घतमोदृष्टं षळर्चमानुष्टुभम् (ऋ. १. १५४. १-६)। विश्वतश्चक्षुरिति विश्वकर्म्मदैवत्यं भौवनविश्वकर्म्मदृष्टं सप्तर्चं सूक्तम् (ऋ. १०.८१. १-७)। तथा वर्गत्रयात्मकं पुरुषसूक्तं (१०. ९०. १-१६) चेति पञ्चसूक्तानि ।

३ "पुनरष्टोत्तरम्" इति क्वचित् ।

४ "द्ध्यायेदुत्तम-" इति क्वचित् ।

५ "पञ्चगव्येन" इति प्र. पाठः । "पाञ्चगव्येन" इति क्वचित् ।

६ "-पर्यन्तम्" इति क्वचित् ।

७ "वस्त्रै रत्न-" इति क्वचित् ।

८ "विधानतः" इति क्वचित् ।

९ "पुनस्तत्परतश्चैव" इति क्वचित् ।

सुवर्णवस्त्ररत्नाद्यैरागताभ्यागतानपि ।
पूजयेच्छक्तितो भक्त्या प्रीयतां भगवानिति ॥ ११० ॥

गीतनृत्तैश्च वाद्यैश्च पुराणैरितिहासकैः ।
[1]स्तोत्रैर्म्मङ्गलघोषैश्च वैदिकैर्द्दिनसप्तकम् ॥ १११ ॥

नयेत् ततो महाराजविभूत्याऽवभृथं सुधीः ।
कारयेद् देवदेवस्य स्वाद्ध्यायैर्ग्गीतनर्त्तनैः[2] ॥ ११२ ॥

महानदीसङ्गमे तु तीर्त्थे वाऽति[3]प्रशस्तके ।
स्नापयेत् पूर्व्ववन्मन्त्रैः [4]पुंसूक्तान्तैः स्मरन् हरिम् ॥ ११३ ॥

ततः पूर्व्ववदागत्य प्रवेश्य पुरुषोत्तमम् ।
पूजयित्वा विधानेन दत्त्वा दानानि शक्तितः ।
गुरुं च भक्त्या सम्पूज्य स्वीकुर्य्यादाशिषस्ततः ॥ ११४ ॥

शतप्रस्थादनूनं तु नैवेद्यं पायसोत्तरम् ।
दिनेष्वेतेषु दातव्यं सघृतं ससितादिकम्[5] ।
पश्चादपि यथशक्ति पूजा कार्य्या हरेः सदा ॥ ११५ ॥

जीर्ण्णालयोद्धृतौ चैव तत्वमन्त्रान् स्वकं तथा ।
प्रतिलोमेन[6] जप्त्वैव मूर्त्तौ सङ्कोचयेद्धरिम् ॥ ११६ ॥

उक्तेनैव विधानेन तदर्द्धविभवैः सुधीः ।
पादमात्रैरपि हरिं स्नापयित्वा यथोदितम्[6] ॥ ११७ ॥

एतेनैव विधानेन कृत्वा देवालयं पुनः ।
[7]स्नापयेत् पुण्डरीकाक्षं द्विगुणेन प्रवाहनात्[8] ।
विभवेनानुलोमेन[9] जपेन्मन्त्रान्[10] पुनस्तथा ॥ ११८ ॥

आराधयेज्जगन्नाथं ध्यायन् भक्त्या यथोदितम् ।
यात्राऽपि पूर्व्ववत् तत्राप्युत्सवेषु च सर्व्वशः ॥ ११९ ॥

---

१ "सूक्तैर्म्मङ्गल–" इति प्र. पाठः ।
२ –"गीतनृत्तकैः" इति प्र. पाठः ।
३ "तीर्त्थे चाति–" इति प्र. पाठः ।
४ "पूर्व्वमन्त्रैश्च पुं–" इति क्वचित् ।
५ "ससितं सघृतादिकम्" इति क्वचित् ।
६ "प्रातिलोम्येन" इति प्र. पाठः ।
६ "यथार्हतः" इति क्वचित् ।
७ "स्थापयेत्" इति प्र. पाठः ।
८ "प्रवाहणात्" इति प्र. पाठः ।
९ "–नाऽनुलोम्येन" इति क्वचिन् प्र. पाठः ।
१० "जपन्मन्त्रान्" इति प्र. पाठः ।

कलशोक्तविधानेन पूजा बलिहुतिस्तथा ।
उत्सवेषु सदा कार्या कलशश्चोत्सवादनु ।
यात्रा स्नानं च कर्त्तव्यं सम्यगुक्तविधानतः ॥ १२० ॥

चोरचण्डाल[1]पतितश्वोदक्यादिप्रवेशने ।
शवाद्युपहतौ चैव पूजाविच्छेदने तथा ।
[2]स्नपनोक्तेन मार्ग्गेण प्रायश्चित्तविधिः स्मृतः[3] ॥ १२१ ॥

सर्वत्र विष्णुगायत्र्या होमः स्यादयुतावरः ।
नाराव्यायमिधानानु विद्महे धीमहे तथा ।
प्रचोदयात् तृतीयाधस्तन्नो गायत्रिनामिका[4] ॥ १२२ ॥

दुर्ग्गाशिवस्कन्दसूर्यविनायकमुखानपि ।
स्थापयेदुक्तमार्ग्गेण तत्तन्मन्त्रैः स्मरन् हरिम् ॥ १२३ ॥

[5]गोळकाद्वितयं विष्णोस्त्रितयं वा प्रकीर्त्तितम ।
अन्यदेवप्रतिष्ठासु तदन्तश्चिन्तयेद्धरिम ॥ १२४ ॥

विष्णुस्मृतिविहीना तु पूजा स्यादासुरी सदा ।
[6]गृह्णन्ति देवता नैतां ततः स्याद् देशविप्लवः ।
व्याधिचोरादिभिस्तस्मादन्तर्द्धयेयो हरिः सदा ॥ १२५ ॥

विष्णुभक्तिविहीनस्य गतिः स्यान्न शुभा क्वचित् ।
भक्तस्याप्यन्यदेवेषु तस्माद् ध्येयो हरिः सदा ॥ १२६ ॥

संस्मृतो भगवान् विष्णुः सर्वमङ्गलमङ्गलः ।
समस्ताभीष्टदायी स्यात् तेन ध्येयोऽखिलज्जनैः ॥ १२७ ॥

पुरुषोऽव्यक्तं च महानहङ्कारो मनस्तथा ।
दशेन्द्रियाणि शब्दाद्या भूतेताः पञ्चविंशतिः ॥ १२८ ॥

तत्वाख्याः[7] कालमाये च नियतिर्म्मतिरेव च ।
विद्या कला प्रवृत्तिश्च द्वात्रिंशत्तत्वसङ्ग्रहः ॥ १२९ ॥

---

१ "–चाण्डाल–" इति प्र. प्राठः । २ "स्नापनोक्तेन" इति प्र. पाठः ।
३ "–त्तकृतिः स्मृता" इति प्र. पाठः ।
४ तथाच मन्त्रः "नारायणाय विद्महे । वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्" इति ।
५ "गोलकाद्वितयं विष्णो त्रितयम्" इति प्र. पाठः । ६ "गृह्णीयुर्देवता–" इति क्वचित् ।
७ "तत्वाख्या काल–" इति प्र. पाठः ।

स्फूर्त्तिः संवित् प्रतिष्ठा च शक्तिरित्यक्षराणि च[1]।
महालक्ष्मीस्वरूपाणि ह्येकादश विदो विदुः।
विष्णोरपि हि रूपाणि[2] तन्नाम्नैकादशैव तु ॥ १३० ॥

प्रधानोपमवर्णानि द्विभुजान्यप्यशेषतः।
कृताञ्जलिपुटान्येव प्रधानं तं हरिं प्रति।
सर्वाण्येतानि तत्वानि ब्रह्मा तु पुरुषः स्मृतः ॥ १३१ ॥

महांश्चाव्यक्तनाम्नी तु[3] ब्रह्माणी सम्प्रकीर्त्तिता।
एवं वायुरपि ज्ञेयो भारती चापि तत्त्रयम्[4] ॥ १३२ ॥

रुद्रोऽहङ्कार उद्दिष्टः स्कन्देन्द्रौ मन उच्यते।
अहङ्कारः शेषवीन्द्रावपि विद्वद्भिरीरितौ ॥ १३३ ॥

दिग्वायुसूनुसूर्याश्च वरुणश्चाश्विनावपि।
वह्निदक्षाविन्द्रसूनुर्म्मित्रश्चैव मनुस्तथा ॥ १३४ ॥

इन्द्रियाख्याः शब्दनामा बृहस्पतिरुदाहृतः।
अन्ये तु[5] सूनवो वायो रुद्रस्यापि प्रकीर्त्तिताः ॥ १३५ ॥

एतेषु भगवान् विष्णुः प्रधानतनुरेव तु।
ध्येयः परात्मनोर्म्मध्ये तत्वनाम[6] तदर्थयोः।
जपे न्यासे नमोऽन्तस्तु[7] स्वाहान्तो होमकर्म्मणि ॥ १३६ ॥

त्रिचतुःषड्दशावृत्तिरेतेषां तु हुतादिके।
न्यासोऽङ्गुलीषूरुबाहुमध्येषु व्युत्क्रमे स्मृतः।
क्रमे विपर्ययेणात्र शक्त्यादित्वं प्रकीर्त्तितम्[8] ॥ १३७ ॥

---

१ "-राणि तु" इति प्र. पाठः।

२ "-रपि स्वरूपाणि" इति प्र. पाठः। '-'रपि तु रूपाणि" इति क्वचित्।

३ "-नाम्नी च" इति क्वचित्।

४ "भाति चैव तु तत्त्रयम्" इति प्र. पाठः। "भारती चैव तत्त्रयम्" इति क्वचित्।

५ "अन्येऽपि" इति क्वचित्। ६ "तत्वनामा" इति प्र. पाठः। ७ "नमोऽन्तश्च" इति प्र. पाठः।

८ अत्र नारायणीयम्-"वामपादकनिष्ठिकामारभ्य तदङ्गुष्ठपर्यन्तं पृथिव्यादिपञ्चकं न्यसेत्। अनन्तरं दक्षपादकनिष्ठिकामारभ्य तदङ्गुष्ठपर्यन्तं गन्धादिपञ्चकं न्यसेत्। अनन्तरं वामहस्तकनिष्ठिकामारभ्य तदङ्गुष्ठपर्यन्तमुपस्थादिपञ्चकं न्यसेत्। अनन्तरं दक्षहस्तकनिष्ठिकामारभ्य तदङ्गुष्ठपर्यन्तं घ्राणादिपञ्चकं न्यसेत्। अनन्तरं वामोरौ मनो न्यसेत्। अथ दक्षोरावहङ्कारं न्यसेत्। अथ वामबाहौ महान्तं दक्षबाहावव्यक्तं न्यसेत्। अनन्तरं हृदय एव पुरुषादिद्वादशकं न्यसेत्" इति।

ऋषिच्छन्दोदेवताङ्गध्यानानुक्तौ[1] प्रधानवत् ।
ज्ञेयं मन्त्राः[2] समस्तास्ते पृथङ् मोक्षादिदायकाः[3] ॥ १३८ ॥

[4]तन्त्रमार्ग्गास्तु हरिणा ह्यसङ्ख्याः कीर्त्तिता अपि ।
तेष्वयं सुगमो मार्ग्गः सुफलश्चानुतिष्ठताम् ॥ १३९ ॥

यावतो ह्यननुष्ठाने कर्म्मपूर्त्तिर्न्न विद्यते ।
तावत् समस्तं कथितमस्मिंस्तन्त्रे यथाविधि ॥ १४० ॥

प्रीयतेऽनेन मार्ग्गेण पूजितो मुक्तिदो भवेत् ।
कामदश्च स्वभक्तानां भगवान् पुरुषोत्तमः ॥ १४१ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमत्तन्त्रसारसङ्ग्रहे तृतीयोऽध्यायः

---

[आदितः श्लोकाः-२३०]

---

तथाच न्यासः—"पराय पृथिव्यात्मने नमः । पराय अब्रात्मने नमः । पराय तेजआत्मने नमः । पराय वाय्वात्मने नमः । पराय आकाशात्मने नमः (वामपादाङ्गुलिषु पञ्चसु) । पराय गन्धात्मने नमः । पराय रसात्मने नमः । पराय रूपात्मने नमः । पराय स्पर्शात्मने नमः । पराय शब्दात्मने नमः (दक्षपादाङ्गुलिषु पञ्चसु) । पराय उपस्थात्मने नमः । पराय पाय्वात्मने नमः । पराय पादात्मने नमः । पराय पाण्यात्मने नमः । पराय वागात्मने नमः (वामहस्ताङ्गुलिषु पञ्चसु) । पराय घ्राणात्मने नमः । पराय जिह्वात्मने नमः । पराय चक्षुरात्मने नमः । पराय त्वगात्मने नमः । पराय श्रोत्रात्मने नमः (दक्षहस्ताङ्गुलिषु पञ्चसु) । पराय मन आत्मने नमः (वामोरौ) । पराय अहङ्कारात्मने नमः (दक्षोरौ) । पराय महदात्मने नमः (वामबाहौ) । पराय अव्यक्तात्मने नमः (दक्षबाहौ) । पराय पुरुषात्मने नमः । पराय कालात्मने नमः । पराय मायात्मने नमः । पराय नियत्यात्मने नमः । पराय मत्यात्मने नमः । पराय विद्यात्मने नमः । पराय कलात्मने नमः । पराय प्रवृत्त्यात्मने नमः । पराय स्फूर्त्यात्मने नमः । पराय संविदात्मने नमः । पराय प्रतिष्ठात्मने नमः । पराय शक्त्यात्मने नमः (इति द्वादश हृदये) । अयं संहारक्रमः । अस्यैव व्युत्क्रमेण न्यासे सृष्टिन्यासो भवति ।

१ –"ध्यानानुक्ते" इति क्वचित् ।　　२ "ज्ञेया मन्त्राः" इति प्र. पाठः ।
३ "मोक्षप्रदायकाः" इति क्वचित् ।　　४ "मन्त्रमार्ग्गास्तु" इति क्वचित् ।

## [चतुर्थोऽध्यायः]

ॐ ॥ अथ विष्णूदिते तन्त्रसारे मन्त्रगणो हि यः ।
उदितः सङ्ग्रहेणासावुच्यतेऽखिलसाधकः ॥ १ ॥

[भूवराहमन्त्रः–१]

याष्टमस्तूयुतोऽन्तेन समेतश्चैव भूभृतः ।
बीजं नमश्च भगवानुद्देश्यो[1] रूपसंयुतः ॥ २ ॥

स एव तादृशो लोकत्रयपालो भुवःपतेः ।
भावं मे देहि दान्ते तु दापय स्वाहया युतः[2] ॥ ३ ॥

[वराहसप्ताक्षरः–वराहचतुर्दशाक्षरश्च २–३]

मनुस्तस्यापरो[3] नामवीजोद्देशनमोयुतः ।
नमः सोद्देशभगवान् महाशब्दयुनश्च सः ।
तादृशः स्वाहया युक्तो वराहस्यापरो मनुः[4] ॥ ४ ॥

श्यामः सुदर्शनवराभयसद्धरेतो
भूम्या युतोऽखिलनिजोक्तपरिग्रहैश्च ।
ध्येयो निजैश्च तनुभिः सकलैरुपेतः
कोलो हरिः सकलवाञ्छितसिद्धयेऽजः ॥ ५ ॥

वैष्णवानां मुनिर्ब्रह्मा मन्त्राणां[5] वर्णभेदतः ।
ज्ञेयं छन्दो [6]देवतैकस्तत्तद्रूपो हरिः परः ॥ ६ ॥

---

१ "भगवान् सोद्देशो रूप–" इति प्र. पाठः ।

२ तथाच मन्त्रः–"हूँ नमो भगवते वराहरूपाय भूर्भुवःस्वःपतये भूपतित्वं मे देहि ददपाय स्वाहा" इति ।

३ "–परस्तारवीजो–" इति प्र. पाठः ।

४ तथाच मन्त्रौ–"हूँ वराहाय नमः" इति सप्ताक्षरः, "नमो भगवते महावराहाय स्वाहा" इति च चतुर्दशाक्षरः ।

५ "मनूनां वर्ण–" इति क्वचित् ।

६ "देवतैकं तत्त–" इति क्वचित् ।

प्रणवेन स्वनाम्ना च भूधरेण परात्मना ।
सर्वज्ञसर्वशक्तिभ्यां षडङ्गानि विदो विदुः[१] ॥ ७ ॥

ज्ञानैश्वर्यप्रभानन्दतेजःशक्तिभिरेव वा ।
पूर्णात्ममद्ध्यगैः सर्ववैष्णवाङ्गान्यथो विदुः[२] ॥ ८ ॥

[श्रीकरमन्त्रः–४]

तिष्ठोदादिः स्वजायायाः कारणं स्वाहया युतः ।
श्रीकरोऽष्टार्णको[३] मन्त्रो गरुडारूढसंस्मृतिः ॥ ९ ॥

द्विर्भीषय त्रासय च प्रमर्दय तथैव च ।
प्रध्वंसयाथो रक्षेति पञ्चाङ्गश्चेदुदाहृतः[४] ॥ १० ॥

[आनुष्टभनृसिंहमन्त्रः–५]

क्रूरं वीरं बृहद्विष्णुं दीप्यन्तं विश्वतोमुखम् ।
पुम्मृगेन्द्रं भयकरं शुभं मृत्योश्च मारकम् ।
नमामि स्वयमित्येष द्वात्रिंशार्णो मनुर्हरेः[५] ॥ ११ ॥

[नृसिंहचतुर्विंशत्यक्षरः–६]

द्विर्जयस्योपरि निजं सोद्देशं सर्ववित् तथा ।
महातेजो बलं वीर्यं तादृशं स्वाहया युतम् ।
चतुर्विंशाक्षरो मन्त्रो[६] निखिलेष्टप्रदायकः ॥ १२ ॥

[नृसिंहगायत्री–७]

विद्महेधीमहेपूर्वं स्वयं चैव महाबलः ।
प्रेरयेत्तन्नइत्येतन्मद्ध्येऽनन्तः प्रकीर्त्तितः[७] ॥ १३ ॥

---

१ तथाच न्यासः–"ॐ हृदयाय नमः । वराहाय शिरसे स्वाहा । भूधराय शिखायै वषट् । परमात्मने कवचाय हुम् । सर्वज्ञाय नेत्राभ्यां वौषट् । सर्वशक्तये अस्त्राय फट्" इति ।

२ तथाच न्यासः–"पूर्णज्ञानात्मने हृदयाय नमः । पूर्णैश्वर्यात्मने शिरसे स्वाहा । पूर्णप्रभात्मने शिखायै वषट् । पूर्णानन्दात्मने कवचाय हुम् । पूर्णतेजआत्मने नेत्राभ्यां वौषट् । पूर्णशक्त्यात्मने अस्त्राय फट्" इति ।

३ "–ऽष्टाक्षरे मन्त्रो–" इति प्र. पाठः । तथाच मन्त्रः "उत्तिष्ठ श्रीकर स्वाहा" इति ।

४ तथाच न्यासः–"भीषयभीषय हृदयाय नमः । त्रासयत्रासय शिरसे स्वाहा । प्रमर्दयप्रमर्दय शिखायै वषट् । प्रध्वंसयप्रध्वंसय कवचाय हुम् । रक्षरक्ष अस्त्राय फट्" इति ।

५ तथाच मन्त्रः–"उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् । नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम्" इति ।

६ तथाच मन्त्रः–"जय जय नरसिंहाय सर्वज्ञाय महातेजोबलवीर्याय स्वाहा" इति ।

७ तथाच मन्त्रः–"नरसिंहाय विद्महे महाबलाय धीमहि । तन्नोऽनन्तः प्रचोदयात्" इति ।

पादैर्व्यस्तैः समस्तैश्च पदैश्चाङ्गं प्रकीर्त्तितम् ।
पूर्वयोस्तत्र पूर्वं तु सर्वज्ञेन षडङ्गकम् ।
तृतीयं तु द्विरावृत्तैः पादैरङ्गसमन्वितम्[1] ॥ १४ ॥

ध्यायेन्नृसिंहमुरुवृत्तरविन्निनेत्रं
जानुप्रसक्तकरयुग्ममथापराभ्याम् ।
चक्रं दरं च दधतं प्रियया समेतं
तिग्मांशुकोट्यधिकतेजसमग्र्यशक्तिम् ॥ १५ ॥

सर्वेष्वपि हि मन्त्रेषु ध्यायनन्तान्तबाहुकः ।
चेतनान्तस्थमारभ्य सर्वगान्तस्वरूपवान्[2] ॥ १६ ॥

अनन्तरूपो ध्येयोऽतः[3] स्वगुरूक्तानुसारतः ।
यथायोग्यं यथाशक्ति तत्तदायुधभूषणः ॥ १७ ॥

[4]चक्रशङ्खगदापद्मखड्गखेटाः सशार्ङ्गकाः[5] ।
शरो मुसलवज्रौ च हलः पाशाङ्कुशौ तथा ॥ १८ ॥

शूलं च भिण्डिपालश्च[6] पट्टसोऽग्निर्वराभये ।
[7]तत्वमुद्राऽक्षमाला च पुस्तकं च विदारणम् ।
[8]इत्यादीन्यखिलान्येव विष्णोश्चिन्त्यानि बाहुषु ॥ १९ ॥

---

१ तथाच प्रथममन्त्रन्यासः–"उग्रं वीरं महाविष्णुं हृदयाय नमः । ज्वलन्तं सर्वतोमुखं शिरसे स्वाहा । नृसिंहं भीषणं भद्रं शिखायै वषट् । मृत्युमृत्युं नमाम्यहं कवचाय हुम् । ॐ उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् । नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहं अस्त्राय फट्" इति । षडङ्गन्यासपक्षे कवचन्यासानन्तरं "ॐ उग्रं वीरं . . . . . नमाम्यहम् नेत्रत्रयाय वौषट् । सर्वज्ञाय अस्त्राय फट्" इति विशेषः ।

द्वितीयमन्त्रन्यासः–"जय हृदयाय नमः । जय शिरसे स्वाहा । नरसिंहाय शिखायै वषट् । सर्वज्ञाय कवचाय हुम् । महातेजोबलवीर्याय नेत्रत्रयाय वौषट् । स्वाहा अस्त्राय फट्" इति ।

तृतीयमन्त्रन्यासः–"नरसिंहाय विद्महे हृदयाय नमः । महाबलाय धीमहि शिरसे स्वाहा । तन्नोऽनन्तः प्रचोदयात् शिखायै वषट् । नरसिंहाय विद्महे कवचाय हुम् । महाबलाय धीमहि नेत्रत्रयाय वौषट् । तन्नोऽनन्तः प्रचोदयात् अस्त्राय फट्" इति ।

२ "सर्वगान्तस्थरूपवान्" इति प्र. पाठः प्रामादिकः । ३ "ध्येयोऽत्र" इति प्र. पाठः ।
४ "शङ्खचक्रगदा–" इति प्र. पाठः । ५ "–खेटासिशार्ङ्गकाः" इति क्वचित् ।
६ "–पालश्च पट्टिशो–" इति प्र. पाठः । "–पालं च पट्टिसो–" इति क्वचित् । "भिण्डिवाळश्च पट्टिसो–" इति च क्वचित् । ७ "तर्कमुद्रा–" इति प्र. पाठः ।
८ "इत्यादीन्निखिलान्येव" इति मुद्रितः पाठः प्रामादिकः ।

[हंसमन्त्राः ८–१०]

वियत् स इति युग्मार्ण्णो विपरीतश्च स स्मृतः[1] ।
[2]स सर्गहीनो वेतश्च बिन्दुहीनोत्तरस्तथाऽऽ[3] ॥ २० ॥

त्रय एते महामन्त्राः[4] पुरुषार्थचतुष्टये ।
कल्पवृक्षाः प्रिया विष्णोर्विशेषाज्ज्ञान[5]दायकाः ।
[6]एतैरेव द्विरावृत्तैरङ्गमेषां प्रकीर्त्तितम्[7] ॥ २१ ॥

श्वासरूपो जपो नित्यमुभयोर्विद्वदज्ञयोः ।
एकविंशत्सहस्रात्मा संषट्च्छतमहर्न्निशम् ।
अर्प्पणीयो हरौ नित्यं प्रातर्योगो महानयम् ॥ २२ ॥

अशेषदोषदहनस्तत्त्वज्ञानप्रदायकः ।
अष्टैश्वर्यप्रदश्चैव कृतादौ समुपासताम् ।
[8]तारयोगोऽप्येवमेव ब्रह्मादावेव वर्त्तते ॥ २३ ॥

ध्यायेद् रवीन्दुकरमिन्दुसहस्रलक्ष-
कान्तिं प्रियासहितमास्थितमिन्दुबिम्बे ।
शङ्खारिदोर्द्वयमुदर्क्कमहेन्दुबिम्बात्
संसिच्यमानममृतेन रमाधिनाथम् ॥ २४ ॥

अन्त्यस्य रक्तवर्ण्णो वा ध्येयो विष्णुः सनातनः ।
विद्युद्वर्ण्णोऽथवा ज्ञेयः[9] शक्त्येतः पञ्चमन्त्रयुक् ॥ २५ ॥

अष्टाक्षरो[10] महामन्त्रस्तैरेवाङ्गैः समन्वितः[11] ।
अन्त्यध्यानयुतश्चैव निःशेषपुरुषार्थदः ॥ २६ ॥

---

१ "–श्च संस्मृतः" इति क्वचित् । २ "सः सर्गहीनः" इति क्वचित् । तत्पक्षे स इति सकारः ।

३ "विन्दुहीनोत्तरः, तथा, आ इति पदपाठः । तथाच विसर्गहीनः वायुक्तश्च सः=स्वा । तदुत्तरः हकारः विन्दुहीनः तदनन्तरं आकारश्च=हा ।

४ तथाच मन्त्राः—"हंसः । सोहम् । स्वाहा" इति । हंसषडक्षरोऽयम् ।

५ "विशेषज्ञान–" इति प्र. पाठः । ६ "तैरेव तु द्विरा–" इति प्र. पाठः ।

७ तथाच न्यासः—"हंसः हृदयाय नमः । सोहं शिरसे स्वाहा । स्वाहा शिखायै वषट् । हंसः कवचाय हुम् । सोहं नेत्राभ्यां वौषट् । स्वाहा अस्त्राय फट्" इति ।

८ "ॐ हंसः सोहं स्वाहा" इति द्वितीयो मन्त्रस्तारयोगः ।

९ "–थवा ध्येयः" इति प्र. पाठः ।

१० तथाचाष्टाक्षरो हंसमन्त्रः "ओम् । ह्रीम् । हंसः । सोहम् । स्वाहा" इति ।

११ तथाच न्यासः—"ॐ हृदयाय नमः । ह्रीम् शिरसे स्वाहा । हंसः शिखायै वषट् । सोहं कवचाय हुम् । स्वाहा अस्त्राय फट्" इति ।

[दधिवामनमन्त्रः–११]

मूलं नः प्रतिपेथश्च सोद्देशो भगवानपि ।
विष्णुर्भोज्याधिपः स्वाहायुक्तोऽष्टादशवर्णकः[१] ॥ २७ ॥

अङ्गानि तत्पदैरेव[३] मन्त्रचिन्तामणिस्त्वयम्[४] ।
यथेष्टभक्ष्य[५]भोज्यादिदाता मुक्तिप्रदायकः ॥ २८ ॥

ध्यायेत् सुशुक्लमरविन्ददलायताक्षं
सौवर्णपात्रदधिभोज्यमथामृतं च ।
[६]दोर्भ्यां दधानमखिलैश्च सुरैः परीतं[७]
शीतांशुमण्डलगतं रमया समेतम् ॥ २९ ॥

[वामनाष्टाक्षरः–१२]

अमृतः[८] स्वयमुद्देशयुतः[९] सहृदयो मनुः ।
सतारोऽष्टाक्षरो[१०]ऽङ्गानि [११]पदैर्व्यस्तसमस्तकैः[१२] ॥ ३० ॥

उद्यद्रविप्रभमरीन्द्रदरौ गदां च
ज्ञानं च बिभ्रतमजं प्रियया समेतम् ।

---

तन्त्रान्तरेषु व्यत्यासेनाङ्गन्यासः कथितः । तद्यथा— "स्वाहा हृदयाय नमः । सोहम् शिरसे स्वाहा । हंसः शिखायै वषट् । ह्रीं कवचाय हुम् । ॐ अस्त्राय फट्" इति । तथाहि शारदातिलकम्—"स्वाहाद्यैः पञ्चमनुभिः पञ्चाङ्गानि प्रकल्पयेत्" इति । अनयोः कतरो न्यासो भगवत्पादसम्मत इति न स्फुटं प्रतीयते । तैरेवाङ्गैः समन्वित इति तु यथाक्रमं व्यत्यासेन चेत्युभयथाऽपि सम्भवति । मन्त्रविदो महान्तः प्रमाणम् । सम्प्रदायस्तूभयथाऽपि ।

१ "स्वाहायुगष्टा–" इति क्वचित् ।

२ तथाच मन्त्रः–"ॐ नमो भगवते विष्णवेऽन्नाधिपतये स्वाहा" इति । षणयोर्भेदयोगतः, अन्नाधिपतये इति विश्लेषेण वाऽष्टादशाक्षरत्वम् ।

३ तथाच न्यासः–"ॐ हृदयाय नमः । नमः शिरसे स्वाहा । भगवते शिखायै वषट् । विष्णवे कवचाय हुम् । अन्नाधिपतये नेत्राभ्यां वौषट् । स्वाहा अस्त्राय फट्" इति ।

४ "–मणिः स्वयम्" इति क्वचित् । मन्त्रचिन्तामणिरिति चास्यैव मन्त्रस्य नामान्तरमिति च वदन्ति ।

५ "–भक्षभोज्या–" इति प्र. पाठः ।

६ " दोर्भिर्दधान–" इति क्वचित् पाठश्चिन्त्यः ।

७ "सुरैः समेतम्" इति प्र. पाठः ।

८ "अमृतं स्वय–" इति प्र. पाठः । क्वचित् कोशेषु च ।

९ "–युक्तः सहृ–" इति प्र. पाठः । कोशेषु च क्वचित् ।

१० तथाच मन्त्रः–"ॐ वं वामनाय नमः" इति । अन्ये तु "ॐ वां वामनाय नमः" इति मन्त्रं पठन्ति ।

११ "पदैर्व्यस्तैः सम–" इति प्र. पाठः ।

१२ तथाच न्यासः–"ॐ हृदयाय नमः । वं शिरसे स्वाहा । वामनाय शिखायै वषट् । नमः कवचाय हुम् । ॐ वां वामनाय नमः अस्त्राय फट्" इति ।

विश्वावकाशमभितः प्रतिपूरयन्तं[1]
भासा स्वया स्मरत विष्णुमजादिवन्द्यम् ॥ ३१ ॥

[त्रिविक्रमगायत्री–१३]

त्रिविक्रमस्तु सोद्देशो विश्वरूपश्च तत्पुरः[2] ।
धीविदौ च महे[3] विष्णुस्तन्नःप्रेरणमद्वयगः[4] ॥ ३२ ॥

[परशुराम–दाशरथिरामषडक्षरः–१४]

स्वयमुद्देशसंयुक्त[5]स्तदाद्यर्ण्णपुरस्सरः ।
सनतिः[6] षडक्षरो मन्त्रो[7] वर्ण्णैरङ्गक्रिया मता[8] ॥ ३३ ॥

अङ्गारवर्ण्णमभितोऽण्डबहिः प्रभाभि-
र्व्याप्तं परश्वधधनुर्द्धरमेकवीरम् ।
ध्यायेदजेशपुरुहूतमुखैः स्तुवद्भि-
रावीतमात्मपदवीं प्रतिपादयन्तम् ॥ ३४ ॥

श्यामं रवीन्द्वमित[9]दीधितिकान्तियुक्तं
ज्ञानं शरं च दधतं प्रियया समेतम् ।
[10]स्वात्मस्वरूपममितं हनुमन्मुखेषु
सन्दर्शयन्तमजितं स्मरतोरुगीर्भिः ॥ ३५ ॥

[भार्ग्गवमन्त्रौ राघवमन्त्रौ च १५–१८]

निजगोत्रं तु सोद्देशं पूर्वाक्षरपुरस्सरम् ।
नत्यन्तं[11] तारपूर्वं च मनुरष्टाक्षरो मतः[12] ।
ते च बीजे बीजभूते धर्म्मादीनामशेषतः ॥ ३६

---

१ "प्रतिभासयन्तम्" इति प्र. पाठः ।

२ "तत्परः" इति प्र. पाठः । प्राचीनपाठे तत्पुर इति तत्पुरस्तात् तदुपरि इत्यर्थः ।

३ "विद्महे धीमहे" इति क्वचित् कोशपाठः स्वरसः ।

४ तथाच मन्त्रः "त्रिविक्रमाय विद्महे विश्वरूपाय धीमहि । तन्नो विष्णुः प्रचोदयात्" इति ।

५ "–सहितस्तदा–" इति क्वचित् ।

६ "सनमः षड–" इति क्वचित् ।

७ तथाच मन्त्रः "राँ रामाय नमः" इति ।

८ तथाहि न्यासः– "राँ हृदयाय नमः । रां शिरसे स्वाहा । मां शिखायै वषट् । यं कवचाय हुम् । नं नेत्राभ्यां वौषट् । मं अस्त्राय फट्" इति ।

९ "रवीन्द्वधिकदीधिति-" इति क्वचित् ।

१० "आत्मस्वरूप–" इति क्वचित् ।

११ "नत्यन्ततार–" इति क्वचित् ।

१२ तथाच मन्त्रौ — "ॐ भाँ भार्ग्गवाय नमः" इति, "ॐ राँ राघवाय नमः" इति च । अनयोर्बीजाक्षरभूते "भाँ" इति, "राँ" इति च प्रत्येकं द्वौ मन्त्राविति चत्वारो मन्त्राः ।

एते विजयदा मन्त्रा ज्ञानमोक्षप्रदायकाः ।
हिरण्यरत्नराज्यादिसमभीष्टसुरद्रुमाः ॥ ३७ ॥

[अष्टादशाक्षरः कृष्णमन्त्रः-१९]

कृष्णो गोविच्च कामेतौ[1] सोद्देशो वल्लवी[2]जनः ।
प्रियश्च तादृशः स्वाहायुगष्टा[3]दशवर्णकः ।
पदैरङ्गानि[4] सम्प्रीतिकाममोक्षप्रदो मनुः ॥ ३८ ॥

ध्यायेद्धरिन्मणिनिभं जगदेकवन्द्यं
सौन्दर्यसारमरिशङ्खवराभयानि ।
दोर्भिर्दधानमजितं सरसं च भैष्मी-
सत्यासमेतमखिलप्रदमिन्दिरेशम् ॥ ३९ ॥

[कृष्णषडक्षरः-एकाक्षरश्च २०-२१]

सकामः स्वयमुद्देशी नत्यन्तोऽयं षडक्षरः[5] ।
तदादिरपि सर्वेष्टचिन्तामणिरुदीरितः[6] ॥ ४० ॥

दृष्टार्थ एव मन्त्राणां कलौ वीर्यं तिरस्कृतम् ।
तत्राप्युद्दीप्तवीर्या हि[7] मन्त्रा अत्र प्रकीर्त्तिताः ।
वासिष्ठवृष्णिप्रवरमन्त्रास्तत्रापि[8] वीर्यदाः ॥ ४१ ॥

[वेदव्यासाष्टाक्षरः-२२]

स्वयं वेदपदारूढः[9] पूर्ववर्णपुरस्सरः ।
नत्यन्तोऽष्टाक्षरो मन्त्रः[10] प्रियो विज्ञानगोपतेः ॥ ४२ ॥

व्याख्याश्रीसर्वविज्ञानकवितादिगुणप्रदः ।
वादे विजयदो नित्यं यथा युद्धे नृकेसरी ॥ ४३ ॥

---

१ "कामेतः" इति प्र. पाठः । २ "वल्लवी–" इति प्र. पाठः ।

३ –"युक्तोऽष्टादश–" इति क्वचित् । तथाच मन्त्रः–"क्लीँ कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा" इति । अयं गोपालमन्त्र इति मदनगोपालमन्त्र इति च कथ्यते ।

४ तथाच न्यासः–"क्लीं हृदयाय नमः । कृष्णाय शिरसे स्वाहा । गोविन्दाय शिखायै वषट् । गोपीजनवल्लभाय कवचाय हुम् । स्वाहा अस्त्राय फट्" इति ।

५ तथाहि मन्त्रः–"क्लीँ कृष्णाय नमः" इति । तदादिः केवलं "क्लीँ" इति चैकाक्षरं कामबीजं मन्त्रान्तरम् ।

६ "–मणिरुदाहृतः" इति प्र. पाठः । ७ "–वीर्याः स्युर्मन्त्रा–" इति क्वचित् ।

८ "–स्तत्रातिवीर्यदाः" इति क्वचित् । ९ "देवपदारूढः" इति मुद्रितः पाठः प्रामादिकः ।

१० तथाच मन्त्रः–"व्याँ वेदव्यासाय नमः" इति ।

विज्ञानरोचिः[1]प्रतिपूरितान्त-
र्ब्रह्माण्डकोशं हरितोपलाभम् ।
तर्क्काभयेतं विधिशर्वपूर्व-
गीर्वाणविज्ञानदमाननोऽस्मि ॥ ४४ ॥

[व्यासगायत्री–२३]

ज्ञानानन्दपुरः पूर्णो विद्महे धीमहे तथा ।
तन्नःप्रेरणमद्ध्ये तु व्यासो मन्त्राधिपाधिपः[2] ॥ ४५ ॥

[व्यासबीजमन्त्रः–२४]

[3]आदिबीजं [4]स्थिरादोषज्ञानबीजं विमुक्तिदम् ।
सर्वपापक्षयकरं सर्वव्याधिविनाशनम् ॥ ४६ ॥

ध्यायेच्छशाङ्कशतकोट्यतिसौख्यकान्ति
संसिच्यमानममृतोरुघटैः सुरेशैः ।
वर्णाभिमानिभिरजेशमुखैः सहैव
पञ्चाशता प्रतिगिरन्तमशेषविद्याः ॥ ४७ ॥

[हयग्रीवमन्त्रः–२५]

सोद्देशस्तु स्वयं दीर्घपूर्वार्ण्णाद्यो नमोयुतः ।
[5]सर्वविद्याप्रदोऽष्टार्ण्णः[6] प्रतिवादिजयप्रदः ।
विमुक्तिसाधनः कीर्त्तिबुद्धिस्थैर्यप्रदः सदा ॥ ४८ ॥

वन्दे तुरङ्गवदनं शशिबिम्बसंस्थं
चन्द्रावदातममृतात्मकरैः समन्तात् ।
अण्डान्तरं बहिरपि प्रतिभासयन्तं
शङ्खाक्षपुस्तकसुबोधयुताब्जबाहुम् ॥ ४९ ॥

नस्तो मुखादपि निरन्तरमुद्गिरन्तं
विद्या अशेषत उताब्जभवेशमुख्यैः ।

---

१ "रोचिःपरिपूरि–" इति प्र. पाठः । कोशेषु च क्वचित् ।

२ तथात्र मन्त्रः–"पूर्णज्ञानाय विद्महे पूर्णानन्दाय धीमहि । तन्नो व्यासः प्रचोदयात्" इति ।

३ तथाच केवलं "व्याँ" इत्येकाक्षरं व्यासबीजं स्वतन्त्रो मन्त्रः ।

४ "स्थितादोष–" इति क्वचित् ।

५ "सर्वाभीष्टप्रदो–" इति क्वचित् ।

६ तथाच मन्त्रः–"हाँ हयग्रीवाय नमः" इति । अन्ये तु "हाँ हयशिरसे नमः", "हाँ हयशीर्षाय नमः", हाँ हयशीर्ष्णे नमः" इत्यादीनि पाठान्तराणि मन्त्रे पठन्ति ।

संसेव्यमानमतिभक्तिभरावनम्रै-
लक्ष्म्याऽमृतेन सततं परिषिच्यमानम् ॥ ५० ॥

[कपिलमन्त्रः–दत्तात्रेयमन्त्रः २६–२७]

स्वयमुद्देशवान् पूर्ववर्ण्णपूर्वो नमोयुतः ।
सतारोऽष्टाक्षरश्चैव नवार्ण्णश्च मनू स्मृतौ[1] ॥ ५१ ॥

प्रोद्यद्दिवाकरसमानतनुं सहस्र-
सूर्योरुदीधितिभिरात्तसमस्तलोकम् ।
ज्ञानाभयाङ्कितकरं[2] कपिलं च दत्तं
ध्यायेदजादिसमितिं प्रतिबोधयन्तम् ॥ ५२ ॥

अधृष्यताज्ञानमोक्षप्रदौ भक्तेष्विमौ सदा ।

[वैदिकमन्त्राः २८–३१]

सूक्तं दीर्घतमोदृष्टं विष्णोर्नुकमिति[3] प्रभोः ।
सर्वार्त्थदं गार्त्समदं यो जात इति[4] चापरम् ॥ ५३ ॥

---

१ तथाच मन्त्रौ–"ॐ कँ कपिलाय नमः" इति, "ॐ दँ दत्तात्रेयाय नमः" इति च ।

२ "–याञ्चितकरम्" इति क्वचित् ।

३ तथाहि विष्णुमन्त्रात्मकं समग्रं सूक्तम्—

दीर्घतमा औचथ्यः । त्रिष्टुप् । विष्णुः ।

"विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्त्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ १ ॥
प्र तद् विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ २ ॥
प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे ।
य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित् पदेभिः ॥ ३ ॥
यस्य त्री पूर्ण्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति ।
य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥ ४ ॥
तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥ ५ ॥
ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि" ॥ ६ ॥ (ऋ. १. १५४.) इति

४ तथाहि परमैश्वर्यादिन्द्रपदवाच्यस्य विष्णोः समस्तं सूक्तम्—

गृत्समदो भार्गवः शौनकः । त्रिष्टुप् । इन्द्रः ।

"यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत् ।
यस्य शुष्माद् रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥ १ ॥
यः पृथिवीं व्यथमानामदृंहद् यः पर्वतान् प्रकुपिताँ अरम्णात् ।
यो अन्तरिक्षं विममे वरीयो यो द्यामस्तभ्नात् स जनास इन्द्रः ॥ २ ॥
यो हत्वाहिमरिणात् सप्त सिन्धून् यो गा उदाजदपधा वलस्य ।
यो अश्मनोरन्तरग्निं जजान संवृक् समत्सु स जनास इन्द्रः ॥ ३ ॥
येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः ।
श्वघ्नीव यो जिगीवाँ लक्षमाददर्यः पुष्टानि स जनास इन्द्रः ॥ ४ ॥
यं स्मा पृच्छन्ति कुह सेति घोरमुतेमाहुर्नैषो अस्तीत्येनम् ।
सो अर्यः पुष्टीर्विज इवा मिनाति श्रदस्मै धत्त स जनास इन्द्रः ॥ ५ ॥ १ ॥

यो रध्रस्य चोदिता यः कृशस्य यो ब्रह्मणो नाधमानस्य कीरेः ।
युक्तग्राव्णो योऽविता सुशिप्रः सुतसोमस्य स जनास इन्द्रः ॥ ६ ॥
यस्याश्वासः प्रदिशि यस्य गावो यस्य ग्रामा यस्य विश्वे रथासः ।
यः सूर्यं य उषसं जजान यो अपां नेता स जनास इन्द्रः ॥ ७ ॥
यं क्रन्दसी संयती विह्वयेते परेऽवर उभया अमित्राः ।
समानं चिद् रथमातस्थिवांसा नाना हवेते स जनास इन्द्रः ॥ ८ ॥
यस्मान्न ऋते विजयन्ते जनासो यं युद्ध्यमाना अवसे हवन्ते ।
यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत् स जनास इन्द्रः ॥ ९ ॥
यः शश्वतो मह्येनो दधानानमन्यमानाञ्छर्वा जघान ।
यः शर्द्धते नानुददाति शृद्ध्यां यो दस्योर्हन्ता स जनास इन्द्रः ॥ १० ॥ ॥ २ ॥

यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत् ।
ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः ॥ ११ ॥
यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत् सर्त्तवे सप्तसिन्धून् ।
यो रौहिणमस्फुरद् वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः ॥ १२ ॥
द्यावा चिदस्मै पृथिवी नमेते शुष्माच्चिदस्य पर्वता भयन्ते ।
यः सोमपा निचितो वज्रबाहुर्यो वज्रहस्तः स जनास इन्द्रः ॥ १३ ॥
यः सुन्वन्तमवति यः पचन्तं यः शंसन्तं यः शशमानमूती ।
यस्य ब्रह्म वर्द्धनं यस्य सोमो यस्येदं राधः स जनास इन्द्रः ॥ १४ ॥
यः सुन्वते पचते दुध्र आ चिद् वाजं दर्दर्षि स किलासि सत्यः ।
वयं त इन्द्र विश्वह प्रियासः सुवीरासो विदथमा वदेम" ॥ १५ ॥ ३ ॥ इति ।

(ऋ. २. १२.)

वासिष्ठं च परो मात्रयेति[१] ज्ञानविमुक्तिदम् ।
भौवनीयं सर्वकाममोक्षदं य इमेत्यपि[२] ।
एवमेवाखिला वेदा ज्ञातव्या विष्णुतत्पराः ॥ ५४ ॥

---

१ तथाहि समग्रं सूक्तम्—

मैत्रावारुणिर्वसिष्ठः । त्रिष्टुप् । विष्णुः, ४–६ इन्द्राविष्णू ।

"परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।
उभे तें विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॥ १ ॥
न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप ।
उदस्तभ्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः ॥ २ ॥
इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्या ।
व्यस्तभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः ॥ ३ ॥
उरु यज्ञाय चक्रथुरु लोकं जनयन्ता सूर्यमुषासमग्निम् ।
दासस्य चिद् वृषशिप्रस्य माया जघ्नथुर्नरा पृतनाज्येषु ॥ ४ ॥
इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम् ।
शतं वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान् ॥ ५ ॥
इयं मनीषा बृहती बृहन्तोरुक्रमा तवसा वर्द्धयन्ती ।
ररे वां स्तोमं विदथेषु विष्णो पिन्वतमिषो वृजनेष्विन्द्र ॥ ६ ॥
वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्द्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः" ॥ ७ ॥ (ऋ. ७. ९९.)

२ तथाहि विश्वकर्तृत्वात् विश्वकर्म्मनाम्नो विष्णोरिदं प्रतिपादकं विश्वकर्म्मदृष्टं विश्वकर्म्मसूक्तम्—

विश्वकर्म्मा भौवनः । त्रिष्टुप्, २–विराड्रूपा । विश्वकर्म्मा ।

"य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत् पिता नः ।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेश ॥ १ ॥
किं स्विदासीदधिष्ठानमारम्भणं कतमत् स्वित् कथासीत् ।
यतो भूमिं जनयन् विश्वकर्म्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥ २ ॥
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥ ३ ॥
किं स्विद् वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तद् यदध्यतिष्ठद् भुवनानि धारयन् ।
या ते धामानि परमाणि यावमा या मद्ध्यमा विश्वकर्म्मन्नुतेमा ।
शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वं वृधानः ॥ ५ ॥
विश्वकर्म्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥ ६ ॥

[वेदोक्तलक्ष्मीमन्त्रः-३२]

**स्वदृष्टं[1] सूक्तमखिलं[2] कामदं हरितुष्टिदम् ।**
**वाचोऽम्भ्रिण्याः[3] श्रियोऽङ्गानि श्रीर्लक्ष्मीर्म्मन्दिरा रमा[4] ॥ ५५ ॥**

**कौशेयपीतवसनामरविन्दनेत्रां**
**पद्मद्वयाभयवरोद्यतपद्महस्ताम् ।**

---

वाचस्पतिं विश्वकर्म्माणमूतये मनोजुवं वाजे अद्या हुवेम ।
स नो विश्वानि हवनानि जोषद् विश्वशम्भूरवसे साधुकर्म्मा" ॥ ७॥ (ऋ. १०.८१.) इति ।

तथाचेदमुभयथाऽपि विश्वकर्म्मसूक्तम्-भुवनपुत्रेण विश्वकर्म्मणा दृष्टमिति; विश्वकर्म्मणो विष्णोः प्रतिपादकमिति च ।

१ तथाह्यम्भ्रिणीसूक्तमात्मदैवत्यम् । आत्मेति स्वयमेव स्वान्तर्यामी नारायणश्च—
वागम्भ्रिणी । त्रिष्टुप्; २-जगती । आत्मा ।

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ १ ॥
अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् ।
अहं दधामि द्रविणं हविष्मते सुप्राव्ये३ यजमानाय सुन्वते ॥ २ ॥
अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ॥ ३ ॥
मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् ।
अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥ ४ ॥
अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ ५ ॥ १ ॥

अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ॥ ६ ॥
अहं सुवे पितरमस्य मूर्द्धन् मम योनिरप्स्व१न्तः समुद्रे ।
ततो वितिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥ ७ ॥
अहमेव वात इव प्र वाम्यारभमाणा भुवनानि विश्वा ।
परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव" ॥ ८ ॥ २ ॥ इति ।

(ऋ. १०.१२५.)

२ "-मखिलकामदम्" इति च पाठान्तरं क्वचित् । प्र. पाठोऽपि तथा ।

३ "वाचोऽम्भृण्याः" इति च पाठान्तरम् । "वाचोऽम्भ्रण्याः" इति प्र. पाठः ।

४ तथाहि न्यासः- "श्रिये हृदयाय नमः । लक्ष्म्यै शिरसे स्वाहा । मायै शिखायै वषट् । इन्दिरायै कवचाय हुम् । रमायै अस्त्राय फट्" इति ।

उद्यच्छताक्र्कसदृशां[1] परमाङ्कसंस्थां
ध्यायेद् विधीशनत[2]पादयुगां जनित्रीम् ॥ ५६ ॥

[लज्जाबीजम्–श्रीबीजम् ३३-३४]

लज्जाबीजं च तद्बीजं[3] तस्या एवाभिधायकम् ।
पाशाङ्कुशौ रक्तवस्त्रं[4] लज्जाबीजे विशिष्यते ।
अमद्वयंयुग्मस्वरगतेनैवाङ्गमुदाहृतम्[5] ॥ ५७ ॥

[भूबीजम्–दुर्गाबीजम् ३५-३६]

सत्ताबीजं च दुर्बीजं[6] तद्वदेव प्रकीर्तितम् ।
वर्णः श्यामो विशेषोऽत्र ताम्बूलं नीलमुत्पलम् ।
चक्रशङ्खौ तर्जनं च शूलमित्यपरत्र च ॥ ५८ ॥

[भूपञ्चाक्षरः–दुर्गाषडक्षरः ३७-३८]

नमोऽन्तः स्वेन सहितस्तदेवान्यो[7] मनुः स्मृतः[8] ।

[वेदोक्तदुर्गामन्त्रः–३९]

दुर्गात्रिष्टुप्[9] कश्यपोक्ता[10] तत्र वर्णोऽग्निवत् स्मृतः ॥ ५९ ॥

---

१ "-सदृशीम्" इति प्र. पाठः । "उद्यच्छशाङ्कसदृशाम्" इति क्वचित् ।

२ "-नुतपाद-" इति प्र. पाठः ।   ३ तथाच मन्त्रौ—"ह्रीँ" इति, "श्रीँ" इति च ।

४ "रक्तवस्त्रे" इति क्वचित् ।

५ तथाच न्यासः —"ह्राँ हृदयाय नमः । ह्रीँ शिरसे स्वाहा । ह्रूँ शिखायै वषट् । ह्रैँ कवचाय हुम् । ह्रौँ नेत्राभ्यां वौषट् । ह्रः अस्त्राय फट्" इति लज्जाबीजस्य । "श्राँ हृदयाय नमः । श्रीँ शिरसे स्वाहा । श्रूँ शिखायै वषट् । श्रैँ कवचाय हुम् । श्रौँ नेत्राभ्यां वौषट् । श्रः अस्त्राय फट्" इति श्रीबीजस्य ।

६ तथाच मन्त्रौ—"भूँ" इति "दुः" इति च । "दुँ" इत्यपि दुर्गाबीजमन्ये पेठुः ।

७ "सहितः स एवान्यो" इति क्वचित् । तदिति भूबीजं, दुर्गाबीजं च ।

८ तथा च मन्त्रौ—"भूँ भुवे नमः" इति भूपञ्चाक्षरः, "दुँ दुर्गायै नमः" इति दुर्गाषडक्षरः । यद्यपि दुरिति दुर्गाबीजं पूर्वमुक्तम् । न 'दुँ' इति । तथाऽपि तन्त्रान्तरसंवादात् नारायणीयव्याख्यासंवादाच्चैवं मन्त्रानुपूर्वी स्वीकृता । अथ च "दुः दुर्गायै नमः" इति मन्त्रान्तरं भवति ।

९ तथाह्येकर्चं सूक्तम्— कश्यपो मारीचः । त्रिष्टुप् । जातवेदा अग्निः ।

जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः" इति । (ऋ. १.९९.)

यद्यप्यत्र जातवेदा अग्निर्देवतेति अनुक्रमणिकायां पठ्यते । तथापीदं यौगिकं नामेति स्फुटम् । अन्यथा जातवेदा इत्यग्निरिति च पुनरुक्तेः । ततश्च जातं सर्वं वेत्तीति जातवेदाः सर्वज्ञ, जाता वेदा यदर्थं स इति वा जातवेदाः वेदप्रतिपाद्यः, अभ्यन्तर्गतोऽग्निनामा परशुरामोऽत्र मुख्यदेवता, तदनन्तरं सर्वज्ञा अग्निवर्णा दुर्गा च देवता । तदेतत्सूचनायैव "वर्णोऽग्निवत् स्मृतः" इत्युक्तम् । "मुख्यतो जामदग्न्यस्तु देवता" इति चानुपदमेव वक्ष्यति ।

१० "काश्यपोक्ता" इति क्वचित् ।

त्रिनेत्रत्वं च दुर्गायाः प्रायः सर्वत्र कथ्यते ।
पादैः समस्तेन तथा[1] षडर्णेना[2]ङ्गमुच्यते[3] ॥ ६० ॥

रमाया एव रूपाणि त्वेतानि हि विदो विदुः ।
मुख्यतो जामदग्न्यस्तु देवताऽस्य मनोः स्मृतः ॥ ६१ ॥

[वेदोक्तचतुर्मुखमन्त्रः–४०]

हिरण्यगर्भसूक्तं[4] च भृगुदृष्टं प्रकीर्त्तितम् ।

---

१ "पादैस्तथा समस्तेन" इति क्वचित् । २ "षड्वर्णेनाङ्ग–" इति प्र. पाठः ।

३ तथाहि न्यासक्रमः—"'जातवेदसे सुनवाम सोमम्' हृदयाय नमः । 'अरातीयतो नि दहाति वेदः' शिरसे स्वाहा । 'स नः पर्षदति दुर्गाणि विश्वा' शिखायै वषट् । 'नावेव सिन्धुं दुरितात्यग्निः' कवचाय हुम् । 'जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः' अस्त्राय फट्" इति वैदिकमन्त्रस्य पञ्चाङ्गन्यासः । तथा दुर्गाषडक्षरस्य—"दुँ हृदयाय नमः । दुँ शिरसे स्वाहा । गाँ शिखायै वषट् । यैँ कवचाय हुम् । नँ नेत्रत्रयाय वौषट् । मँ अस्त्राय फट्" इति मन्त्रवर्णैरेव षडङ्गन्यासः । एतनैव भूपञ्चाक्षरस्यापि न्यासः कथितप्रायः; मन्त्रवर्णैरेव पञ्चाङ्गन्यास इति । तथाहि "भूँ हृदयाय नमः । भुँ शिरसे स्वाहा । वेँ शिखायै वषट् ! नँ कवचाय हुम् । मँ अस्त्राय फट्" इति । अथवा श्रीर्लक्ष्मीर्म्मेन्दिरा रमा" इत्युक्तिविधया पञ्चभिर्न्नामभिर्न्यासः ।

४ तथाहि हिरण्यगर्भसूक्तम्—

भृगुः । त्रिष्टुप् । हिरण्यगर्भः ।

"हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १ ॥
य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ २ ॥
यः प्राणतो निमिषतो महित्वैक इद् राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ ३ ॥
यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥ ४ ॥
येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥ ५ ॥ १ ॥

यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥ ६ ॥
आपो ह यद् बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानां समवर्त्ततासुरेकः कस्मै देवाय हविषा विधेम ॥ ७ ॥

ब्रह्मधातृविरिञ्चाजपाद्मैरङ्गमुदाहृतम्[1] ॥ ६२ ॥

[2]ध्यायेन्निषण्णमजमच्युतनाभिपद्मे
प्रोद्यद्दिवाकरसमूहनिकाशमव्ययम् ।
[3]मातृप्रकारकरमुत्तमकान्तिमद्भि-
र्वक्त्रैः सृजन्तमखिलैः परमार्थविद्याम्[4] ॥ ६३ ॥

[ब्रह्मपञ्चाक्षरः—हिरण्यगर्भाष्टाक्षरः ४१–४२]

स्वयमुद्देशनतिमांस्तस्य पञ्चाक्षरो मनुः[5] ।
स्वयमेवापरोऽष्टार्णस्तादृशः सम्प्रकीर्तितः[6] ॥ ६४ ॥

---

यश्चिदापो महिना पर्यपश्यद् दक्षं दधाना जनयन्तीर्यज्ञम् ।
यो देवेष्वधि देव एक आसीत् कस्मै देवाय हविषा विधेम ॥ ८ ॥
मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्म्मा जनान ।
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥ ९ ॥
प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत् कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्" ॥ १० ॥ २ ॥ इति ॥
(ऋ. १०. १२१.)

यद्यप्यनुक्रमणिकायाम्—हिरण्यगर्भः प्राजापत्योऽस्य सूक्तस्य ऋषिरित्युक्तम् । तेन प्रजापतिपुत्रः हिरण्यगर्भनामा ऋषिरस्य द्रष्टेति ज्ञायते । नेदमाचार्यसम्मतमिति भाति । अनुक्रमणिकोक्तस्य ऋषिदेवतादेस्तत्रतत्र स्वयमेव ऋग्भाष्ये स्फुटं निराकरणात् । नहि हिरण्यगर्भोऽत्र ऋषिः । स एव प्रजापतिः क इति चोच्यते । कः प्रजापतिरुद्दिष्ट इति वाचनात् । अथवा हिरण्यगर्भ इति नर्ष्यन्तरम् । किन्तु प्रजापतिपुत्रो भृगुरेव प्राजापत्यो हिरण्यगर्भ इति प्राचीनैर्व्यवह्रियत इति वक्तव्यम् । पितृनाम्ना पुत्रव्यपदेशश्च लोकसिद्धः । हिरण्यगर्भनाम्नः कस्यचनाप्यर्षेरप्रसिद्धेश्च । अथवा हिरण्यगर्भ इत्यपि वश्चिदृषिरस्य द्रष्टा । भृगुरपि द्रष्टा । एकस्यैव मन्त्रस्य बहुऋषिकत्वं दृष्टम् । तद्यथाऽयमेव हिरण्यगर्भमन्त्रः यजुर्वेदे विश्वदेवदृष्टत्वेनाग्निदृष्टत्वेन च पठ्यते । अथर्ववेदे च वेनर्षिदृष्टत्वेन । यथाकथाच भवतु । भृगुरस्य ऋषिरिति तु जपहोमादिषु ग्राह्यं वचः । आचार्यैर्म्मुखत उक्तत्वात् । यदपि यत्किञ्चिद् वचनान्तरम्, तत् त्याज्यं वा स्यात्; एतदविरोधेन योज्यं वा स्यात् ।

१ तथाच न्यासः- "ब्रह्मणे हृदयाय नमः । धात्रे शिरसे स्वाहा । विरिञ्चाय शिखायै वषट् । अजाय कवचाय हुम् । पाद्माय अस्त्राय फट्" इति ।

२ "ध्यायेत् निषण्ण-" इत्यादि क्वचित्पाठः प्रामादिकः ।

३ मातृकरसदृशकरमिति यावत्, सादृश्यमायुधैः । तथाच ब्रह्माऽपि पद्मद्वयाभयवरोद्यतपद्महस्तो ध्येय इति ।

४ "–विद्याः" इति क्वचित् ।

५ तथाच मन्त्रः–"ब्रह्मणे नमः" इति ।

६ तथाच मन्त्रः–"हिरण्यगर्भाय नमः" इति ।

[वेदोक्तप्राणमन्त्रः–४६]

**बळाद्यं भृगुणा दृष्टं प्राणाग्नेः सूक्तमुच्यते[1] ।**

---

१ तथाहि समग्रं प्राणाग्निसूक्तम्—

भृगुः । जगती, १२–१३त्रिष्टुप् । प्राणाग्निः ।

[यद्यपि दीर्घतमा औचत्थ्योऽस्य मन्त्रस्य देवतेति शौनकादिभिरुच्यते । अग्निर्देवतेति च । आदौ भृगुदृष्टमेव पश्चाद् दीर्घतमा अनुवाकमद्ध्ये स्वयं ददर्शेति सूपपन्नम् । तद् यथा दध्यङ्ङाथर्वणदृष्टा इति वाजसनेयके पठिता ईशवास्यादिमन्त्राः स्वायम्भुवमनुदृष्टा इत्याचार्यैरुक्तम् । ब्रह्मणोऽनन्तरमादौ स्वायम्भुवो मनुर्ददर्श । ततः याज्ञवल्क्यादयः दध्यङ्ङाथर्वणादयश्च । तथाऽत्रापि । प्रथमपरित्यागे मानाभावात्, जपद्ध्यानादिषु प्रथमद्रष्टृस्मरणे महाफललाभाच्च प्रथमद्रष्टैव भगवत्पादैरभिहित इति सुन्दरम् । अग्निर्देवतेति तु आचार्यैरेव विवृतम्–"प्राणाग्नेः सूक्तमुच्यते" इति । तथाचाग्निनामा प्राण एवात्र मुख्यदेवता । तथाहि प्रश्नोपनिषदि—"प्राणाग्नय एवैतस्मिन् पुरे जाग्रति" इति ।]

बळित्था तद् वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतो जनि ।
यदीमुप ह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः ॥ १ ॥
पृक्षो वपुः पितुमान् नित्य आ शये द्वितीयमा सप्तशिवासु मातृषु ।
तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः ॥ २ ॥
निर्यदीं बुध्नान्महिषस्य वर्प्पस ईशानासः शवसा क्रन्त सूरयः ।
यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति ॥ ३ ॥
प्र यत् पितुः परमान्नीयते पर्या पृक्षुधो वीरुधो दंसु रोहति ।
उभा यदस्य जनुषं यदिन्वत आदिद् यविष्ठो अभवद् घृणा शुचिः ॥ ४ ॥
आदिन्मातॄराविशद् यास्वा शुचिरहिंस्यमान उर्विया वि वावृधे ।
अनु यत् पूर्वा अरुहत् सनाजुवो नि नव्यसीष्ववरासु धावते ॥ ५ ॥ १ ॥

आदिद्धोतारं वृणते दिविष्टिषु भगमिव पपृचानास ऋञ्जते ।
देवान् यत् क्रत्वा मज्मना पुरुष्टुतो मर्त्तं शंसं विश्वधा वेति धायसे ॥ ६ ॥
वि यदस्थाद् यजतो वातचोदितो ह्वारो न वक्वा जरणा अनाकृतः ।
तस्य पत्मन् दक्षुषः कृष्णजंहसः शुचिजन्मनो रज आ व्यध्वनः ॥ ७ ॥
रथो न यातः शिक्वभिः कृतो द्यामङ्गेभिररुषेभिरीयते ।
आदस्य ते कृष्णासो दक्ष सूरयः शूरस्येव त्वेषथादीषते वयः ॥ ८ ॥
त्वया ह्यग्ने वरुणो धृतव्रतो मित्रः शाशद्रे अर्यमा सुदानवः ।
यत् सीमनु क्रतुना विश्वथा विभुररान्न नेमिः परिभूरजायथाः ॥ ९ ॥
त्वमग्ने शशमानाय सुन्वते रत्नं यविष्ठ देवतातिमिन्वसि ।
तं त्वा नु नव्यं सहसो युवन् वयं भगं न कारे महिरत्न धीमहि ॥ १० ॥

प्राणाद्यैः पञ्चभिस्तस्याप्यङ्गान्युक्तानि सूरिभिः[1] ॥ ६५ ॥

उद्यद्रविप्रकरसन्निभमच्युताङ्के
स्वासीनमस्य नुतिनित्यवचःप्रवृत्तिम् ।
ध्यायेद् गदाभयकरं सुकृताञ्जलिं तं
प्राणं यथेष्टतनुमुन्नतकर्म्मशक्तिम् ॥ ६६ ॥

[पञ्च प्राणमन्त्राः ४४–४८]

प्राणाद्याः पञ्च मन्त्राश्च[2] तस्य देवस्य वाचकाः ।
उच्यते हरिरप्येतैः साक्षान्नारायणादिकः ॥ ६७ ॥

[ वेदोक्तसरस्वती–भारतीमन्त्रौ ४९–५० ]

ब्रह्माण्या अपि भारत्या गौरीर्यस्त इति श्रुतौ ।
मन्त्रौ[3] दीर्घतमोदृष्टौ सर्वाभीष्टप्रदायकौ ॥ ६८ ॥

---

अस्मे रयिं न स्वर्थं दमूनसं भगं दक्षं न पपृचासि धर्णसिम् ।
रश्मीँरिव यो यमति जन्मनी उभे देवानां शंसमृत आ च सुक्रतुः ॥ ११ ॥
उत नः सुद्योत्मा जीराश्वो होता मन्द्रः शृणवच्चन्द्ररथः ।
स नो नेषन्नेषतमैरमूरोऽग्निर्वामं सुवितं वस्यो अच्छ ॥ १२ ॥
अस्ताव्यग्निः शिमीवद्भिरर्कैः साम्राज्याय प्रतरं दधानः ।
अमी च ये मघवानो वयं च मिहं न सूरो अति निष्टतन्युः ॥ १३ ॥ २ ॥
(ऋ. २. १४१.) इति ।

यद्यपि अत्र सूक्ते पञ्चमन्त्रात्मकः प्रथमो वर्गो एव प्रचुरं पठ्यते । किन्तु जपादिषु समग्रसूक्तपठनमेव सूक्तम् । अत एव प्राणाग्नेः सूक्तमित्युक्तम् ।

१ तथाच न्यासः–"प्राणाय हृदयाय नमः । अपानाय शिरसे स्वाहा । व्यानाय शिखायै वषट् । उदानाय कवचाय हुम् । समानाय अस्त्राय फट् " इति ।

२ तथाच पञ्चमन्त्राः—"प्राणाय नमः, "अपानाय नमः", "व्यानाय नमः", "उदानाय नमः", "समानाय नमः", इति ।

३ तथाच मन्त्रौ— दीर्घतमा औचथ्यः । जगती । सरस्वती भारती च ।
"गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्" (ऋ. १. १६४. ४१) इति ।
दीर्घतमा औचथ्यः । त्रिष्टुप् । सरस्वती भारती च ।
"यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि ।
यो रत्नधा वसुविद् यः सुदत्रः सरस्वति तमिह धातवे कः" इति च ।

उद्यद्दिवाकरसमूहनिभां स्वभक्तु-
[1]रङ्कस्थितामभयसद्वरबाहुयुग्माम्[2] ।
मुद्रां च तत्वदृशये वरपुस्तकं च
दोर्युग्मकेन दधतीं स्मरताऽत्मविद्याम् ॥ ६९ ॥

पादैर्व्यस्तैः समस्तैश्च तदङ्गानि विदो विदुः[3] ।

[ब्रह्माणीमन्त्रः-भारतीमन्त्रः ५१-५२]

स्वयमुद्देशनत्यन्तौ मन्त्रौ [4]द्वावपरौ तयोः[5] ॥ ७० ॥

मन्त्रा एते हरेः प्रीतिदायकाः सर्वकामदाः ।
[6]इष्टं दैवं हरिः साक्षाल्लक्ष्मीर्भाग्यस्य देवता ।
गुरुर्ब्रह्माऽथ वायुर्वा[7] विद्या देव्यौ प्रकीर्त्तिते ॥ ७१ ॥

तस्मादेते प्रिया विष्णोरन्तरङ्गतया सदा ।
[8]ज्ञेयाश्चैव प्रपूज्याश्च विष्णोः[9] प्रीतिमभीप्सता ॥ ७२ ॥

[शिवपञ्चाक्षरः-५३]

उद्देशनतियुङ्मन्त्रः स्वयमेव शिवस्य तु[10] ।

---

यद्यप्यनुक्रमणिकायामाद्यस्य मन्त्रस्य विश्वे देवा देवता इत्युक्तम् । मन्त्रे स्फुटं वाग्देवताप्रतिपादनात् तन्न ग्राह्यमिति भाति । देवताश्रुतिरेव देवतानिर्णये मुख्यं प्रमाणमित्यभिहितमृग्भाष्ये । द्वितीयमन्त्रे च सरस्वत्येव यद्यपि देवतात्वेन श्रूयते । तथाऽपि यैव भारती सैव सरस्वतीति तयोः सहैव स्तुतिर्भवति । अत एवाऽप्रीसूक्तेषु क्वचित् सरस्वती क्वचिद् भारती च साङ्कर्येण पठ्येते ।

१ "-रङ्के स्थिता-" इति प्र. पाठः । २ "-बाहुयुक्ताम्" इति क्वचित् ।

३ तथाच न्यासः—"गौरीर्मिमाय सलिलानि तक्षति हृदयाय नमः । एकपदी द्विपदी सा चतुष्पदी शिरसे स्वाहा । अष्टापदी नवपदी बभूवुषी शिखायै वषट् । सहस्राक्षरा परमे व्योमन् कवचाय हुम् । गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् अस्त्राय फट्" इति प्रथममन्त्रस्य । "यस्ते स्तनः शशयो यो मयोभूः हृदयाय नमः । येन विश्वा पुष्यसि वार्याणि शिरसे स्वाहा । यो रत्नधा वसुविद् यः सुदत्रः शिखायै वषट् । सरस्वति तमिह धातवे कः कवचाय हुम् । यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि । यो रत्नधा वसुविद् यः सुदत्रः सरस्वति तमिह धातवे कः अस्त्राय फट्" इति द्वितीयमन्त्रस्य । ४ "तावपरौ" इति क्वचित् ।

५ तथा च मन्त्रौ— "ब्रह्माण्यै नमः" इति "भारत्यै नमः" इति च पञ्चाक्षरौ ।

६ "इष्टदैवम्" इति क्वचित् । ७ "गुरू ब्रह्मा च वायुश्च" क्वचित् ।

८ "ध्येयाश्चैव" इति क्वचित् । ९ "विष्णोर्भक्तिमभीप्सता" इति क्वचित् ।

१० तथाच मन्त्रः—"नमः शिवाय" इति ।

वर्ण्णैरेतैस्तदङ्गानि[1] वामदेवो मुनिः स्मृतः ।
पङ्क्तिशब्दार्थविज्ञाने नहि च्छन्दसि संशयः ॥ ७३ ॥

ध्येयः पञ्चमुखो रुद्रः स्फटिकामलकान्तिमान् ।
विद्युच्छुभ्रासितरजःश्यामान्यस्य मुखानि तु ।
जटावबद्धेन्दुकलः प्रियायुङ् नागभूषणः ॥ ७४ ॥

मन्त्रेष्वेतेषु सर्वेषु वाच्यस्तारेण केशवः[2] ।
अन्तर्यामितया ध्येयः सर्वदेवेषु सर्वदा ॥ ७५ ॥

[पार्वतीपञ्चाक्षरः-५४]

स एव वनितालिङ्गः पार्वत्या मनुरुच्यते[3] ।
गौरी वराभयकरा ध्येया पीताम्बरा च सा ॥ ७६ ॥

[शेषमन्त्रः-५५]

स्वयमुद्देशनत्यन्तः पूर्वपूर्वः षडक्षरः ।
सनत्कुमारदृष्टोऽयं मनुः[4] शेषस्य कामदः[5] ॥ ७७ ॥

दधानो हलसौनन्दौ[6] श्वेतवर्ण्णः कृताञ्जलिः ।
सहस्रमूर्द्धाऽद्वितीयकर्ण्णभूषः प्रियायुतः ।
वनमाली नीलवासा ध्येयो विष्णोस्तु पृष्ठतः ॥ ७८ ॥

[गरुडमन्त्रः-५६]

व्यत्यस्तपक्षितारौ च स्वाहान्तो गारुडो मनुः[7] ।
[8]काश्यपोऽस्य मुनिर्ध्येयः सुधापूर्ण्णं हिरण्मयम् ॥ ७९ ॥

---

१ "वर्ण्णैरेतैः षडङ्गानि" इति क्वचित् पाठः प्रामादिकः । अस्य पञ्चाक्षरत्वात् । अत एव हि "पञ्चाक्षरा पङ्क्तिः" इति पङ्क्तिच्छन्द इत्युक्तम् । एतेन पूर्वोक्ता अपि पञ्चाक्षरा मन्त्रा व्याख्याताः । तथाच पञ्चाङ्गन्यासः— "नँ हृदयाय नमः । मँ शिरसे स्वाहा । शिँ शिखायै वषट् । वाँ कवचाय हुम् । यँ अस्त्राय फट्" इति ।

२ एतेन सर्वमन्त्राणामाद्यन्तयोस्तारमूलत्वं जपे नियतमित्युक्तं भवति । तथाहि योगदीपिका—"मन्त्राणां तारमूलत्वमनिर्देशेऽपि निश्चितम्" इति ।

३ तथाच मन्त्रः "नमः शिवायै" इति । "वामदेवो मुनिः । पङ्क्तिश्छन्दः । अक्षरैरङ्गानि" इति नारायणीयम् ।

४ "मन्त्रः शेषस्य" इति प्र. पाठः ।

५ तथाच मन्त्रः—"शेँ शेषाय नमः" इति । "गायत्री च्छन्दः । अक्षरैरङ्गानि" इति नारायणीयम् ।

६ "हलसौनन्दे" इति प्र. पाठः । सौनन्द इति मुसलम् ।

७ तथाच मन्त्रः "क्षिप ॐ स्वाहा" इति । "वर्ण्णैरङ्गानि । पङ्क्तिश्छन्दः" इति नारायणीयम् ।

८ "कश्यपोऽस्य" इति क्वचित् । कश्यप एव काश्यप इति व्याख्यातारः ।

दधानः कुम्भमभयं पीतशुक्लारुणो[1] हरिः ।
कृष्णश्चाऽ जानुतो नाभेः कण्ठात् कादन्त एव च ॥ ८० ॥

प्रियायुक् पुरतो विष्णोः पक्षतुण्डसमन्वितः ।
जङ्गमस्थावरविश्वहृदयं सर्वकामदः ॥ ८१ ॥

[दिक्पालमन्त्राः–५७–६५]

मन्त्राश्च लोकपालानां नमोऽन्ताः[2] सर्वकामदाः ।
[3]नीलरक्तासितश्वेतरक्तशुक्लाश्च वर्णतः ॥ ८२ ॥

सप्रियाः साभया वज्रशक्तिदण्डासिपाशिनः ।
गदाकुमुदशूलेष्टखड्गिनो[4] भूषणोज्ज्वलाः ॥ ८३ ॥

[स्कन्दमन्त्रः–६६]

अग्निश्च स्वयमुद्देशी सनमः स्कन्दवाचकः[5] ।
[6]कौशिकोऽस्य मुनिर्वह्निवर्णः षण्मुख उज्ज्वलः ।
धनुःशक्तिधरो ध्येयः कामदो भयनाशनः ॥ ८४ ॥

[सूर्यमन्त्रः–६७]

ह्रस्वः कृपालुः[7] सेतश्च स्वयमन्यः स्वयं तथा[8] ।
सतारोऽष्टाक्षरः सौरः[9] क्रमव्युत्क्रमतः पदैः ॥ ८५ ॥

---

१ "पीतः शुक्लोऽरुणो–" इति प्र. पाठः । हरिरिति हरिद्वर्णः ।

२ तथाच मन्त्राः—"इन्द्राय नमः", "अग्नये नमः", "यमाय नमः", "निरृतये नमः", "वरुणाय नमः", "वायवे नमः", "कुबेराय नमः", "सोमाय नमः", "ईशानाय नमः" इति । पञ्चाक्षराणां पङ्क्तिः षडक्षराणां गायत्री च्छन्दः । वर्णैरङ्गानि । "सर्वत्र ब्रह्मा ऋषिः" इति नारायणीयम् ।

३ "पीतरक्तासितश्वेतशुक्लरक्ताश्च वर्णतः" इति प्र. पाठः । "इन्द्रो नीलवर्णः । अग्नी रक्तवर्णः । यमनिरृती असितौ । वरुणः श्वेतवर्णः । वायुकुबेरौ रक्तवर्णौ । चन्द्रेशानौ शुक्लौ" इति नारायणीयम् ।

४ "शूलर्ष्टिखड्गिनो–" इति प्र. पाठः । "–शूलेष्टिखड्गिनो–" इति क्वचित् ।

५ तथाच मन्त्रः- "रँ स्कन्दाय नमः" इति ।

६ कौशिको विश्वामित्रः । गायत्री च्छन्दः । वर्णैरङ्गानि ।

७ "कृपालुः" इति प्र. पाठः ।

८ "–मन्यद्द्वयम्" इति क्वचित् ।

९ तथाच मन्त्रः- "ॐ घृणिः सूर्य आदित्यः" इति । अस्य देवनागो मुनिरिति शारदातिलके स्थितम् । गायत्री च्छन्दः ।

अङ्गानि[1] पद्मयुगळ[2]धरो ध्येयोऽरुणो रविः ।
सर्वव्याधिहरः श्रीदो वृष्टिदोऽयं मनुः स्मृतः ॥ ८६ ॥

[क्षिप्रप्रसादगणपतिमन्त्रः-६८]

मोनयदासाप्रप्रक्षि व्यत्यस्तो विघ्नराण्मनुः[3] ।
रक्ताम्बरो रक्ततनू रक्तमाल्यानुलेपनः ॥ ८७ ॥

[4]लम्बोदरो गजमुखः पाशदन्ताङ्कुशाभये ।
बिभ्रद् ध्येयो विघ्नहरः[5] कामदस्त्वरया ह्ययम् ॥ ८८ ॥

तत्रतत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रबोधयन् ।
एक एव महाशक्तिः कुरुते सर्वमञ्जसा ॥ ८९ ॥

[धन्वन्तरिमन्त्रः-६९]

खयमुद्देशवान् पूर्ववर्णपूर्वो नमोयुतः[6] ।
धान्वान्तरो महामन्त्रः[7] संसृतिव्याधिनाशनः[8] ॥ ९० ॥

चन्द्रौघकान्तिममृतोरु[9]करैर्जगन्ति
सञ्जीवयन्तममितात्मसुखं परेशम् ।
ज्ञानं सुधाकलशमेव च सन्दधानं
शीतांशुमण्डलगतं स्मरताऽत्मसंस्थम् ॥ ९१ ॥

मूर्ध्नि स्थितादमुत एव सुधां स्रवन्तीं[10]
भ्रूमध्यगाच्च तत एव च तालुसंस्थात् ।
हार्दाच्च नाभिसदनादधर[11]स्थिताच्च
ध्यात्वाऽभिपूरिततनुर्दुरितं निहन्यात् ॥ ९२ ॥

---

१ तथाच न्यासः– "घृणिः हृदयाय नमः । सूर्यः शिरसे स्वाहा । आदित्यः शिखायै वषट् । आदित्यः कवचाय हुम् । सूर्यः नेत्राभ्याम् वौषट् । घृणिः अस्त्राय फट्" इति ।

२ "–युगलधरो–" इति प्र. पाठः ।

३ तथाच मन्त्रः– "क्षिप्रप्रसादाय नमः" इति । "मन्त्रगतपदयोस्त्रिवारावृत्याऽङ्गानि" इति नारायणीयम् ।

४ "–महोदरो–" इति प्र. पाठः ।

५ "–हरस्त्वरया कामदो ह्ययम्" इति क्वचित् ।

६ "पूर्वपूर्वो हृदयसंयुतः" इति प्र. पाठः । "पूर्ववर्णो हृदयसंयुतः" इति क्वचित् ।

७ तथाच मन्त्रः– "धँ धन्वन्तरये नमः" इति ।

८ इतः परं प्र. पाठे– "अत्रोक्तसर्वमन्त्राणां नायकोपलसंनिभः" इत्यर्द्धमधिकं प्रक्षिप्तम् ।

९ "–ममृतात्मकरै–" इति प्र. पाठः ।

१० "स्रवन्तम्" इति प्र. पाठः ।

११ "–दधरास्थिता–" इति क्वचित् ।

[1]अज्ञानदुःखभयरोगमहाविषाणि
योगोऽयमाशु विनिहन्ति सुखं च दद्यात्।
उन्मादविभ्रमहरः परतश्च सान्द्र-
[2]मानन्दमेव पदमापयति स्म नित्यम् ॥ ९३ ॥

ध्यात्वैव हस्ततलगं स्वमृतं स्रवन्तं
देवं स यस्य शिरसि स्वकरं निधाय।
आवर्त्तये[3]न्मनुमिमं स च वीतरोगः
पापादपैति मनसा यदि भक्तिनम्रः ॥ ९४ ॥

शतं सहस्रमयुतं लक्षं वाऽऽरोगसङ्क्षयात्।
इममेव जपेन्मन्त्रं साधूनां दुःखशान्तये ॥ ९५ ॥

ज्वरदाहादिशान्त्यर्थं तर्प्पयेन्मनुनाऽमुना।
ध्यात्वा हरिं जले सप्तरात्रा[4]ज्जूर्त्तिर्विनश्यति ॥ ९६ ॥

अयुतामृतसमिद्धोमाद् गोघृतक्षीरसंयुतात्।
[5]सर्वरोगा विनश्यन्ति विमुखो न हरेर्यदि ॥ ९७ ॥

भूताभिचारशान्त्यर्थमपामार्ग्गाहुतिक्रिया।
द्विगुणाऽमृतया पश्चात् केवलेन घृतेन वा ॥ ९८ ॥

आयुर्विवृद्धये नित्यं जन्मनक्षत्र एव वा।
चतुश्चतुर्भिर्दूर्वाभिः क्षीराज्याक्ताभिरिष्यते ॥ ९९ ॥

[6]सर्वक्रिया हरौ भक्तं हरिभक्तैः स्वनुष्ठिताः।
गुरुभक्तैः सदाचारैः फलन्त्यद्धा नचान्यथा ॥ १०० ॥

ब्रह्मान्ता गुरवश्चैव सम्प्रदायप्रवर्त्तकाः।
तत्तद्गुणानुसारेण पूज्या ध्येयाश्च[7] कृत्स्नशः ॥ १०१ ॥

सर्वेभ्योऽभ्यधिका भक्तिर्विष्णौ स्यादतिनिश्चला।
लक्ष्मीब्रह्मादिषु ततः क्रमेण स्यात् सुभाविता।
एवं विद्याः फलिष्यन्ति नान्यथा तु कथञ्चन ॥ १०२ ॥

---

१ "अज्ञानदोषभयदुःखमहा–" इति क्वचित्। २ "–स्वानन्द–" इति प्र. पाठः।
३ "आवर्त्तयन्मनु–" इति प्र. पाठः। ४ "–रात्रिंजूर्त्ति–" इति प्र. पाठः।
५ "सर्वे रोगा–" इति प्र. पाठः। ६ "सर्वाः क्रिया–" इति प्र. पाठः।
७ "पूज्या मान्याश्च" इति प्र. पाठः। "मान्याश्च सर्वशः" इति क्वचित्।

शुभान् ध्यायन्ति ये कामान् गुरुदेवप्रसादजान् ।
इतरानात्मपापोत्थांस्तेषां[1] विद्या फलिष्यति ॥ १०३ ॥

मुक्तावपि च संसारे नाऽऽत्मनो विष्णुतां क्वचित् ।
ब्रह्मरुद्रादिभावं वा साम्यं वाऽधिक्यमेव वा ॥ १०४ ॥

अतद्वशत्वमथवा यः स्मरेत् स तु सिद्धिभाक् ।
नान्यथा सिद्धिमाप्नोति कल्पकोटिशतैरपि ॥ १०५ ॥

स्मृत्वा गुरुं पूर्वगुरुमादिमूलगुरू[2] तथा ।
देवतां वासुदेवं च विद्याभ्यासी तु सिद्धिभाक् ॥ १०६ ॥

अवज्ञाता गुरुणां च देवतानां न सिद्ध्यति ।
प्रयाति च तमो घोरं मन्त्रावज्ञाकृदेव च ॥ १०७ ॥

यस्तारतम्यवेत्ता स्याद् गुरूणां देवतास्वपि ।
भक्तिमान् गुरुदेवेषु तद्भक्तेषु च सिद्ध्यति ॥ १०८ ॥

गुरुदेवप्रतीपानां विमुखस्तत्प्रिये रतः ।
अकामक्रोधलोभश्च नचिरात् सिद्धिमाप्नुयात् ॥ १०९ ॥

सकामेभ्योऽमितगुणा याऽकामैस्तु[3] कृता क्रिया[4] ।
तस्मादकाम एवालं भजेद् विष्णुं सनातनम् ॥ ११० ॥

[वेदोक्तधन्वन्तरिमन्त्रः—७०]

अयं मे हस्त इति च मन्त्रः[5] पूर्वोक्तवत् स्मृतः ।
अत्रोक्तास्तु क्रियाः[6] पूर्वमन्त्रेष्वप्युपलक्षणम् ॥ १११ ॥

---

१ "इतरान् स्वात्मदोषोत्थांस्तेषाम्" इति क्वचित् । "अशुभानात्मपापोत्थांस्तेषाम्" इति च क्वचित् ।

२ "गुरूंस्तथा" इति प्र. पाठः । "—गुरुं तथा" इति क्वचित् ।

३ "गुणा ह्यकामैस्तु" इति प्र. पाठः ।

४ "कृताः क्रियाः" इति प्र. पाठः ।

५ तथाच मन्त्रः—बन्धुश्रुतबन्धुविप्रबन्धवो गौपायना ऋषयः । अनुष्टुप् छन्दः । धन्वन्तरिर्देवता ।

"अयं मे हस्तो भगवानयं मे भगवत्तरः ।
अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः" इति । (ऋ. १०. ६०. १२.)

यद्यप्यनुक्रमणिकायां मन्त्रस्यास्य हस्तो देवतेत्युक्तम् । अन्तर्यामिविवक्षयैतदुदितम् । कथमन्यथा जडस्य हस्तस्य देवतात्वम्? तथाच जापकहस्तसन्निहितो भगवान् धन्वन्तरिरेव देवतेति सूक्तम् । पादैर्व्यस्तैः समस्तैश्च न्यासः ।

६ "क्रियाः सर्व—" इति प्र. पाठः ।

विजयस्तम्भनादीनि नारसिंहैर्विशेषतः ।
जामदग्न्यैश्च कार्याणि राघवैर्यादवैरपि ।
वाराहैः स्तम्भनं क्षिप्रं श्रीकराः कथिताः पुरा ॥ ११२ ॥

बहुबाहुं महाकायमुद्युक्तं चोद्यतायुधम् ।
स्मरन् विजयमाप्नोति स्तम्भनादींश्च कारयेत् ॥ ११३ ॥

वसुपूर्णकरं रत्नपर्वतस्थं[1] विभावयन् ।
वसुसिद्धिमवाप्नोति सेव्यमानमजादिभिः ।
श्रिया विभूतिभिर्युक्तं भावयन् भूतिमाप्नुयात् ॥ ११४ ॥

यद्यन्मनोगतं तस्य तत्तदाप्नोत्यसंशयम् ।
तथातथा हरिं ध्यायन् क्रियास्तास्ताश्च साधयन् ॥ ११५ ॥

श्रियो पद्मानि जुहुयात् सम्प्रीत्या उत्पलानि च ।
शरान् जयाय जुहुयादभिमन्त्र्य प्रयोजयेत् ॥ ११६ ॥

विद्यायै मन्त्रितं वारि वचां वा तुळसीमपि[2] ।
ब्राह्मीं घृष्टं[3] सुवर्ण्णं वा शतावृत्त्या तु नित्यशः ॥ ११७ ॥

अकुर्वंश्च क्रिया[4] भक्त्या निरपेक्षो भजन् हरिम् ।
सर्वमेतदवाप्नोति विशेषेण न संशयः ॥ ११८ ॥

सृष्टिस्थितिलयन्यासाः प्रतिलोमानुलोमतः[5] ।
स्थित्यन्ता एव वर्ण्णानां श्रेष्ठा एव[6] चतुर्द्दश ।
संहृत्यन्ता मोक्षिणां तु[7] एकार्विंशतिरेव वा ॥ ११९ ॥

पादहृत्केषु नाभ्यास्ययुतं[8] च सललाटकम् ।
सनासिकादृग्जान्वोश्च[9] सश्रोत्रं सोरुकं तथा ॥ १२० ॥

सोरस्कं च सकण्ठं च सभुजद्वयमेव च ।
सगण्डयुग्मं साळीकं[10] सतुन्द[11]क्रोडकं तथा ॥ १२१ ॥

---

१ "रत्नमण्डपस्थं विभावयेत्" इति क्वचित् ।
२ "तुलसीमपि" इति प्र. पाठः ।
३ "घृतम्" इति प्र. पाठः ।
४ "क्रियां भक्त्या" इति प्र. पाठः ।
५ "प्रातिलोम्यानुलोमतः" इति प्र. पाठः ।
६ "एवं चतु-" इति प्र. पाठः ।
७ "मोक्षिणां च" इति प्र. पाठः ।
८ "-युक्तं च" इति प्र. पाठः ।
९ "सनासिकासदृग्जान्वोः सश्रोत्रम्" इति प्र. पाठः ।
१० "सालीकम्" इति प्र. पाठः । "साळीकं सालकम्" इति नारायणीये । वस्तुतस्तु अलकललाटयोः प्रान्ताभागोऽळिकमिति । अळिकमेवाळीकम् । "अळिकं ह्रस्वदीर्घमद्वयम्" इति राजदेवः ।
११ "सतुण्डक्रोडकम्" इति प्र. पाठः ।

सतळं[1] च सगुह्यं च सपार्श्वद्वयमेव च ।
सदोर्द्वयं व्यापकं च गळ[2]पार्श्वद्वयेन च ॥ १२२ ॥

ककुदा[3] स्तनद्वयेनापि पृष्ठमूलेन सर्वशः ।
न्यासो यथाक्रमं प्रोक्तो मन्त्रेष्वेतेषु कृत्स्नशः[4] ।
प्रतिमायामात्मनि च न्यासोऽयं सन्निधानकृत् ॥ १२३ ॥

---

१ "समूलम्" इति प्र. पाठः । २ "गल–" इति प्र. पाठः ।
३ "ककुत्स्तन–" इति प्र. पाठः ।
४ एकादिद्वात्रिंशदर्णान्तानां मन्त्राणां न्यासक्रमः सम्प्रदायविद्भिः श्लोकात्मना ग्रथितो यथा—

"एकद्वित्र्यर्णमन्त्रांस्तान् पादहृत्केषु विन्यसेत् ॥ * ॥

पन्नाभिहृन्मस्तकेषु चतुर्वर्णांश्च संहृतौ ॥ * ॥

पन्नाभिहृद्वक्त्रकेषु पञ्चवर्णांश्च संहृतौ ॥ * ॥

अङ्घ्रिनाभिहृदास्येषु ललाटे के षडक्षरम् ॥ * ॥

पादे नाभौ हृदि वक्त्रे नासिका च ललाटिका ।
सप्ताक्षराणां स्थानानि मस्तकेन समं विदुः ॥ * ॥

पादनाभिहृदास्येषु नसि नेत्रललाटयोः ।
मस्तकेऽष्टार्णमन्त्राणां वर्णन्यासं विदो विदुः ॥ * ॥

पज्जानुनाभिहृद्वक्त्रं प्राणनेत्रललाटकाः ।
मूर्द्धा च नववर्णानां स्थानानि मुनयो विदुः ॥ * ॥

पज्जानुनाभिहृद्वक्त्रघ्राणश्रुतिदृशः क्रमात् ।
ललाटमस्तकं वर्णदशकस्थानमुच्यते ॥ * ॥

न्यसेदेकादशार्णांस्तु पादजानूरुनाभिषु ।
हृदास्यघ्राणकर्णेषु दृग्ललाटशिरस्सु च ॥ * ॥

पज्जानूरुषु नाभौ च हृदुरोवदनेषु च ।
नासिकाश्रोत्रनेत्रेषु ललाटे मस्तके न्यसेत् ।
द्वादशाक्षरमन्त्राणामक्षराणि यथाक्रमम् ॥ * ॥

पादयोर्जानुनोरुर्वोर्नाभौ हृदि तथोरसि ।
कण्ठे वक्त्रे नासिकायां श्रोत्रे नेत्रललाटयोः ।
के त्रयोदशवर्णानां न्यासोऽयं समुदीरितः ॥ * ॥

पादयोर्ज्जानुनोरूर्वोर्न्नाभौ हृदि तथोरसि ।
भुजे कण्ठे वक्त्रनसोः श्रोत्रे नेत्रललाटयोः ।
के चतुर्द्दशवर्ण्णानां न्यासोऽयं समुदीरितः ॥ * ॥

पञ्चादशार्ण्णमन्त्राणां द्विभुजग्रहणेन तु ॥ * ॥

पादयोर्ज्जानुनोरूर्वोर्न्नाभौ हृदि तथोरसि ।
भुजद्वये च कण्ठे च वक्त्रे गण्डे नसोः श्रुतौ ।
नेत्रे ललाटे शिरसि षोडशार्ण्णमनोर्न्यसेत् ॥ * ॥

अयं सप्तदशार्ण्णानां न्यासो गण्डयुगेन च ॥ * ॥

पादयोर्ज्जानुनोरूर्वोर्न्नाभौ हृदि तथोरसि ।
भुजद्वये च कण्ठे च वक्त्रे गण्डयुगे नसि ।
श्रुतिनेत्रललाटेषु त्वळिके मूर्ध्नि विन्यसेत् ।
अष्टादशार्ण्णमन्त्राणां वर्ण्णन्यासमिमं विदुः ॥ * ॥

पादजानूरुतुन्देषु नाभौ हृदि तथोरसि ।
भुजद्वये च कण्ठे च वक्त्रे गण्डयुगे नसि ॥
श्रुतिनेत्रललाटेषु त्वळिके मूर्ध्नि विन्यसेत् ।
एकोनविंशद्वर्ण्णानां वर्ण्णन्यासः प्रकीर्त्तितः ॥ * ॥

पादजानूरुतुन्देषु नाभौ हृदि तथोरसि ।
क्रोडद्विभुजकण्ठेषु वक्त्रे गण्डयुगे नसि ॥
श्रुतिनेत्रललाटेषु त्वळिके मूर्ध्नि विन्यसेत् ।
विंशदक्षरमन्त्राणां वर्ण्णन्यासमिमं विदुः ॥ * ॥

पज्जानूरुमूलतुन्दनाभिहृत्सु तथोरसि ।
क्रोडद्विभुजकण्ठेषु वक्त्रे गण्डयुगे नसि ॥
श्रुतिनेत्रललाटेषु त्वळिके मूर्ध्नि विन्यसेत् ।
एकविंशतिवर्ण्णानां वर्ण्णन्यासविधिर्म्मतः ॥ * ॥

पज्जानूरुमूलगुह्यतुन्दे नाभौ हृदोरसि ।
क्रोडद्विभुजकण्ठेषु वक्त्रे गण्डयुगे नसि ॥
श्रुतिनेत्रललाटेषु ह्यळिके मूर्ध्नि विन्यसेत् ।
द्वाविंशद्वर्ण्णमन्त्राणां वर्ण्णन्यासविधिर्म्मतः ॥ * ॥

पादयोर्ज्जानुनोरूर्वोर्म्मूले गुह्येऽथ पार्श्वयोः ।
तुन्दे नाभौ मन्त्रवर्ण्णान् न्यसेद् हृदि तथोरसि ॥

क्रोडद्विभुजकण्ठेषु वक्त्रे गण्डयुगे नसि ।
श्रुतिनेत्रललाटेषु ह्यळिके मस्तकेऽपि च ।
त्रयोविंशार्णमन्त्रस्य न्यासोऽयं समुदाहृतः ॥ * ॥

पादयोर्जानुनोरूर्वोर्म्मूले गुह्ये द्विपार्श्वयोः ।
तुन्दे नाभौ न्यसेद् वर्णान् न्यसेद् हृदि तथोरसि ॥
क्रोडद्विभुजकण्ठेषु वक्त्रे गण्डयुगे नसि ।
श्रुतिनेत्रललाटेषु ह्यळिके मस्तकेऽपि च ।
चतुर्विंशार्णमन्त्रस्य न्यासोऽयं समुदाहृतः ॥ * ॥

पादयोर्जानुनोरूर्वोर्म्मूले गुह्येऽथ पार्श्वयोः ।
तुन्दे नाभौ हृद्युरसि वर्णान् दोष्णोश्च विन्यसेत् ॥
क्रोडद्विभुजकण्ठेषु वक्त्रे गण्डयुगे नसि ।
श्रुतिनेत्रललाटेषु ह्यळिके मस्तकेऽपि च ॥
पञ्चविंशार्णमन्त्राणां न्यासोऽयं समुदीरितः ॥ * ॥

षड्विंशदर्णमनुषु न्यासो दोष्णोर्विभागशः ॥ * ॥

सप्तविंशार्णमन्त्राणां व्यापकान्तेन विन्यसेत् ॥ * ॥

पादयोर्जानुनोरूर्वोर्म्मूले गुह्ये द्विपार्श्वयोः ।
तुन्दे नाभौ हृदुरसोः वर्णान् दोष्णोर्द्वयोर्न्यसेत् ।
क्रोडद्विभुजकण्ठेषु गळे पार्श्वद्वये मुखे ॥
द्विगन्डयोर्नसि श्रोत्रदृग्ललाटाळिकेषु च ।
अष्टाविंशार्णमन्त्रस्य न्यासोऽयं समुदाहृतः ॥ * ॥

पादयोर्जानुनोरूर्वोर्म्मूले गुह्ये द्विपार्श्वयोः ।
तुन्दे नाभौ हृदुरसोः वर्णान् दोष्णोर्द्वयोर्न्यसेत् ॥
क्रोडद्विभुजकण्ठेषु गळपार्श्वककुन्मुखे ।
द्विगण्डयोर्न्नसि श्रोत्रे दृग्ललाटाळिकेषु च ।
एकोनत्रिंशदर्णानां मनोर्न्यासः प्रकीर्त्तितः ॥ * ॥

पादयोर्जानुनोरूर्वोर्म्मूले गुह्ये द्विपार्श्वयोः ।
तुन्दे नाभौ हृत्स्तनोरोद्विभुजेषु च विन्यसेत् ॥
क्रोडद्विभुजकण्ठेषु गळपार्श्वककुन्मुखे ।
द्विगण्डयोर्नसि श्रोत्रे दृग्ललाटाळिकेषु च ।
त्रिंशदर्णमनोर्वर्णानेषु स्थानेषु च क्रमात् ॥ * ॥

एकत्रिंशतिवर्णस्य न्यासः स्तनविभागतः ॥ * ॥

[यन्त्रविधिः]

वीजान्तःसाद्ध्यमद्धयं च विभक्तदळ[1]मन्त्रयुक् ।
वर्ण्णानुप्रतिलोमेतं[2] वृत्तं भूपुरसंयुतम् ।
[3]वीजसन्दब्धकोणं च यन्त्रं रक्षादिसाधकम् ॥ १२४ ॥

समं तत्सर्वमन्त्रेषु जतं धार्यं तु वा भुवि ।
विलिख्य मण्डले वा तत्पूजयेद्धरिमञ्जसा ॥ १२५ ॥

[विद्यागुरुः]

[4]प्रतिमोक्तलक्षणैर्यावद्युक्त आचार्य उत्तमः ।
सर्ववित्तपसा युक्त आज्ञाशक्तियुतो हरेः ॥ १२६ ॥

यावद्भक्तो यथालब्धैर्ग्गुणैर्युक्तो हि[5] वैष्णवः ।
गुरुः सत्सम्प्रदायज्ञस्तारतम्येन सिद्धिदः ॥ १२७ ॥

उत्तमादुत्तमा सिद्धिर्धर्म्ममोक्षादिषु स्फुटा[6] ।
तस्मादुत्तम आचार्ये लब्धे नातोऽवरं व्रजेत् ॥ १२८ ॥

एकस्य शिष्यतां प्राप्य तदाज्ञां न विना समम् ।
अवरं वा व्रजेदुच्चगुणश्चेन्नैव दुष्यति ॥ १२९ ॥

विशेषतो गुणश्च स्याद् देवेष्वप्येवमेव हि ।
तस्मादुत्तममाचार्यं देवेशं चाऽश्रयेद्धरिम् ॥ १३० ॥

[उपासनाविधिः]

अपरोक्षदृशेरेव यस्मान्मोक्षो नचान्यथा ।

---

पादजानूरुमूलेषु गुह्ये पृष्ठे द्विपार्श्वयोः ।
तुन्दे नाभौ हृदि द्वन्द्वे स्तनयोरुरसि न्यसेत् ॥
द्विदोष्णोः क्रोडके द्वन्द्वे भुजयोः कण्ठकूबरे ।
गळस्य पार्श्वद्वितये ककुदास्ये द्विगण्डयोः ॥
घ्राणश्रोत्रे दृग्ललाटाळिके मूर्द्धसु भूपतेः ।
वराहमन्वक्षराणां व्यापकं चान्तिमं भवेत् ।
अनुष्टुभामयं न्यासः सर्वासां व्यापकं विना ॥ * ॥ इति ।

१ "दल—" इति प्र. पाठः ।
२ "—नुप्रातिलोम्येन वृत्तम्" इति प्र. पाठः । "—नुप्रतिलोमेन वृत्तम्" इति क्वचित् ।
३ "भूतसन्दब्ध—" इति क्वचित् ।
४ "प्रतिमालक्षणै—" इति प्र. पाठः ।
५ "—युक्तोऽथ वैष्णवः" इति प्र. पाठः । "—युक्तोऽथ वैष्णवैः" इति क्वचित् ।
६ "स्फुटम्" इति प्र. पाठः ।

अपरोक्षदृशिश्चैव श्रवणान्मननादनु ।
सम्यङ्निश्चिततत्वस्य निदिध्यासनया भवेत् ॥ १३१ ॥

द्विविधा सा च सम्प्रोक्ता विष्णुशास्त्रावमर्शनम् ।
एकं ध्यानं हरेरन्यच्चत्वार्यङ्गानि तत्र[१] च ।
यमश्च नियमश्चाऽसा[२] प्राणायाम इतीरितः[३] ॥ १३२ ॥

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
यमाः शौचं तपस्तुष्टिः स्वाध्यायो हरिपूजनम् ।
नियमा वीरपद्मे च स्वस्तिकाद्यानि चाऽसनम् ॥ १३३ ॥

रेचकः पूरकश्चैव कुम्भकश्च त्रिधा स्मृतः ।
प्राणायामः स्मृतिं विष्णोर्विना नियम उच्यते ॥ १३४ ॥

अधीतिः स्मृतियुक्ता तु[४] निदिध्यासनमेव हि ।
प्राणायामेऽपि[५] विष्णोर्यत् स्मरणं ध्यानमेव तत् ॥ १३५ ॥

[६]आसा शौचं प्राणयामो निष्परिग्रहपूर्वकाः ।
तपआद्याः क्रमात् सर्वे उत्तरोत्तरतोऽधिकाः ॥ १३६ ॥

[७]सर्वस्माच्छ्रवणाद्यास्तु मुख्या मुक्तिप्रसाधने ।
अज्ञस्य श्रवणं श्रेष्ठमयुक्तेर्म्मननं तथा ॥ १३७ ॥

ध्यानं निश्चिततत्वस्य तस्माच्छास्त्रावमर्शनम् ।
[८]वरं दशगुणं तस्माद् व्याख्यैकस्य शतोत्तरा ।
अपरोक्षदृशाऽप्येषा कर्त्तव्या विष्णुतुष्टिदा ॥ १३८ ॥

य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ १३९ ॥

नच तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता नच मे तस्मादन्यः प्रियतरो भुवि ॥ १४० ॥

शौचासने त्वङ्गमात्रं न पृथग् धर्म्मकारणम् ।
प्राणायामादयस्तुष्टिपर्यन्ता द्विगुणाधिकाः ॥ १४१ ॥

---

१ "तस्य च" इति प्र. पाठः ।
२ "नियमश्चासौ" इति क्वचिन्मुद्रितः पाठः प्रामादिकः । ३ "इतीरिताः" इति क्वचित् ।
४ "अधीतिस्मृतियुक्तो हि निदि-" इति प्र. पाठः । "अधीतिः स्मृतियुक्ता हि" इति क्वचित् ।
५ "प्राणयामे च" इति प्र. पाठः । ६ "आसाम्" इति प्र. पाठः प्रामादिकः ।
७ "सर्वतः श्रवणा-" इति प्र. पाठः । ८ "स्वयं दशगुणम्" इति प्र. पाठः ।

स्वाध्यायोऽतः कोटिगुणस्ततोऽनन्तगुणा हरेः ।
[1]पूजाऽतस्त्रिगुणं ध्यानमिति धर्म्मक्रमः स्मृतः ॥ १४२ ॥

[आसनम्]

ऊर्वोरधः पदोरूर्ध्वं विभागेनेति च त्रिधा ।
आसनत्रयमुद्दिष्टं मन्त्रस्मरणपूर्वकम् ॥ १४३ ॥

[प्राणायामः]

द्विगुणोत्तरं रेचकादि षोडशादिक्रमेण तु ।
मात्राणां ह्रस्ववर्ण्णस्य कालो मात्रेति शब्द्यते[2] ॥ १४४ ॥

क्रमेणैवाभ्यसेन्मात्रावृद्धिमेकाग्रधीः पुनः ।
रेचयित्वा दक्षिणतः पूरयित्वा तु[3] वामतः ।
[4]कुम्भकं च सुषुम्नायां विष्णुं वायुं च संस्मरेत् ॥ १४५ ॥

[नाडीचक्रम्]

मूलाधारं समारभ्य त्वामूर्द्धानमृजु स्थिता ।
मध्ये सुषुम्ना विज्ञेया वज्रिकाऽऽर्याऽवभासिनी[5] ।
वैद्युता ब्रह्मनाडीति सैव पञ्चप्रभेदिनी ॥ १४६ ॥

पृष्ठवामाग्रदक्षान्तर्भेदास्ते च क्रमेण तु ।
[6]हरिर्न्नीलः सितः पिङ्गो लोहितश्चात्र केशवः ।
प्रद्युम्नादिस्वरूपेण ध्येयः सिद्धिमभीप्सता ॥ १४७ ॥

मूले च नाभौ हृदयेन्द्रयोनि-
भ्रूमध्यमूर्द्धद्विषडन्तकेषु ।
चतुःषडष्टद्विचतुर्द्विषट्क-
दलेषु पद्मेषु सितारुणेषु ।
पञ्चात्मकोऽसौ भगवान् सदैव
ध्येयो हृदन्तान्यरुणानि तानि ॥ १४८ ॥

त्रिकोणवह्नौ च षडश्रवायौ[7]
द्विस्तावदत्ररविवृत्तशाशिस्थ[8]वह्नौ ।

---

१ "पूजा तत्त्रिगुणम्" इति प्र. पाठः ।
२ "मात्रेति चोच्यते" इति क्वचित् ।
३ "-त्वा च वामतः" इति प्र. पाठः ।
४ "कुम्भकश्च" इति क्वचित् ।
५ "-र्या प्रकाशिका" इति क्वचित् प्र. पाठः ।
६ "हरिन्नीलः" इति क्वचित् । हरिरिति हरिद्वर्ण्णः ।
७ "षडस्रवायौ" इति प्र. पाठः ।
८ "-शशिनिवह्नौ" इति प्र. पाठः ।

वृत्ते विधावपि विचिन्त्यमिदं दशार्द्ध-
रूपं सितं तदखिलं हृदयात् परस्थम् ॥ १४९ ॥

इडा च पिङ्गळा[1] चैव वज्रिका धारणी[2] तथा ।
सुषुम्नायाश्चतुर्दिक्षु वज्रिकाद्यासु तत्र च ।
चतुर्म्मूर्त्तिः स भगवान् हृदये संव्यवस्थितः ॥ १५० ॥

द्वासप्ततिसहस्राणि नाड्योऽन्यास्तु प्रधानतः ।
बृहतीसहस्रस्पर्शानामृचां वाच्योऽत्र केशवः ॥ १५१ ॥

रूपाणां लक्षणं तेषां रहस्यत्वान्न कत्थ्यते ।
विष्णुना ब्रह्मणे प्रोक्तं ग्रन्थसङ्कोचतस्तथा ॥ १५२ ॥

[धारणा–ध्यानं–समाधिः]

खण्डस्मृतिर्द्धारणा स्यादखण्डा ध्यानमुच्यते ।
अप्रयत्नात् समाधिश्च दर्शनं चिरया तया[3] ।
अथवा सततं शास्त्रविमर्शेन भविष्यति ॥ १५३ ॥

परमस्नेहसंयुक्तयथार्त्थज्ञानतो भवेत् ।
सा भक्तिरिति विज्ञेया साधनं भोगमोक्षयोः ॥ १५४ ॥

मुख्यमेषैव नान्यत्[4] स्यात् सर्वं व्यर्त्थं तया विना ।
सैकाऽप्यभीष्टफलदा मोक्षो दर्शनयुक्तया ॥ १५५ ॥

दर्शनं च तया हीनं व्यर्त्थमन्यत् किमुच्यते ।
योग्यं तु दर्शनं नैव तया हीनं भविष्यति ॥ १५६ ॥

आनन्दचित्सदितिपूर्वगुणैः समस्तै-
र्म्मत्स्यादिभिर्विधिपरैर्भगवान् क्रमेण ।
ध्यातोऽधिकैरधिगुणोऽधिकमेव सौख्यं
मुक्तौ ददाति सततं परमस्वरूपः ॥ १५७ ॥

निर्द्दोषाखिलसम्पूर्णगुणेन हरिणा स्वयम् ।
ब्रह्मणे कथितात् तन्त्रसारादुद्धृत्य सादरम् ।
आनन्दतीर्थमुनिना कृतो ग्रन्थोऽयमञ्जसा ॥ १५८ ॥

---

१ "पिङ्गला" इति प्र. पाठः । २ "धारिणी" इति प्र. पाठः ।
३ "चिरयाऽनया" इति क्वचित् ।
४ "नान्या स्यात्" इति क्वचित् । "मुख्यमेषा नचान्या स्यात्" इति चान्यत्र ।

ग्रन्थोऽयं पाठमात्रेण सकलाभीष्टसिद्धिदः ।
किमु ज्ञानादनुष्ठानादुभयस्मात् पुनः किमु ॥ १५९ ॥

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
वट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्म्मध्वी यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥ १६० ॥

अशेषदोषोज्झितपूर्ण्णसद्गुणं
सदा [1]विशेषावगतोरुरूपम् ।
नमामि नारायणमप्रतीपं
सदा प्रियेभ्यः प्रियमादरेण ॥ १६१ ॥

इति श्रीमदानन्दतीर्थभगवत्पाविरचिते
श्रीमत्तन्त्रसारसङ्ग्रहे चतुर्थोऽध्यायः

समाप्तोऽयं ग्रन्थः

---

[आदितः श्लोकाः—३९१]

---

१ "विशेषापगतोरु—" इति प्र. पाठः ।

# सदाचारस्मृतिः

ॐ ॥ यस्मिन् सर्वाणि कर्म्माणि सन्न्यस्याद्ध्यात्मचेतसा ।
निराशीर्न्निर्म्ममो[१] याति परं जयति सोऽच्युतः ॥ १ ॥

स्मृत्वा हरिं[२] समुत्थाय कृतशौचो यथाविधि ।
धौतदन्तः समाचम्य स्नानं कुर्याद् विधानतः ॥ २ ॥

उद्धृतेति मृदाऽऽलिप्य द्विषडष्टषडक्षरैः ।
त्रिर्न्निमज्याऽप्यसूक्तेन प्रोक्षयित्वा पुनस्तथा[३] ।
मृदाऽऽलिप्य निमज्य त्रिस्त्रिर्ज्जपेदघमर्षणम् ॥ ३ ॥

स्रष्टारं सर्वलोकानां स्मृत्वा नारायणं परम् ।
यतश्वासो निमग्नोऽप्सु[४] प्रणवेनोत्थितस्ततः ।
सिञ्चेत् पुरुषसूक्तेन स्वदेहस्थं हरिं स्मरन् ॥ ४ ॥

वसित्वा वास आचम्य प्रोक्ष्याऽचम्य च मन्त्रतः ।
गायत्र्या चाञ्जलिं दत्वा द्ध्यात्वा सूर्यगतं हरिम् ॥ ५ ॥

मन्त्रतः परिवृत्याथ समाचम्य सुरादिकान् ।
तर्प्पयित्वा निपीडयाथ वासो विस्तीर्य[५] चाञ्जसा ॥ ६ ॥

अर्क्कमण्डलगं विष्णुं द्ध्यात्वैव त्रिपदीं जपेत् ।
सहस्रपरमां देवीं शतमद्ध्यां दशावराम् ॥ ७ ॥

---

१ "निराशी निर्म्ममो-" इति क्वचित् ।
२ "स्मृत्वा विष्णुं समु-" इति प्र. पाठः ।
३ "पुनस्ततः" इति क्वचित् ।
४ "निमज्याप्सु" इति क्वचित् ।
५ "विस्तृत्य" इति प्र. पाठः ।

आसूर्यदर्शनात् तिष्ठेत् ततस्तूपविशेत वा ।
पूर्वां सन्ध्यां सनक्षत्रामुत्तरां सदिवाकराम् ।
उत्तरामुपविश्यैव वाग्यतः सर्वदा जपेत् ॥ ८ ॥

ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ ९ ॥

गायत्र्यास्त्रिगुणं[1] विष्णुं ध्यायन्नष्टाक्षरं जपेत् ।
प्रणम्य देवान् विप्रांश्च गुरूंश्च हरिपार्षदान् ।
[2]स्मृत्वा सर्वोत्तमं विष्णुं स्वाध्यायेनार्च्चयेद्धरिम् ॥ १० ॥

ध्यानप्रवचनाभ्यां वा[3] यथायोग्यमुपास्य तम्[4] ।
धर्म्मेणेज्यासाधनानि साधयित्वा विधानतः ॥ ११ ॥

स्नात्वा सम्पूजयेद् विष्णुं वेदतन्त्रोक्तमार्ग्गतः ।
वैश्वदेवं बलिं चैव [5]कार्यं नित्यं तदर्प्पणम् ॥ १२ ॥

इष्टं दत्तं हुतं जप्तं पूर्त्तं यच्चाऽऽत्मनः प्रियम् ।
दारान् सुतान् प्रियान् प्राणान् यत् परस्मै निवेदयेत् ३ ॥

भुक्तशेषं भगवतो भृत्यातिथिपुरस्सरः ।
भुञ्जीत हृद्गतं विष्णुं स्मरंस्तद्योगमानसः[7] ।
आचम्य मूलमन्त्रेण कोष्ठं [8]स्वमभिमन्त्रयेत् ॥ १४ ॥

वेदशास्त्रविनोदेन प्रीणयन् पुरुषोत्तमम् ।
अहःशेषं नयेत् सन्ध्यामुपासीताथ पूर्ववत् ॥ १५ ॥

यामात् परत एवाथ स्वपेद् ध्यात्वा[9] जनार्द्दनम् ।
अन्तराळे तथोद्बुद्धः[10] स्मरेत बहुशो हरिम् ॥ १६ ॥

---

१ "गायत्र्या त्रिगुणम्" इति क्वचित् प्र. पाठः ।
२ "एवं सर्वोत्तमं विष्णु ध्यायन्नेवार्चयेद्धरिम्" इति प्र. पाठः ।
३ "–नाभ्यां च यथा–" इति प्र. पाठः ।
४ "–मुपासनम्" इति प्र. पाठः ।
५ "कुर्यान्नित्यं तदर्प्पणम्" इति प्र. पाठः । स एव चार्त्थतः स्वरसो भवति । योगदीपिकायां च तथा ।
६ "प्राणान् परस्मै सन्निवेदयेत्" इति पाठान्तरं कोशेषु योगदीपिकायां च । प्र. पाठोऽपि तथा ।
७ "–स्तद्गतमानसः" इति प्र. पाठः ।
८ "कोष्ठं समभि–" इति प्र. पाठः ।
९ "ध्यायन् जनार्द्दनम्" इति प्र. पाठः ।
१० "अन्तराले ततो बुद्ध्वा" इति प्र. पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्याऽऽत्मना वाऽनुसृतस्वभावः[1] ।
करोति[2] यद्यत् सकलं परस्मै
नारायणायेति समर्प्पयेत् तत् ॥ १७ ॥

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १८ ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १९ ॥

यस्मात् [3]क्षरमतीतोऽसावक्षराच्चोत्तमो हरिः ।
अतो हि[4] लोके वेदे च प्रथितः पुरुषोत्तमः ॥ २० ॥

[5]यस्तमेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद् भजति तं[6] सर्वभावेन सर्वदा[7] ॥ २१ ॥

इति गुह्यतमं शास्त्रमिदं तेनोक्तमेव च[8] ।
एतद् बुध्वा बुद्धिमान् स्यात् कृतकृत्यश्च नित्यदा[9] ॥ २२ ॥

रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।
[10]ब्रह्मा तमाश्रितो नित्यं न हरिः किञ्चिदाश्रितः ॥ २३ ॥

ये[11] तन्मतमिदं नित्यमनुतिष्ठन्ति सर्वदा[12] ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते संसृतेर्भयात्[13] ॥ २४ ॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति तन्मतम्[14] ।
सर्वज्ञानविमूढांस्तान् [15]विद्यान्नष्टानचेतसः ॥ २५ ॥

---

१ "–सृतः स्वभावम्" इति प्र. पाठः ।
२ "करोमि" इति प्र. पाठः प्रामादिकः ।
३ "क्षरमतीतोऽहमक्षरादपि चोत्तमः" इति प्र. पाठः । आचार्यैरत्र ग्रन्थे स्ववचनतया व्यत्यस्यैव पुराणादि-वचनानि पठितानि । एवमुत्तरत्रापि । एवमेव हि सर्वत्र कोशेषु योगदीपिकायां च पाठः । सकलमूलकोशविरोधात् प्रचलिता समग्राऽऽनूपूर्वी भ्रान्तिमूलैव ।
४ "अतोऽस्मि लोके" इति प्र॰ पाठः ।
५ "यो मामेव–" इति प्र. पाठः ।
६ "भजति माम्" इति प्र. पाठः ।
७ "–भावेन भारत" इति प्र. पाठः ।
८ "–मिदमुक्तं मयाऽनघ" इति प्र. पाठः ।
९ "–कृत्यश्च भारत" इति प्र. पाठः ।
१० "ब्रह्मा मामाश्रितो नित्यं नाहं कश्चिदुपाश्रितः" इति प्र. पाठः ।
११ "ये मे मत–" इति प्र. पाठः ।
१२ "–तिष्ठन्ति मानवाः" इति प्र. पाठः ।
१३ "मुच्यन्ते तेऽपि कर्म्मभिः" इति प्र. पाठः ।
१४ "–तिष्ठन्ति मे मतम्" इति प्र. पाठः ।
१५ "विद्धि नष्टा–" इति प्र. पाठः ।

[1]द्वावेव सर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
विष्णुभक्तिपरो दैवो विपरीतस्तथाऽसुरः ॥ २६ ॥

स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ॥ २७ ॥

धर्म्मो भवत्यधर्म्मोऽपि कृतो भक्तै रमेशितुः[2] ।
पापं भवति धर्म्मोऽपि यो न भक्तैः कृतो हरेः[3] ॥ २८ ॥

तन्मना भव तद्भक्तस्तद्याजी तन्नमस्क्रियः[4] ।
नित्यं भवेच्च तन्निष्ठो[5] बुभूषुः पुरुषस्ततः[6] ॥ २९ ॥

एष नित्यसमाचारो[7] गृहिणो वनिनस्तथा ।
वैश्वदेवं बलिं दन्तधावनं चाप्यृते वटोः[8] ॥ ३० ॥

एवमेव यतेः स्वीयवित्तेन तु विना सदा ।
मूलमन्त्रैः सदा स्नानं विष्णोरेव च [9]तर्प्पणम् ॥ ३१ ॥

विशेषो निष्क्रिययतेरजलाञ्जलिता[10] तथा ।
तर्प्पणं तु हरेरेव यतेरन्यस्य चोदितम् ॥ ३२ ॥

समिद्धोमो [11]वटोश्चैव स्मृत्वा विष्णुं हुताशने ।
सर्ववर्णाश्रमैर्विष्णुरेक एवेज्यते सदा ।
रमाब्रह्मादयस्तस्य परिवारतयैव तु[12] ॥ ३३ ॥

कविं पुराणमनुशासितार-
मणोरणीयांसमनुस्मरेत् तम्[13] ।
सर्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः परस्तात् ॥ ३४ ॥

---

१ "द्वौ भूतसर्गौ" इति प्र. पाठः ।
२ "भक्तैस्तवाच्युत" इति प्र. पाठः ।
३ "हरे" इति प्र. पाठः ।
४ "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु" इति प्र. पाठः ।
५ "भवेच्च मन्निष्ठो–" इति प्र. पाठः ।
६ "पुरुषस्तथा" इति प्र. पाठः ।
७ "नित्यः सदाचारो–" इति च ।
८ "वटोः" इति प्र. पाठः ।
९ "–रेव तु तर्प्पणम्" इति क्वचित् ।
१० "–जलाञ्जलिना" इति प्र. पाठः ।
११ "वटोश्चैव" इति प्र. पाठः ।
१२ "परिवारत एव तु" इति प्र. पाठः ।
१३ "–स्मरेद् यः" इति प्र. पाठः ।

वेदाहमेतं पुरुषं महान्त-
मादित्यवर्ण्णं तमसस्तु पारे ।
सर्वाणि रूपाणि विचित्य[1] धीरो
नामानि कृत्वाऽभिवदन् य आस्ते[2] ॥ ३५ ॥

धाता पुरस्ताद् यमुदाजहार
शक्रः प्रविद्वान् प्रदिशश्चतस्रः ।
तमेवं विद्वानमृत इह भवति
नान्यः पन्था अयनाय विद्यते ॥ ३६ ॥

आनन्दतीर्थमुनिना व्यासवाक्यसमुद्धृतिः ।
सदाचारस्य विषये कृता सङ्क्षेपतः शुभा ॥ ३७ ॥

अशेषकल्याणगुणनित्यानुभवसत्तनुः ।
अशेषदोषरहितः प्रीयतां पुरुषोत्तमः ॥ ३८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचित-
सदाचारस्मृतिः समाप्ता

---

[[3] "श्रुत्वा तद्दिनमारभ्य दशाहमशुचिर्भवेत् ।
पितरौ तु मृतौ स्यातां दूरस्थोऽपिच पुत्रकः" ॥

"अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत् ।
संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुद्ध्यति" ज्ञातिविषयमेतत् ।]

---

१ "विचिन्त्य" इति प्र. पाठः । २ "यदास्ते" इति प्र. पाठः ।

३ सदाचारस्मृत्यन्ते मूलग्रन्थे इमौ श्लोकौ पठितौ । सन्दर्भविशेषे धर्म्मविचिकित्सायां आचार्यैर्न्निर्णायकत-योदाहृताविति हृषीकेशतीर्थैरत्र सङ्गृहीताविति सम्भाव्यते ।

# जयन्तीकल्पः

ॐ॥ रोहिण्यामर्द्धरात्रे तु यदा काळाष्टमी[१] भवेत् ।
जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशनम्[२] ।
यस्यां जातो हरिः साक्षान्निशीथे भगवानजः ॥ १ ॥

तस्मात् तद्दिनमत्यर्थं [३]पुण्यं पापहरं परम् ।
तस्मात् सर्वैरुपोष्या सा जयन्ती नाम वै सदा ।
द्विजातिभिर्विशेषेण तद्भक्तैश्च विधानतः[४] ॥ २ ॥

यो भुङ्क्ते तद्दिने लोभात् पूयशोणितमत्ति सः ।
तस्मादुपवसेत् पुण्यं तद्दिनं श्रद्धयाऽन्वितः ॥ ३ ॥

कृत्वा शौचं यथान्यायं स्नानं कुर्यादतन्द्रितः ।
प्रभातकाले मेधावी [५]योगायेति यथाविधि ॥ ४ ॥

नित्याह्निकं प्रकुर्वीत भगवन्तमनुस्मरन् ।
मद्ध्याह्नकाले च पुनः सायङ्काले त्वतन्द्रितः ।
स्नायीत पूर्वमन्त्रेण [६]वासुदेवमनुस्मरन् ॥ ५ ॥

ततः पूजां प्रकुर्वीत विधिवत् सुसमाहितः ।
यज्ञायेति च[७] मन्त्रेण[८] श्रद्धाभक्तियुतः पुमान् ॥ ६ ॥

कृष्णं च बलभद्रं च वसुदेवं च देवकीम् ।
नन्दगोपं यशोदां च सुभद्रां तत्र पूजयेत् ।

---

१ "कालाष्टमी" इति प्र. पाठः । २ "-प्रणाशनी" इति प्र. पाठः । क्वचित् कोशेषु च ।
३ "–त्यर्थं पापहानिकरं परम्" इति क्वचित् । ४ "विशेषतः" इति प्र. पाठः ।
५ "योगाय योगपतये योगेश्वराय योगसम्भवाय श्रीगोविन्दाय नमोनमः" इति मन्त्रेणेत्यर्थः ।
६ "–मन्त्रेण भगवन्तमनु–" इति क्वचित् । ७ "यज्ञायेति तु" इति क्वचित् ।
८ "यज्ञाय यज्ञपतये यज्ञेश्वराय यज्ञसम्भवाय श्रीगोविन्दाय नमोनमः" इति मन्त्रेणेत्यर्थः ।

अर्घ्यं दत्त्वा समभ्यर्च्चर्याभ्युदिते[1] शशिमण्डले[2] ॥ ७ ॥

क्षीरोदार्णवसम्भूत [3]अत्रिनेत्रसमुद्भव ।
गृहाणार्घ्यं शशाङ्केदं[4] रोहिण्या सहितो मम[5] ॥ ८ ॥

दत्त्वाऽर्घ्यं मनुनाऽनेन उपस्थाय विधुं बुधः ।
शशिने चन्द्रदेवाय सोमदेवाय चेन्दवे ॥ ९ ॥

मृगिणे [6]सितविम्बाय लोकदीपाय दीपिने[7] ।
शीतदीधितिविम्बाय तारकापतये नमः ॥ १० ॥

उपसंहृत्य तत् सर्वं ब्रह्मचारी जितेन्द्रियः ।
[8]विश्वायेति च मन्त्रेण ततः स्वापं समाचरेत् ॥ ११ ॥

ततो नित्याह्निकं कृत्वा शक्तितो दीयतां धनम् ।
[9]सर्वायेति च मन्त्रेण ततः पारणमाचरेत् ।
[10]धर्म्मायेति ततः स्वस्थो मुच्यते सर्वकिल्बिषैः ॥ १२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितः
श्रीमज्जयन्तीकल्पः[11] समाप्तः

---

१ –"भ्यर्च्चर्याभ्युत्थिते" इति प्र. पाठः । "-भ्यर्च्चर्य ह्युदिते" इति क्वचित् ।
२ इतः परं प्र. पाठे—"जातः कंसवधार्थाय भूभारोत्तारणाय च ।
कौरवाणां विनाशाय दैत्यानां निधनाय च ।
पाण्डवाना हितार्थाय धर्म्मसंस्थापनाय च ।
गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे ॥"

इति श्लोकद्वयमधिकं पठ्यते । क्वचित् कोशान्तरे च "सुभद्रां तत्र पूजयेत्" इत्यनन्तरमिदं श्लोकद्वयं पठित्वा ततः "अर्घ्यं दत्त्वा–" इत्यादि पठ्यते ।

३ "अत्रिगोत्र–" इति प्र. पाठः । ४ "–णार्घ्यं मया दत्तं रोहिण्या" इति प्र. पाठः ।
५ "सहितः शशिन्" इति प्र. पाठः । ६ "शीतबिम्बाय" इति प्र. पाठः ।
७ इतः परं क्वचित्— "रोहिणीसक्तचित्ताय कन्यादानप्रदायिने" इति पद्यार्द्धमधिकम् ।
८ "विश्वाय विश्वपतये विश्वेश्वराय विश्वसम्भवाय श्रीगोविन्दाय नमोनमः" इति मन्त्रेणेत्यर्थः ।
९ "सर्वाय सर्वपतये सर्वेश्वराय सर्वसम्भवाय श्रीगोविन्दाय नमोनमः" इति मन्त्रेणेत्यर्थः ।
१० "धर्म्माय धर्म्मपतये धर्म्मेश्वराय धर्म्मसम्भवाय श्रीगोविन्दाय नमोनमः" इति मन्त्रेण ।
११ प्र. पाठे अस्य ग्रन्थस्य "जयन्तीनिर्णयः" इति च नाम पठ्यते ।

# ओन्तत्सत्प्रणवकल्पः

ॐ ॥ समिच्चर्वाज्यकान्[1] हुत्वा सम्यक् पुरुषसूक्ततः ।
सर्वेषामभयं दत्वा विरक्तः प्रव्रजेद्धरिम् ।
[2]स्मृत्वा भागवतं शुद्धमाचार्यं शरणं व्रजेत् ॥ १ ॥

अधीहि भगवो ब्रह्मेत्यस्मै ब्रूयाद् गुरुः परम् ।
[3]उच्चारयंस्त्रिशस्तारं दक्षिणे श्रवणे तथा ॥ २ ॥

ऋषिच्छन्दोदैवतानि ब्रूयात् तस्य क्रमात् सुधीः ।
अन्तर्यामीति गायत्री परमात्मेत्यनुक्रमात् ।
विश्वश्च तैजसः [4]प्राज्ञस्तुरीयश्चाक्षरदेवताः ॥ ३ ॥

कृष्णो रामो नृसिंहश्च वराहो विष्णुरेव च ।
परञ्ज्योतिः परम्ब्रह्म वासुदेव इति क्रमात् ।
अकारादेस्तथा शान्तातिशान्तान्तस्य देवताः ॥ ४ ॥

एवमुक्त्वा तु तद्ध्यानं ब्रूयाद् भक्तस्य सद्गुरुः ।
अष्टपत्रे तु [5]हृत्पद्ममद्ध्ये सूर्येन्दुवह्निगम् ।
पीठं तन्मद्ध्यपद्मस्थं[6] नारायणमनामयम् ॥ ५ ॥

उद्यदादित्यसङ्काशं तेजसाऽनुपमं सदा ।
सहस्रेणापि सूर्याणां सज्ज्ञानानन्दरूपिणम् ॥ ६ ॥

अतिरक्ततळं[7] भास्वन्नखव्रातविभूषितम् ।
वृत्तजङ्घं वृत्तजानुं हस्तिहस्तोरुमीश्वरम् ॥ ७ ॥

---

१ "–ज्यकं हुत्वा" इति क्वचित् ।
२ "श्रुत्वा" इति प्र. पाठः ।
३ "उच्चारयेत् त्रिश–" इति प्र. पाठः ।
४ "प्राज्ञस्तुर्यश्चा–" इति प्र. पाठः ।
५ "हृत्पद्मे मद्ध्ये" इति प्र. पाठः ।
६ "तत्पद्ममद्ध्यस्थम्" इति प्र. पाठः ।
७ "-तलम्" इति प्र. पाठः ।

महाकटितटाबद्धकाञ्चीपीताम्बरोज्ज्वलम् ।
[1]निम्ननाभिं च त्रिवलिसंवृतोदरबन्धनम् ॥ ८ ॥

[2]विस्तारिवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ।
वनमालाधरं हारवैजयन्त्यादिभिर्युतम्[3] ॥ ९ ॥

पृथुदीर्घचतुर्बाहुं [4]शङ्खचक्रगदाम्बुजैः ।
युक्तमुन्निद्रपद्माक्षं स्फुरन्मकरकुण्डलम् ॥ १० ॥

पूर्णचन्द्रायुतोद्रिक्तकान्तिमन्मुखपङ्कजम् ।
सुभ्रुवं सुललाटान्तं किरीटाबद्धमूर्द्धजम् ।
निःशेषदुःखशमनं[5] नित्यानन्दं[6] शुचिस्मितम् ॥ ११ ॥

विश्वादींश्चैव कृष्णादीनेवम्भूतान् सनातनान् ।
अभिन्नानेव सततं तस्माद् विष्णोः परात्मनः ।
वराभयोद्यतकरान् नित्यानन्दैकरूपिणः ॥ १२ ॥

एवमुक्त्वा गुरुर्ध्यानं शपथं कारयेत् ततः ।
न विष्णुं वैष्णवांश्चैवा[7]प्युत्सृजेयमिति त्रिशः ॥ १३ ॥

नचान्यदेवसामान्यं[8] तदैक्यमथवा हरेः ।
चिन्तयेयं मृतौ[9] वाऽपि नचाप्येकत्ववादिभिः ॥ १४ ॥

समत्ववादिभिर्वाऽहं सङ्गच्छेयं कदाचन[10] ।
तन्निन्दकैश्च तद्भक्तनिन्दकैर्वा महामुने ॥ १५ ॥

एवं कृते तु शपथे मस्तके हस्तपङ्कजम् ।
निधायोत्तीर्य संसारात् सुखी भव हरेः प्रियः ॥ १६ ॥

सर्वदुःखादिभिर्मुक्तो नित्यानन्दैकरूपकः ।
सम्प्राप्य विष्णुसामीप्यं तत्रापि हरिभक्तिमान् ॥ १७ ॥

---

१ "सुनिम्ननाभिं त्रिवलिं सुवृत्तोदर–" इति प्र. पाठः ।
२ "विशालवक्षसम्" इति प्र. पाठः ।
३ "–दिभिर्वृतम्" इति प्र. पाठः
४ "चक्रशङ्खगदाम्बुजैः" इति प्र. पाठः ।
५ "–दुःखदमनम्" इति प्र. पाठः ।
६ "–नन्दशुचि–" इति क्वचित् ।
७ "–श्चैव विसृजेय–" इति प्र. पाठः ।
८ "–देवतासाम्यम्" इति प्र. पाठः । "–दैवसामान्यम्" इति क्वचित् ।
९ "मृतो वाऽपि" इति प्र. पाठः ।
१० "कथञ्चन" इति क्वचित् ।

भक्तिमांश्चाथ देवेषु[1] तारतम्यं च संस्मरन् ।
सर्वोत्कर्षं स्मरन् विष्णोर्भूयाश्चैव सदा सुखी ॥ १८ ॥

न मुक्तौ विष्णुनैक्यं वा मुक्तानां साम्यमेव वा ।
स्मरेथा इति चोक्त्वा[2] तत्समयाननुशिक्षयेत् ॥ १९ ॥

नित्यशश्च हरेः पूजा जपध्यानसपर्यया[3] ।
कर्त्तव्यैव[4] त्वया वत्स जपश्च त्रिसहस्रकः ॥ २० ॥

मध्यमः प्रणवस्योक्तो योऽवरः स सहस्रकः ।
त्रिसहस्रात् परो यस्तु स उत्तमजपः स्मृतः ॥ २१ ॥

आत्मानं प्रतिबिम्बत्वे ध्यायन् बिम्बं जनार्दनम् ।
ध्यायस्व सततं पुत्र[5] सपर्यां नित्यशः कुरु ।
मानसेनाथ[6] पुष्पैर्वा प्रणवेन समाहितः ॥ २२ ॥

अन्यांश्च वैष्णवान् मन्त्रान् जपेथा भक्तिपूर्वकम् ।
शृणुष्व वैष्णवं शास्त्रं सदा वेदार्थतत्परः ॥ २३ ॥

वेदान् मन्त्रानुपनिषत्सहितान् सर्वदा शृणु ।
इतिहासपुराणे[7] च पञ्चरात्रं तथैव च ॥ २४ ॥

तदर्थान् ब्रह्मसूत्रैश्च सम्यङ्निर्णीय तत्त्वतः ।
विष्णोः सर्वोत्तमत्वं तु[8] सर्वदा प्रतिपादय ॥ २५ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितः
ओन्तत्सत्प्रणवकल्पः[9] समाप्तः

---

१ "-श्चान्यदेवेषु" इति प्र. पाठः ।
२ "चोक्त्वाऽथ समया-" इति प्र. प्राठः ।
३ "-समर्पणम्" इति प्र. पाठः ।
४ "कर्त्तव्यं तु त्वया" इति प्र. पाठः ।
५ "सततं वत्स" इति प्र. पाठः ।
६ "मानसैर्वाऽथ" इति प्र. पाठः ।
७ "-पुराणं च" इति प्र. पाठः ।
८ "-त्वं च सर्वदा" इति प्र. पाठः ।
९ अस्यैत्र "यतिप्रणवकल्पः" इति प्रचलितं नाम । "प्रणवकल्पः" इतीयदेव क्वचित् कोशान्तरे नाम पठ्यते ।

# *न्यासपद्धतिः

ॐ ॥ नरनारायणं नत्वा[1] पूर्ण्णं ब्रह्माक्षरोदितम् ।
यतेराचरणं वक्ष्ये पूर्ण्णं शास्त्रानुसारतः ॥ १ ॥

अरुणोदयवेळायामुत्थाय हरिमानसः ।
शौचादिकं यथान्यायं कृत्वा दन्तान् विशोधयेत् ॥ २ ॥

कटिशौचं मृदा कुर्याच्छुद्ध्यर्थं जलसंस्थितः ।
स्नानं कुर्याद् यथोक्तेन विधिना नियतो हरौ[2] ॥ ३ ॥

धृत्वोर्ध्वपुण्ड्रं विधिना प्रकल्प्याऽऽसनमच्युते ।
मनो निवेश्याष्टमन्त्रान्[3] यथाशक्ति जपेच्छुचिः ॥ ४ ॥

---

* एतावत्पर्यन्तममुद्रितोऽपूर्वोऽयं ग्रन्थः मूलकोशावलम्बेन कण्वतीर्थे सुब्रह्मण्यनाम्ना लिखिते प्राचीनकोशे प्रथममुपलब्धः । भगवत्पादकृतां न्यासपद्धतिमनुसृत्यैव विष्णुतीर्थीया सन्न्यासपद्धतिः कृतेति तट्टीकायां सुरोत्तमतीर्थवचनमस्याऽऽचार्यकृतितां दृढं समर्थयते । तथाहि सुरोत्तमतीर्थीयम्– "भगवत्पादकृतप्रणवकल्पसन्न्यासपद्धत्यादौ कार्त्स्न्येन कर्म्मसम्बन्धिधर्म्माणां स्फुटाप्रतिभानात् भगवत्पादाज्ञामकुटं शिरसि परमादरेण धृत्वा प्रणवकल्पादिविवृतिरूपं श्रीविष्णुतीर्थीयाख्यमध्यायचतुष्टयात्मकं ग्रन्थं निर्म्मम इत्याम्नायः" इति ।

१ "नरनारायणं देवं पूर्णम्" (?) इति क्वचित्पठ्यते । "नत्वा नारायणं देवम्" इति तदभिमतः पाठः स्यात् । नरनारायणमिति पाठे "नरोऽनाशात् परः स्मृतः" इत्याचार्यैरेवान्यत्र निरुक्तमिति नर एव नारायणः । प्राय आचार्या नरनारायणाचलयोर्म्मध्ये बदर्यामनन्तमठ इमं ग्रन्थं प्रणिन्युः । अतो नरनारायणं नत्वेत्याहुरिति सम्भाव्यते ।

२ "नियतो हरिः" (?) इति, "नियतो हरिम्" इति च पाठान्तरं पठ्यते । द्वितीयपाठे हरिमुद्दिश्य नियत इत्यादि कथञ्चिद् योजनीयम् ।

३ तथाचोक्तम्— "ताराष्टवर्णौ द्विषडक्षरोऽन्यः षडक्षरो व्याहृतयः क्रमेण ।
पञ्चाशदर्णाः सवितुश्च पत्नी पुंसूक्तमित्येव च मूलमन्त्राः ।
सन्ध्यासु मन्त्रा इम एव जप्यास्तारो यतीनां प्रथमो हि मन्त्रः ।
सावित्रपूर्वस्तु तथाऽपरेषां द्विजन्मनां शश्वदनिन्दितानाम्" इति ।

द्वादशसहस्रावृत्ति[1] परं ब्रह्माक्षरं जपेत् ।
दण्डोदकं जपस्यान्ते दद्याद् विधिविधानतः ॥ ५ ॥

देवतां परमां सम्यक् पूजयेच्च विधानतः ।
भिक्षाकाले विधानेन चरेद् भिक्षाटनं यतिः ॥ ६ ॥

अनेकभिक्षाचरणं मुख्यधर्म्मो यतेः स्मृतः ।
त्रिपञ्चसप्तसद्मानि गच्छेन्नातोऽधिकं पुनः ॥ ७ ॥

भिक्षाग्रहणकाले तु गृह्णीयाद् दातृतो जलम् ।
भिक्षान्ने तज्जलं प्रोक्ष्य पुनर्ग्राह्यं विदा जलम् ॥ ८ ॥

निवेदयेत् तदन्नं तु वारिजस्योदकेन तु ।
प्रोक्ष्य देवाय महते मूलमन्त्रेण वाग्यतः ।
तदन्नं भक्षयेत् स्वस्थो ह्यजवद्धरिमानसः ॥ ९ ॥

त्रिवारमुदकस्नानं यतेः शास्त्रेषु चोदितम् ।
अशक्तस्य यतेः शास्त्रे द्विवारं स्नानचोदना ।
अत्यन्ताशक्तविषये त्वेकं स्नानं स्मृतं बुधैः ॥ १० ॥

वेदान्तशास्त्राभ्यसनं मुख्यधर्म्मो यतेः स्मृतः ।
देवो नारायणो नित्यं सृष्टिस्थित्यन्तकारकः ।
भक्तानां मुक्तिदो नित्यमन्यथाज्ञानिनां तमः[2] ॥ ११ ॥

पूर्णप्रज्ञेन मुनिना व्यासवाक्यसमुद्धृतिः ।
न्यासधर्म्मस्य विषये शुभा सङ्क्षेपतः कृता ॥ १२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादकृता
न्यासपद्धतिः समाप्ता

---

१ "–सहस्रावृत्तिम्" इति पाठान्तरम् ।

२ देवो नारायण एव सृष्ट्यादिकर्त्ता भक्तानां मुक्तिदश्चेति ये न जानन्ति, अन्यथा च जानन्ति तेषां तम एव शरणम् ।

# *तिथिनिर्णयः

ॐ ॥ विष्णुं विश्वेश्वरं नत्वा तद्दुपोषणशुद्धये ।
मूलग्रन्थानुसारेण क्रियते तिथिनिर्णयः ॥ १ ॥

[1]भूश्रीभिन्नाकिञ्चिन्त्यो(१६,१०,४२४)नात्
कलग्रहात् काल(३१) वर्द्धितात् ।
गरुडध्येय(११,३२३)वाक्याप्तं
त्यक्त्वा सौरं वृथाफलम् ॥ २ ॥

---

* ग्रन्थोऽयमेकस्मिन् मूलकोशावलम्बेन लिखिते श्रीपेजावरमठीये प्राचीनकोशे उपलब्धः । श्रीपलिमारुमठीये तिथिविमर्शग्रन्थे च प्राचीने–"आचार्यैस्तथैव तिथिनिर्णयेऽभिहितमित्यार्येणैव विनिर्णयः" इत्युक्तम् । सम्प्रति तु बहुषु स्थलेष्वन्यान्यमठेषु चास्य हस्तलिखितानि पुस्तकान्युपलब्धानि । तस्मादस्याऽऽचार्यकृतितानिर्णयः । तदयमप्याचार्याणामपूर्वो ग्रन्थ इदानीमिदमुपज्ञमुपस्थाप्यते ।

[1] एतेनाऽऽचार्याणां कालविषयोऽपि विवादः परिहृतो भवति । "चतुःसहस्रे त्रिशतोत्तरे गते" इत्याचार्यैः स्वयमेवोक्तम् । तस्मात् स एव काल इत्येके । "त्रिशताब्दोत्तरचतुःसहस्राब्देभ्य उत्तरे । एकोनचत्वारिंशाब्दे" इत्यन्यत्र वचनात् एकोनचत्वारिंशदुत्तरत्वं च तात्पर्यनिर्णये पूरणीयमित्यपरे । शेषं विहाय शतकमात्रपरिगणनेन निर्णयोक्तिरिति तेषां मतम् । अनयोर्द्वयोः पक्षयोः कः साधीयान्? द्वितीय इति सम्प्रति सिद्धम् । तथाहि—एतद्ग्रन्थकरणकाले कलिगताहानि –१६,१०,४२४ (भूश्रीभिन्नाकिञ्चिन्त्य) इति स्वयमेवाभिहितम् । तथाच तदानीं कलिगताब्दाः—

$$\frac{१६,१०,४२४ \times ३१}{११,३२३} = (४४०९ \text{ वर्षाणि})$$

यदि ४३०० गताब्दे भगवत्पादाविर्भावः ततः १०९ वर्षानन्तरमेतद्ग्रन्थकरणं भवति । नच तत् सम्भवति । "एकोनाशीतिवर्षाणि भूत्वा मानुषदृष्टिगः । पिङ्गलाब्दे माघशुद्धनवम्यां बदरीं ययौ" इत्यादिवचनविरोधात् । ततश्च पूर्वोक्तरीत्या ३९ अब्दपूरणे तु सर्वं सुसङ्गतं भवति । अवतारकालः ४३३९ कलिगताब्दाः । ततः सप्ततिवर्षानन्तरं (४३३९ + ७० = ४४०९) एतद्ग्रन्थरचनमिति । तथाच बदरीनिर्याणान्नववर्षपूर्वतनोऽयं ग्रन्थः ।

[१]राश्याद्यं मद्ध्यमं कुर्याद्
गो(३)घ्नाद् धीसूनुनाग(३०,०७९)जाः।
कलास्त्यक्त्वा ध्रुवं कुर्याद्
देशा–धार–हरा–र्पकम्(११–२८–२०–५८) ॥ ३ ॥

---

अत्र यत् क्वचित् कोशेषु "भूगीभिन्नाकि–" इति "कल्यब्दात्" इति, "कालवर्जितात्" इति च पठ्यते तद् गणितविरोधाल्लिपिकृतां प्रमादः। तथाहि क्रमः—

साम्प्रतं कल्यहम्— १८,५३,६१४ (प्रमादिवत्सरीये माघशुद्धे मध्वनवमीदिने–शक–१८९६)
एतद्ग्रन्थकरणकालिनकल्यहम्— १६,१०,४२४ (भूश्रीभिन्नाकिचिन्त्य)
तदूनं कल्यहम्— २,४३,१९०

तस्य च कालेन(३१) वृद्धिः। गरुडध्येयेन (११,३२३) विभागश्च। तथाहि क्रमः–

२,४३,१९० × ३१
११,३२३ ) ७५,३८,८९० ( ६६५
६७,९३८
७४,५०९
६७,९३८
६५,७१०
५६६१५
९०९५

अत्र लब्धं ६६५ सौरभगणापरनामकं सौरं, वृथाफलमित्युच्यते। तथाचैतद्ग्रन्थकरणात् परमद्ययावत् ६६५ वर्षाण्यतीतानीति स्थितम् (४४०९ + ६६५ = ५०७४ साम्प्रतः कलिगताब्दः)। तदेतद् फलं त्यक्त्वा अवशिष्टेन (९०९५) राश्याद्यं मद्ध्यमं कुर्यादिति।

१ अत्रापि श्लोके यत् क्वचित् "धीसूनुनागणाः" इति, "कलाश्चत्वा" इति, "देशाधारनरार्पकम्" इति च पठ्यते तल्लिऽपकृतामेव प्रमादः। तथाहि मद्ध्यमरव्यादिनिष्पत्तिक्रमः—

तत्र राशिलब्ध्यर्थमत्रशिष्टं द्वादशभिर्हन्यात्,ततश्च गरुडध्येयेन विभज्यात्।

९०९५ × १२
११३२३ ) १०९१४० ( ९ राशिः
१०१९०७
७२३३

ततो राशिभागार्थं अवशिष्टं त्रिंशता हन्यात्, गरुडध्येयेन विभज्यात् —

७२३३ × ३०

११३२३ ) २१६९९० ( १९ भागाः
११३२३
———
१०३७६०
१०१९०७
———
१८५३
———

भागनां प्रत्येकं षष्टिः कला इति कलार्थं षष्ट्या हन्यात्, गरुडध्येयेन विभजेत्—

१८५३ × ६०

११३२३ ) १११९८० ( ९ कलाः
१०१९०७
———
९२७३
———

कलानां षष्टिर्विकला इति विकलार्थं पुनः षष्ट्या हन्यात्, गरुडध्येयेन विभजेच्च —

९२७३ × ६०

११३२३ ) ५५६३८० ( ४९ विकलाः
४५२९२
———
१०३४६०
१०१९०७
———
१५५३
———

ततश्च लब्धा राश्याद्याः– (९ रा. १९ भा. ०९ क ४९वि )। एतांश्च गो(३)गुणितात् भूश्रीमिन्नाकिचि-न्त्योनात्(२४३१९०) धीसूनुनागे(३००७९)न जाताः विभज्याऽमा. याः कलास्ताभिर्हापयेत्। ततश्च मद्धचमरत्रि-लाभः। तथाहि —

२४३१९० × ३

३००७९ ) ७२९५७० ( २४ कलाः।
६०१५८
———
१२७९९०
१२०३१६
———
७६७४
———

७६७४ × ६०

३००७९ ) ४६०४४० ( १५ विकलाः
३००७९
———
१५९६५०
१५०३९५
———
९२५५
———

[1]अनन्त(६००) वृद्धाद् बौधाङ्ग-
तुल्ये(१६,३९३)नेन्दुः शुक्रा(१५)हतात् ।
प्राज्ञाञ्जलिभृ(४३,८०२) द्राप्तोन-
स्तार-शोभा-तिना-किनी(०१-०६-४५-२६) ॥ ४ ॥

| रा. | भा. | क. | वि. |
|---|---|---|---|
| ०९. | १९. | ०३. | ४९— |
| | | २४. | १५ |
| ०९ | १८. | ४५. | ३४ |

भूश्रीभिन्नाकिचिन्त्याहे ध्रुवं राश्याद्यं ग्रन्थकृतैवोक्तम्— देशाधारहरार्पकमिति ।

| | | रा. | भा. | क. | वि. |
|---|---|---|---|---|---|
| तथाच १६१०४२४ दिने | मद्ध्यरविः | ११ | २८ | २९ | ५८ + |
| २४३१९० ,, | ,, | ०९ | १८ | ४५ | ३४ |
| १८५३६१४ मध्यनवमीदिने | ,, | ०९ | १७ | १५ | ३२ |

१ अत्र श्लोके "अनन्तवृद्धात् त्वौधाङ्ग" इति, "तुलेनेन्दुशुक्राहतात्" इति च यत् क्वचित् कोशान्तरे पठ्यते स लिपिकृत्प्रमादः । चतुर्थचरणे "तारेशोभातिनाकनी" इति क्वचिन् पाठः । उभयथाऽपि सङ्ख्यायामविरोधः । मद्ध्यचन्द्रकरणविधिरत्र निरूपितः । तथाहि क्रमः— भूश्रीभिन्नाकिचिन्त्योनस्य(२४३१९०) अनन्ते(६००)न वृद्धिः बोधाङ्गतुल्ये(१६३९३)न विभागश्च । ततः पूर्ववद् राश्यादिकरणम् । ततश्च भूश्रीभिन्नाकिचिन्त्योनस्य शुक्रे(१५)न गुणितस्य प्राज्ञाञ्जलिभृता(४३८०२) विभागे यल्लब्धं तावत्यः कलास्ततो हापयेत् । तेन भूश्रीभिन्नाकिचिन्त्योनाहस्य(२४३१९०) मद्ध्यचन्द्रलाभः । भूश्रीभिन्नाकिचिन्त्याहस्य(१६१०४२४) मध्यचन्द्रस्तु आचार्यैरेवाभिहितः— "तार-शोभा-तिना-किनी" (०१ रा. ०६ भा. ४५ क. २६ वि.) इति ।

तथात्र गणितक्रमः— २४३१९० × ६००

१६३९३ ) १४५९१४००० ( ८९००
१३११४४
१४७७००
१४७५३७
१६३००

[1]दिनेभ्यो द्वागरागा(३,२३२)प्तः
चन्द्रोच्चः स्याद्विभा(४०)हतात् ।

---

१६३०० × १२
१६३९३ ) १९५६०० ( ११ राशिः
१८०३२३
१५२७७ × ३०
१६३९३ ) ४५८३१० ( २७ भागाः
३२७८६
१३०४५०
११४७५१
१५६९९ × ६०
९४१९४०

१६३९३ ) ९४१९४० ( ५७ कलाः
८१९६५
१२२२९०
११४७५१
७५३९ × ६०
१६३९३ ) ४५२३४० ( २७ विकलाः
३२७८६
१२४४८०
११४७५१
९७२९

२४३१९० × १५
४३८०२ ) ३६४७८५० ( ८३ कलाः =
३५०४१६ (१भा. २३क.)
१४३६९०
१३१४०६
१२२८४ × ६०
४३८०२ ) ७३७०४० ( १६ विकलाः
७००८३२
३६२०८

| रा. | भा. | क. | वि. |
|---|---|---|---|
| ११ – | २७ – | ५७ – | २७— |
| | १ – | २३ – | १७ |
| ११ – | २६ – | ३४ – | १० |

| | | | |
|---|---|---|---|
| तथात्र १६१०४२४ | दिने | मद्ध्यचन्द्रः | १ – ०६ – ४५ – २६ + |
| २४३१९० | „ | „ | ११ – २६ – ३४ – १० |
| १८५३६१४ | दिने | „ | १ – ०३ – १९ – ३६ |

१ "दिनेन" इति पाठान्तरम् । यत् क्वचित् "दिनेभ्यो दांगरागाप्त" इति, "दिनेन भाद्रांनरागार्तः छन्दोच्च:" इति च पठ्यते स लिपिकृत्प्रमादः ।

जगत्सेनाङ्क(३०,७३८) लब्धोनः
श्रेष्ठ–चिन्त्यो–म्बुना–र्चने(०६–०३–१६–२२) ॥ ५ ॥

---

अनेन श्लोकेन चन्द्रोच्चकरणविधिमाहाऽऽचार्यः । भूश्रीभिन्नाकिचिन्त्योनेभ्यो दिनेभ्यः द्रागरागे(३२३२)न विभागे आप्तः राश्यादिः, निभ(४०)गुणितात् तस्मादेवाह्नः जगत्सेनाङ्कैः(३०७३८) विभागे लब्धाभिः कलाभिरूनश्च चन्द्रोच्चः स्यात् इति । तथाहि —

३२३२ ) २४३१९० ( ७५
२२६२४
—————
१६९५०
१६१६०
—————
७९०

७९० × १२
३२३२ ) ९४८० ( २ राशिः
६४६४
—————
३०१६ × ३०
३२३२ ) ९०४८० ( २७ भागाः
६४६४
—————
२५८४०
२२६२४
—————
३२१६

३२१६ × ६०
३२३२ ) १९२९६० ( ५९ कलाः
१६१६०
—————
३१३६०
२९०८८
—————
२२७२

२२७२ × ६०
३२३२ ) १३६३२० ( ४२ विकलाः
१२९२८
—————
७०४०
६४६४
—————
५७६

२ – २७ – ५९ – ४२—
५ – १६ – २८
—————
२ – २२ – ४३ – १४

भूश्रीभिन्नाकिचिन्त्याह्नस्य चन्द्रोच्चं आचार्यैरेवोक्तम्– 'श्रेष्ठ–चिन्त्यो–म्बुना–र्चने' (०६ – ०३ – १६ – २२) इति ।

२४३१९० × ४०
३०७३८ ) ९७२७६०० ( ३१६ कला: = ५—१६
९२२१४
—————
५०६२०
३०७३८
—————
१९८८२०
१८४४२८
—————
१४३९२ × ६०
३०७३८ ) ८६३५२० ( २७ विकलाः
६१४७६
—————
२४८७६०
२४५९०४
—————
२८५६

[1]लङ्कास्वाम्या(?वन्त्या)दिरेखायाः पूर्वपश्चिमदेशयोः ।
ग्रहाणां मद्ध्यसंस्कारलिता ऋणधनं क्रमात् ॥ ६ ॥

[2]पाप(११)घ्नादध्वसङ्ख्याना-
दर्क्क(१०)लब्धविलिप्तिकाः ।
अर्क्कस्येन्दोरनर्क्क(१००)घ्नात्
सानुभू(४०७)लब्धलिप्तिकाः ॥ ७ ॥

| | रा. | भा. | क. | वि. |
|---|---|---|---|---|
| तथाच १६,१०,४२४ दिने चन्द्रोद्यम्- | ०६ | ०३ | १६ | २२ |
| २,४३,१९० ,, ,, | ०२ | २२ | ४३ | १४ |
| १८,५३,६१४ ,, ,, | ०८ | २५ | ५९ | ३६ |

१ अत्र सर्वत्र कोशेषु "लङ्कास्वाम्यादिरेखायाः" इति पठ्यते । अर्थस्तु न स्फुटः । अर्थानुगुण्याय "लङ्कावन्त्यादिरेखायाः" इति पठनीयमिति प्रतिभाति । तृतीयचरणे च "गणानां मद्धयसंस्कार-" इति क्वचित् पाठः प्रामादिक एव । चतुर्थचरणे "ऋणधनक्रमात्" इति क्वचित् । पूर्वदेशस्यर्णं पश्चिमदेशस्य च धनं क्रमाद् भवतीत्यर्थः ।

तथाचायं श्लोकार्थः—एतच्चोदितं मद्धयमं राश्याद्यं भूमद्धयरेखादेशे । देशान्तरे तु तदनुगुणतया पुनः संस्कारः करणीय इत्याह- लङ्केत्यादि । तत्र च का भूमद्धयरेखा विवक्षिता? आह-लङ्कावन्त्यादिरेखायाः । लङ्कावन्त्यादिदेशस्पृक् परितो भूमिं दक्षिणोत्तरगामिनी रेखा लङ्कावन्त्यादिरेखा । सैव चात्र विवक्षिता मद्धयरेखा । ततः पूर्वदेशे अध्वसंख्यानुसारेण लिप्तानां ऋणम्, कलानां वियोजनम्, पश्चिमे चाध्वसङ्ख्यानुसारेण धनम्, कलानां संयोजनं क्रमात् करणीयमित्यर्थः ।

२ तथाच गणनाक्रममाह- पापघ्नात् । अध्वा केन्द्ररेखातः यावद्योजनदूरः तावतीनां संख्यानां पापेन(११) गुणनम्; अर्केण(१०) विभागश्च । ततो लब्धाः विलिप्तिकाः, विकला इति यावत्, पूर्वपश्चिमदेशयोः क्रमेण वियोजयेत्, संयोजयेच्चेत्यर्थः ।

$$\frac{\text{अध्वा} \times ११}{१०}$$ सोऽयं मद्धयमरवेः देशसंस्कारः ।

एवं मद्धयमचन्द्रस्य देशसंस्कारार्थं अध्वसंख्यानस्य अनर्केण(१००) गुणनम; सानुभू(४०७)विभागश्च । ततो लब्धाः, लिप्तिकाः कला इति यावत्, पूर्वपश्चिमदेशयोः क्रमेण वियोजयेत्, संयोजयेच्चेत्यर्थः ।

$$\frac{\text{अध्वा} \times १००}{४०७}$$ सोऽयं मद्धयमचन्द्रस्य देशसंस्कारः ।

तथाहि क्रमः । रजतपीठपुरे राश्याद्यं मद्धयमं करणीयं चेत्, मद्धयरेखातः पश्चिमसमुद्रपर्यन्तं सूर्यपरिक्रमस्य यावत्यः विघटिकास्तावत्य एव विकलाः मद्धयमे राश्याद्ये संयोजनीया इति स्थितिः । अध्वसंख्यानस्य पापेन

अर्कदोर्ज्याफलाच्छुद्धात् यथाऽर्के तत्फलात् तथा ।
गो(३)घ्नाद् दिव्य(१८)प्रजा(८२)भ्यां वि-
लिप्ता लिप्ता इनाब्जयोः[1] ॥ ८ ॥

---

गुणने, अर्केंग विभागे परिक्रमविघटिकासमसंख्या विकला लभ्यन्ते । तथाहि– भूपरिधिः ३३०० योजना-नीति स्थितिः । (३२९९ योजनानीति च पक्षान्तरं करणरत्नकृतो देवाचार्यस्य ।) एतावान् षष्टिघटिकासु सूर्यपरिक्रममार्गः । (१ यो. = 7½ Miles) तेन घटिकायां ($\frac{३३००}{६०}$ = ५५) पञ्चपञ्चाशद् योजनानि । विघटिकायां च $\frac{५५}{६०}$ योजनानि । अत्रतु पश्चिमदेशे २४ विघटिकाः विलम्बेन दर्शनमिति ततो गुणनेऽध्वसं-ख्यानलाभः—

$$\frac{५५ \times २४}{२०} = २२ \text{ योजनानि}$$

२४विघटिकासु २२योजनानि सूर्यपरिक्रममार्गं इति लङ्कावन्त्यादिरेखातः पश्चिमसमुद्रतीरस्थ २२योजनानि अध्वसंख्यानम् । तस्य च पापेन(११) गुणनेऽर्कैग(१०) विभागे च विघटिकासमसंख्यविलिप्तिकालाभः-

$$\frac{२२ \times ११}{१०} = \frac{२४२}{१०} = २४ \,(२/१०) \text{ विलिप्तिकाः ।}$$

तथाच २४ विकला मद्ध्यमराश्यादौ योजनीयाः–

| | |
|---|---|
| मद्ध्यरेखायां मध्यमरविः– | ९ – १७ – १५ – ३२ |
| संस्कारार्थं संयोजनीया विकलाः— | २४ |
| रजतपीठे मद्ध्यमरविः— | ९ – १७ – १५ – ५६ |

एवं मद्ध्यमचन्द्रेऽपि पूर्वोक्तदिशा संस्कारो यथा—

```
     २२ × १००
४०७ ) २२०० ( ५ कलाः
      २०३५
      ————
      १६५ × ६०
४०७ ) ९९०० ( २४ विकलाः
      ८१४
      ————
      १७६०
      १६२८
      ————
      १३२
```

| | |
|---|---|
| तथाच मद्ध्यरेखायां मद्ध्यमचन्द्रः– | १ – ३ – १९ – ३६ |
| संयोजनीयाः कलाः— | ५ – २४ |
| रजतपीठे मद्ध्यमचन्द्रः— | १ – ३ – २५ – ०० |

(अत्र विभाजकं ४१७ चेत् इतोऽपि सूक्ष्मः संस्कारः स्यादिति-ज्योतिर्विदो वदन्ति । तदात्वे तु 'सानुभू-' इति स्थाने 'सान्य-भू-(४१७)' इति पठनीयमिति भाति ।

[1] अत्र "दिव्यप्रजाभ्यां लिप्तिकालिप्त इनाब्जयोः" इति क्वचित् पाठः प्रामादिकः । "विलिप्ता लिप्त इना ब्जयोः" इति क्वचित् । तत्रापि दीर्घलोपो लिपिकृत्प्रमाददेवेति सम्भाव्यते ।

[1]देशदोःशुद्धये दानक्ष्विष्णुभ्यां स्युर्विलिप्तिकाः ।
[2]उच्चं सूर्यस्य नियतं दुष्टा स्त्री(२–१८) भागराशयः ॥ ९ ॥

[3]शरीरनुत्(२२५) धीभवनः(४४९) कथञ्चनो(६७१)
नळीजनो(८९०) मानपट्टः(११०५) शुकालपः(१३१५) ।
निरामयो(१५२०) धीःपथिको(१७१९) [नृपाधिको](१९१०)
बुधोनरः(२०९३) सुतप(?ख)रः(२२६७) कलाविराट्(२४३१) ॥ १० ॥

महाशरो(२५८५) दूरसरो(२७२८) धमीहरिः[4](२८५९)
हसन्धुरो(२९७८) वेदनगः(३०८४) सुसङ्कुलः(३१७७) ।
[5]तमःखगः(३२५६) पारबलं(३३२१) [रसो बली[6]](३३७२)
धनावलिः(३४०९) कालभृगु(३४३१)र्जगद्धगः(३४३८) ॥ ११ ॥

[7]इमाश्चतुर्विंशतिज्याः स्फुटत्वायार्कसोमयोः ।

---

तथाचायं श्लोकार्थः–उक्तो देशसंस्कारः । दोर्ज्यासंस्कारः सम्प्रति कथ्यते –अर्कदोर्ज्याफलानयनविधिरुत्तरत्र १५श्लोके स्फुटीकरिष्यते । तदेतत् दोर्ज्याफलं रविमन्दफलमिति चोच्यते । तत् फलं गो(३)सङ्ख्यया हत्वा दिव्य(१८)संख्यया विभजेत् । लब्धा विलिप्तिकाः, विकला इति यावत् सूर्यस्य संस्कारार्थम् । तदेव ज्याफलं गो(३)संख्ययैव हत्वा प्रजा(८१)संख्यया विभागे लब्धा लिप्ताः, कला इति यावत्, चन्द्रस्य संस्कारार्थम् । संस्कारार्थं कि करणीयाः? हातव्या उत योक्तव्याः? आह–यथाऽर्के तत्फलात् तथा । मेषादि तुलादि च गोळद्वयम् । तत्र अर्कस्य मेषादित्वे ऋणम्, तुलादित्वे धनमित्युपरिष्टाद् वक्ष्यति–स्वस्वगोळयोः सऋणं धनमिति (श्लो.१५) । दोर्ज्याफलेऽप्ययं न्यायः समानः–मेषादिगोळस्यर्णम्, तुलादिगोळस्य धनमिति । संस्कारक्रम उपरिष्टाद् भवति ।

१ "देशयोः शुद्धये" इति क्वचित् । "देशदोःशुचये" इति च क्वचित् । "दानक्षिष्णुभ्याम्" इत्यपि क्वचित् । सर्वथाऽप्यस्फुटार्थं श्लोकार्द्धम् ।

२ चन्द्रोच्चकरणविधिः पूर्वमुक्तः । सूर्योच्चं तु नियतमित्याह–उच्चम् । अत्र "दृष्टा स्त्री" इति क्वचित् । उभयथाऽपि सङ्ख्यायां न विरोधः । तथाच सूर्योच्चम्– रा. भा. क. वि.
क्वचिच्च "भागनाशयोः" इति पाठः प्रामादिक एव । ०२ – १८ – ०० – ००

३ इदानीं दोर्ज्यासंस्कारं निरूपयितुमादौ चतुर्विंशतिज्या आह द्वाभ्यां श्लोकाभ्याम्–शरीरनुदित्यादिना । अत्र "शरीररद्धीभवनः" इति क्वचित्पाठः प्रामादिकः । उत्तरार्द्धे च "निरालयो–" इति पाठः प्रामादिकः । "नृपाधिको–" इति कोशेषु लुप्तम् । सङ्ख्यानुगुण्याय च पूरितम् । "सुतपरः" इति कोशेषु पठ्यते । संख्यानुगुण्याय "सुतखरः" इति पठितम् ।

४ "वमी हरिः" इति क्वचित् पाठः प्रामादिकः ।

५ "नमःखगः" इति च क्वचित् पाठः प्रामादिकः ।

६ "रसो बली" इति चतुरक्षराणि कोशेषु लुप्तानीति सङ्ख्यानुगुण्याय पूरितानि ।

७ ज्यार्द्धमेवात्र ज्याशब्देनोच्यते । तथा ह्युक्तम्– "अर्द्धज्यैव ज्याभिधानाऽत्र वेद्या" इति । अत एवोत्तरत्र "शुभाङ्गपरिमाणेन यदि ज्यार्द्धं न पूर्यते" इत्याह ।

चतुर्विंशतिवाक्यानि त्रिराशीनामिमान् विदुः[१] ॥ १२ ॥

[२]शुभाङ्ग(३-४५)परिमाणेन यदि ज्यार्द्धं न पूर्यते ।
वर्त्तमानज्यया ह(?हि)त्वा मुरारि(२२५)फलसङ्ग्रहः ॥ १३ ॥

---

१ एकस्मिन् राशावष्टौ ज्या इति त्रिराशीनामाहत्य चतुर्विंशतिर्ज्या भवन्ति । पुनश्चतुर्थादारभ्य षष्ठपर्यन्तमिमा एव चतुर्विंशतिर्ज्याः । सप्तमान्नवमपर्यन्तम्, नवमाच्चाऽद्वादशमिति । ओजयोः क्रमेणानोजयोर्विपर्ययेणेति विशेषः । तथाच मेषादित्रिकं राशिचक्रस्य प्रथमः पादः । कर्कादिकन्यान्तं त्रिकं द्वितीयः पादः । तुलादित्रिकं तृतीयः पादः । मकरादिमीनान्तं त्रिकं चतुर्थः पाद इति । तदेतत् समनन्तरश्लोके स्फुटम्– "राशिचक्रं चतुष्पादम्" इति ।

तथाचैवं क्रमेण ज्याः —

१) शरीरनुत् (२२५)
२) धीभवनः (४४९)
३) कथञ्जनः (६७१)
४) नळीजनः (८९०)
५) मानपट्टः (११०५)
६) शुकालरः (१३१५)
७) निरामयः (१५२०)
८) धीःपथिकः (१७१९)
९) नृपाधिकः (१९१०)
१०) बुधोनरः (२०९३)
११) सुतखरः (२२६७)
१२) कलाविराट् (२४३१)
१३) महाशरः (२५८५)
१४) दूरसरः (२७२८)
१५) धमीहरिः (२८५९)
१६) हसन्धुरः (२९७८)
१७) वेदनगः (३०८४)
१८) सुसङ्कुलः (३१७७)
१९) तमःखगः (३२५६)
२०) पारबलम् (३३२१)
२१) रसो बली (३३७२)
२२) धनावलिः (३४०९)
२३) कालभृगुः (३४३१)
२४) जगद्धगः (३४३८)

२ अत्र श्लोके क्वचित् कोशे "यदि ज्यार्त्थम्" इति पाठः प्रामादिकः । तृतीयपादे च यद्यपि सर्वत्र "वर्त्तमानज्यया हत्वा" इति पठ्यते । 'हित्वा' इति पठनीयमिति भाति ।

तथाचायमर्थः—

एकैकस्य राशेस्त्रिंशतिर्भागा इति त्रिराशीनां नवतिर्भागा भवन्ति । तत्र च चतुर्विंशतिर्ज्याः । तथाचैकैकस्य ज्यायाः परिमाणं शुभाङ्ग(३-४५)सम्मितं भवति । तदेतच्छुभाङ्गपरिमाणमित्युच्यते–

२४ ) ९० ( ३ भागाः
७२
———
१८ × ६०
२४ ) १०८० ( ४५ कलाः
९६
———
१२०
१२०
———

यदि च निश्शेषं ज्यार्द्धं न पूर्यते तदाऽतीतज्यां वर्त्तमानज्यया हित्वा शेषं मुरारि(२२५)णा विभजेत् । तल्लब्धस्य फलस्यातीतज्यया सङ्ग्रहे निष्कृष्टज्यालाभ इति । गणितक्रम उपरिष्टाद् भविष्यति ।

(३ × ६० = १८० + ४५ = २२५ कलाः)

[1]राशिचक्रं चतुष्पादमोजानोजद्विपादयोः ।
[2]अतीतानागतौ भागौ भुज इत्युच्यते बुधैः ॥ १४ ॥

[3]स्वोच्चोनार्काब्जयोर्दोर्ज्या गो(३)स(७)ङ्ख्यां वर्द्धिताः क्रमात् ।
अज(८०)लब्धकलाः स्वस्वगोळयोः सऋणं धनम् ॥ १५ ॥

---

१– दोर्ज्येत्यत्र दोरिति किमुच्यते? आह– राशिचक्रम् । राशिचक्रं पूर्वोक्तदिशा चतुष्पादम् । तत्र मेषादित्रिकं तुलादित्रिकं चेति द्वौ पादौ ओजौ । कर्कादित्रिकं मकरादित्रिकं चेति द्वौ पादावनोजौ, युग्माविति यावत् । तत्र ओजद्विपादयोः अतीतः पादो भुज इत्युच्यते । अनोजद्विपादयोरनागतः पादो भुज इत्युच्यते बुधैरिति । एतदग्रेऽप्युत्तरत्र गणिते स्फुटीभविष्यति ।

२ क्वचित् "अतीतानागतौ पादौ" इति पाठः ।

३ "सोचोनार्का–" इत्यादिः कोशपाठः प्रामादिकः । स्वोच्चोनार्कस्य गो(३)सङ्ख्यया गुणनम्, अजेन(८०) विभागश्च । स्वोच्चोनचन्द्रस्य सत्(७)सङ्ख्यया गुणनम् । अजेन(८०) विभागश्च । लब्धाः कलाः मेषादित्वे ऋणमिति मद्ध्यमराश्यादेर्हापयेत् । तुलादित्वे धनमिति मद्ध्यमराश्यादेर्योजयेत् । तथाचायं गणितक्रमः—

सूर्यस्फुटं यथा—

| | |
|---|---|
| पूर्वोक्तदिने मद्ध्यमरविः— | ९ – १७ – १५ – ५६ — |
| रव्युच्चम्— | २ – १८ – ०० – ०० |
| स्वोच्चोनरविः— | ६ – २९ – १५ – ५६ रविमद्ध्यकेन्द्रम् । |

षड् राशयोऽतीताः । तथाच तृतीयं त्रिकमोजपादः । उक्तं हि–"राशिचक्रं चतुष्पादमोजानोजद्विपादयोः" इति । ओजस्यातीतो भागो भुज इत्यप्युक्तम्–" अतीतानागतौ भागौ भुज इत्युच्यते बुधैः" इति । तथाचात्र भुजांशः विकला विहाय-२९ भागाः १५ कलाः । भागानामपि कलात्वेन परिवर्त्तने आहत्य—२९ × ६० = १७४०+१५ = १७५५ कलाः । तस्य च भुजांशस्य शुभाङ्गपरिमाणेन(२२५) विभागः-

```
२२५ ) १७५५ ( ७
      १५७५
      ----
       १८०
```

सप्तमं ज्यार्द्धं पूर्णम् । ततः १८०कला अवशिष्टाः । ततः वर्त्तमानज्यया ऽग्रग्याऽतीतां सप्तमीं ज्यां हित्वा मुरारि(२२५)फलसङ्ग्रहे निष्कृष्टज्यालाभः । तदेतदुक्तम्- "शुभाङ्गपरिमाणेन यदि ज्यार्द्धं न पूर्यते । वर्तमानज्यया हित्वा मुरारिफलसङ्ग्रहः" इति ।

```
वर्त्तमानज्या (धीःपथिकः)  १७१९
अतीतज्या   (निरामयः)    १५२०
                        ----
                         १९९
```

$$\frac{१९९ \times १८०}{२२५} = \frac{७९६}{५} = १५९ \ (१/५)$$

तथाच अतीतज्यायाः १५९ कलाभिः सङ्ग्रहे निष्कृष्टज्यालाभः ।

```
१५२०
 १५९
----
१६७९
```

तथाच निष्कृष्टज्या १६७९ । तस्या गो(३)सङ्ख्यया गुणनम्, अज(८०)सङ्ख्यया विभागः । तदेतदुक्तम्–"दोर्ज्या गोसङ्ख्यां वर्द्धिताः क्रमात् । अजलब्धकलाः स्वस्वगोळयोः सऋणं धनम्" इति ।

१६७९ × ३
८० ) ५०३७ ( ६३ कलाः = ( १भा. ३क.)
४८० तदेतत् दोर्ज्याफलमित्युच्यते ।
२३७
२४०

मेषादित्वे ऋणम्, तुलादित्वे धनमिति चोक्तम् "स्वस्वगोळयोः सऋणं धनम्" इति । अस्य च तुलादित्वाद्धनमेव । ततश्चैताः कलाः मद्ध्यमस्य राश्यादौ योजनीयाः—

९ – १७ – ३५ – ५६
०१ – ०३

९ – १८ – १८ – ५६

ततः दोर्ज्यासंस्कारार्थं दोर्ज्याफलात् गो(३)घ्नात् दिव्येन(१८) विभागे लब्धा विलिप्ताः स्वस्वगोळयोः सऋणं धनमित्युक्तम्–"अर्कदोर्ज्याफलाच्छुद्धाद् यथाऽर्के तत्फलात् तथा। गोघ्नाद् दिव्यप्रजाभ्यां विलिप्ता लिप्ता इनाब्जयोः" इति । तथाच दोर्ज्याफलम्—

६३ × ३
१८ ) १८९ ( १० विकलाः
१८०

एता विकला अपि तुलादित्वाद्योजनीयाः ।

तद्यथा— ९ – १८ – १८ – ५६
१०

९ – १८ – १९ – ०६ रविस्फुटम् ।

अथ चन्द्रस्फुटं यथा—

मद्ध्यमचन्द्रः— ०१ – ०३ – २५ – ००

तस्य अर्कदोर्ज्याफलेन संस्कारः । तथाहि अर्कदोर्ज्याफलम्– ६३कलाः । तस्य गो(३)सङ्ख्यया गुणनम्, प्रजा(८२)सङ्ख्यया विभागः । लब्धाः कला योजनीयाः । उक्तं हि "यथाऽर्के तत्फलात् तथा । गोघ्नाद् दिव्यप्रजाभ्यां विलिप्ता लिप्ता इनाब्जयोः" इति । तथाच $\frac{\text{अर्कदोर्ज्याफलम्} \times \text{गो}}{\text{प्रजा}} = \frac{६३ \times ३}{८२} = \frac{१८९}{८२}$

८२ ) १८९ ( २ कलाः
१६४
२५ × ६०
८२ ) १५०० ( १८ विकलाः
८२
६८०
६५६

०१ – ०३ – २५ – ००
०२ – १८

०१ – ०३ – २७ – १८ दोर्ज्याफलसंस्कृतो मद्ध्यमचन्द्रः ।

ततश्चन्द्रोच्चं हापयेत्—

| | |
|---|---|
| मद्ध्यमचन्द्र - | ०१ - ०३ - २७ - १८— |
| चन्द्रोच्चम् — | ०८ - २५ - ५९ - ३६ |
| स्वोच्चोनचन्द्रः— | ०४ - ०७ - २७ - ४२ (चन्द्रकेन्द्रम्) |

अस्यानोजपादत्वादनागतः पादो भुजः-

०६ - ०० - ०० - ००—
०४ - ०७ - २७ - ४२

०१ - २२ - ३२ - १८ भुजांशः

भुजांशस्य कलात्वेन परिवर्त्तने— ३० + २२ =
५२ × ६० = ३१२० + ३२ = ३१५२ कलाः।

ततः पूर्ववदेव "द्युभाङ्गपरिमाणेन—" इत्याद्युक्तसंस्कारः—

२२५ ) ३१५२ ( १४
२२५
९०२
९००
२

तथात्र पञ्चदशी वर्त्तमानज्या (धमीहरिः) — २८५९
चतुर्दशी अतीतज्या (दूरसरः)— २७२८
१३१

१३१ × २
२२५ ) २६२ ( १
२२५

२७२८
१
२७२९

ततः "गोत्सद्भयां वर्द्धिताः क्रमात्। अजलब्धकलाः स्वस्वगोळयोः सर्णं धनम्" इत्युक्तः संस्कारः—

२७२९ × ७
८० ) १९१०३ ( २३८कलाः (३भा. ५८क. ४७विक.)
१६० =
३१०
२४०
७०३
६४०
६३ × ६०
८० ) ३७८० ( ४७। विकलाः
३२०
५८०
५६०
२०

मेषादित्वात् दोर्ज्याफलसंस्कृतात् मद्ध्यमाद् राश्यादेरेतद्धापनीयम्—

०१ - ०३ - २७ - १८ -
०३ - ५८ - ४७

०० - २९ - २८ - ३१ चन्द्रस्फुटम्

[ तदेकदिनगा लिप्ता ग्रहाणां स्वस्वभुक्तयः[१]]
[२]कल्यब्दौघो धेनुभवो(४४०९) युक्तः सौरैर्वृथाफलैः ।
एतस्मान्मापते(६१५)र्लब्धं राश्याद्यायनमुच्यते ॥ १६ ॥

[३]प्रभारत्नं(२४२) धीसवनं(४७९)
गानस्थानं(७०३) जनेधनम्(९०८) ।
देहिनित्यं(१०८८) सुगप्रायं(१२३७)
सावलोक्यं(१३४७) तटिद्वपुः(१४१६) ॥ १७ ॥

---

१ इदमर्द्धमुपरिष्टाद् (श्लो. २०) भविष्यति । पुनरत्रापि पठनं पुनरुक्तमिति भाति । लिपिकृतत्प्रमादः स्यात् ।

२ अयनांशनिर्णयः सम्प्रति कथ्यते—

सौरैः वृथाफलैः द्वितीयश्लोकोक्तैः (६६५) युक्तः धेनुभवः (४४०९) सम्प्रति गतः कल्यब्दौघो भवति । ४४०९ + ६६५ = ५०७४ तस्य मापते(६१५)र्विभागे राश्याद्यायनलाभः ।

६१५ ) ५०७४ ( ८ राशयः
४९२०
१५४ × ३०
४६२०

६१५ ) ४६२० ( ७ भागाः
४३०५
३१५ × ६०
६१५ ) १८९०० ( ३० कलाः
१८४५०
४५०

४५० × ६०
६१५ ) २७००० ( ४४ विकलाः
२४६०
२४००
२४६०

तथाचायनांशः— ०८ – ०७ – ३० – ४४

३ अस्य दोर्ज्यासंस्कारार्थं नववाक्यान्याहानेन । अत्र 'धीवसनं' इति क्वचित् कोशपाठः प्रामादिकः । तथा-तृतीयचरणे–"सुप्रमयम्" इति च । एतानि वाक्यानि भगवत्पादः मूलग्रन्थेभ्य उद्धारेत्यवगम्यते । अत एव भगवत्पादात् प्राचीने (क्रि. श. ६८९) देवचार्यनाम्ना विदुषा विरचिते करणरत्नाख्येऽपूर्वतमे ग्रन्थेऽपि एतान्येव वाक्यानि पठ्यन्ते ।

तथाचैवं क्रमेण नव ज्याः—

१) प्रभारत्नम् (२४२)
२) धीसवनम् (४७९)
३) गानस्थानम् (७०३)
४) जनेधनम् (९०८)
५) देहिनित्यम् (१०८८)
६) सुगप्रायम् (१२३७)
७) सावलोक्यम् (१३४७)
८) तटिद्वपुः (१४१६)
९) नवभार्या (१४४०)

पूर्वोक्तस्यायनांशस्य (०८–०७–३०–४४) ओजपादत्वादतीतः पादांशो भुजः । तथाच विकला विहाय भुजांशः- ०२ – ०७ – ३०
तस्य कलात्वेन परिवर्त्तने २ × ३० = ६० + ७ = ६७ × ६० = ४०२० + ३० = ४०५० = कलाः ।
ततश्च ज्ञोनन्तो(६००)ऽत्र तु हारकः ।

६०० ) ४०५० ( ६
३६००
४५०

नवभार्ये(१४४०)ति वाक्यानि
ज्ञोनन्तो(६००)ऽत्र तु हारकः ।
तद्दोर्ज्यालिप्तिका भानौ
युक्त्वा त्यक्त्वाऽथ गोळयोः ॥ १८ ॥

'अर्कपूज्यादिवाक्योक्त-
दोर्विलिप्ताश्चरोदिताः ।
अर्कपूज्यः(१११०) सुधाकरः(२१९७)
रतिक्रीडो(३२६२) नुतः प्रभुः(४२६०) ॥ १९ ॥

---

षड्ज्यार्द्धमतीतम् । ततः सप्तम्या वर्त्तमानज्यया अतीतज्यां ह्रापयेत्—

१३४७ –
१२३७
११०

$$\frac{३४५० \times ११०}{६००} = \frac{१६५}{२} = ८२॥$$

१२३७ +
८३
१३२० कलाः

६० ) १३२० ( २२ भागाः
१२०
१२०
१२०

तदेतज्ज्याफलं सूर्यस्फुटे योजनीयम् —
०९ – १८ – १९ – ०६ +
२२
१० – १० – १९ – ०६

तदेतदुक्तम्—"तद्दोर्ज्यालिप्तिका भानौ युक्त्वा त्यक्त्वाऽथ गोळयोः" इति । युक्त्वा अथवा त्यक्त्वेत्यर्थः । व्यवस्थितविकल्पोऽयम् । पूर्ववन्मेषादित्वे त्यक्त्वा,तुलादित्वे युक्त्वा इत्यर्थः ।

१ अस्य पुनरर्कपूज्यादिवाक्येन चरदलसंस्कारः करणीय इत्याह– अर्केत्यादि । अत्रोत्तरार्द्धे "अर्कः पूज्यः" इत्यपि कोशेषु पठ्यते । उभयथाऽपि न दोषः । उत्तरश्लोके "स्मरादितः" इत्यपि पाठः । स्मराजितः इति क्वचित् पाठः प्रामादिकः । तथाचैवं क्रमेण नवज्या. —

१) अर्कपूज्यः (१११०)
२) सुधाकारः (२११७)
३) रतिक्रीडः (३२६२)
४) नुतः प्रभुः (४२६०)
५) अलंकृष्णः (५१३०)
६) हितोद्देशः (५८६८)
७) गतिभूतः (६४६३)
८) स्मरार्द्दितः (६८२५)
९) शशिधाता (६९५५)

तथाचायं क्रमः—
अयनांशसंस्कृतं सूर्यस्फुटम्— १० - १० – १९ - ०६
अस्यानोजपादत्वादनागतो भागो भुजः —
१२ – ०० – ०० - ००—
१० – १० – १९ – ०६
०१ – १९ – ४० – ५४

कलात्वेन परिवर्त्तने ३० + १९ = ४९ × ६० = २९४० + ४० = २९८० कलाः ।

ज्ञोनन्तोऽत्र तु हारकः—
६०० ) २९८० ( ४
२४००
५८०

चतस्रो ज्या अतीताः । तथाच पञ्चमी ज्या (अलंकृष्णः)— ५१३० विलिप्ताः ।

अलङ्कृष्णो (५१३०) हितोद्देशो(५८६८)
गतिभूतः(६४६३) स्मरार्दितः(६८२५) ।
शशिघाते(६९५५)ति वाक्यानि
ज्ञोनन्तो(६००)ऽत्र तु हारकः ॥ २० ॥

[1]तदेकदिनगा लिप्ता ग्रहाणां स्वस्वभुक्तयः ।
[2]चरार्द्धात् स्वस्वभुक्तिघ्नादनन्ताङ्ग(३६००)हृताः कलाः ।

---

अत्र विलिप्तापदेन गुर्वक्षराणि ग्राह्याणीति भाति । षष्टिर्गुर्वक्षराणि एका विनाडिकेति अस्य षष्ट्या विभागे चरविनाडिकालाभः—

६० ) ५१३० ( ८५॥ विनाडिकाः
४८०
———
३३०
३००
———
३०
———

यद्यपि सर्वत्र कोशेषु– "विलिप्ताः" इत्येव पठ्यते । तथाऽपि गणितसौष्ठवाय गुर्वक्षरग्रहणेन गणितक्रमोऽस्माभिः प्रदर्शित. । तथाऽन्यान्यदेशेषु तत्तदक्षांशभेदेन भिद्यमानश्चरदलसंस्कारोऽप्यस्य संक्षेपशास्त्रत्वान्न ग्रन्थकृता प्रदर्शित इति भाति ।

१ अथ चरदलसंस्कारार्थं मद्ध्येऽपेक्षितं रविचन्द्रगतिस्फुटमाह-तदेकदिनगा । अत्र "स्वस्वभूतयः" इति क्वचित् कोशपाठः प्रमादिकः । एकस्मिन् दिने यावती सूर्यस्य स्फुटगतिः सैव सूर्यभुक्तिः । यावती चन्द्रस्य सा चन्द्रभुक्तिरिति ।

तथान्वैकस्मिन् दिने रविगतिः- ५९कलाः ८विकलाः
एकस्मिन् दिने चन्द्रगतिः– ७९० " ३५ "

मद्ध्यमा गतिरियम् । स्फुटगतिविधिः सङ्क्षेपशास्त्रत्वान्नात्र विवृतः । अथापि पूर्वोत्तरदिनयोः स्फुटयोरन्तरमेव स्फुटगतिर्भवति ।

तथाहि दशमीदिने रविस्फुटम्— ०९ – १९ – २० – १२— (स्फुटप्रक्रिया च नवमीरविस्फटवदेव
नवमीदिने रविस्फुटम्— ०९ – १८ – १९ – ०६ करणीयेति स्फुटमिति न पृथग्विलिख्यते)
———
स्फुटगतिः—(रविभुक्तिः) — ०० – ०१ – ०१ – ०६
———

कलात्वेन परिवर्त्तने ६१कलाः ६विकलाः । तथाच तदेकदिनगाः ६१/१०लिप्ताः तद्दिनभुक्तिः ।

एवं दशमीदिने चन्द्रस्फुटम्- — ०१ – १३ – २६ – ४२—
नवमीदिने चन्द्रस्फुटम् — ०० – २९ – २८ – ३१
———
स्फुटगतिः (चन्द्रभुक्तिः) — ०० – १३ – ५८ – ११
———

कलात्वेन परिवर्त्तने १३×६०=७८०+५८=८३८कलाः ११ विकलाः तदेकदिनगा चन्द्रभुक्तिः ।

२ इदानीं चरदलसंस्कारमाह—चरार्द्धात् । अत्र "स्वस्वभूतिघ्नात्" इति क्वचित्पाठः प्रामादिकः । चरार्द्धस्य स्वस्वभुक्त्या गुणनम् । एकस्मिन् दिने अनन्ताङ्ग(३६००)मिता विनाडिका इति तावतीभिः संख्याभिर्लब्धं विभ-

ऋणं प्रातर्द्धनं सायमुत्तरे दक्षिणेऽन्यथा ॥ २१ ॥

[1]देशान्तरदोर्विवरजसंस्कारविधिर्विधीयते मद्ध्ये ।
चरदलसंस्कारविधिः स्फुटक्रियानन्तरं सद्भिः ॥ २२ ॥

---

जेत् । लब्धाः कलाः प्रातश्चेत् स्वस्वस्फुटात् ह्रापयेत् । सायं चेद् योजयेत् । इदमुत्तरगोळे । दक्षिणे चेत् प्रातर्द्धनं सायमृणमिति विपर्ययेणेति ।

तथाचायं क्रमः—८५॥ चरविनाडिका इत्युक्तम् । तथाच चरार्द्धम् ४२॥ भवति । तस्य सूर्यभुक्त्या गुणनम् । अनन्ताङ्केन(३६) विभागश्च—

$$\frac{\text{चरार्द्धम्} \times \text{रविभुक्तिः}}{\text{अनन्ताङ्कम्}} = \frac{४२\cdot७५ \times ६१\cdot१}{३६००}$$

```
 ४२·७५ × ६१·१
 ४·२७५
 ४२·७५
२५६५·
२६१२·०२५
```

विकलात्वेन परिवर्तने—

$$\frac{२६१२\cdot०२५ \times ६०}{१५६७२१\cdot५}$$

```
३६०० ) १५६७२१·५ ( ४४ विकलाः
       १४४००
        १२७२१·५
        १४४००
```

तदेता विकलाः सूर्यस्फुटे योजनीयाः—

```
०९ – १८ – १९ – ०६   सूर्यस्फुटम्
                ४४
०९ – १८ – १९ – ५०   चरदलसंस्कृतं सूर्यस्फुटम्
```

चन्द्रेऽप्येवं संस्कारः कर्तव्यः—

$$\frac{\text{चरार्द्धम्} \times \text{चन्द्रभुक्तिः}}{\text{अनन्ताङ्कम्}} = \frac{४२\cdot७५ \times ८३८}{३६००}$$

```
  ४२·७५ × ८३८
 ३४२·
 १२८२·५
३४२००·
३६०० ) ३५८२४·५ ( १० कलाः
       ३६०००
```

तदेताः कलाः चन्द्रस्फुटे योजनीयाः—

```
०० – २९ – २८ – ३१   चन्द्रस्फुटम् ।
           १०
०० – २९ – ३८ – ३१   चरदलसंस्कृतं चन्द्रस्फुटम्
```

१ "देशान्तरे दोर्विवरसंस्कार–" इति क्वचित्पाठः । श्लोकार्थः स्फुटः ।

25

[1]चन्द्रात् पूर्वोक्तसंस्कारकृताद् दिनपतिं त्यजेत् ।
[2]शेषं षष्ट्या घटीभिस्तु विभज्याऽप्ता गता तिथिः(?) ॥ २३ ॥

वर्त्तमानां द्वादशभिर्ल्लितिकाभिर्हरेत् तिथिम् (?) ।
गतास्तु नाडिका ज्ञेयाः शिष्टा लिप्ताः प्रकीर्तिताः (?) ॥ २४ ॥

[3]एकाऽतिद्वादशीवृद्धौ नो चेद् वृद्धौ तु षोडश ।
द्वयेकलिप्ती समे ह्रासे चतुष्कादुत्तरं त्विदम् ॥ २५ ॥

---

१ ततः पूर्वोक्तसंस्कारसंस्कृतात् चन्द्रस्फुटात् सूर्यस्फुटं त्यजेत्—

तथाच संस्कृतं चन्द्रस्फुटम्— ०० – २९ – ३८ – ३१
,, रविस्फुटम्— ०९ – १८ – १९ – ५०
०३ – ११ – १८ – ४१

कलात्वेन परिवर्त्तने—
३ × ३० = ९० + ११ = १०१ × ६० = ६०६० + १८ = ६०७८ कलाः ।

२ इतः परं तिथिघटिकानिष्पादनप्रकारप्रदर्शकः सार्द्धः श्लोको न स्फुटाभिप्रायः । एतावत्पर्यन्तं स्फुटविधानं निरूप्यात्रान्ते मद्ध्यममानेन तिथिनिर्णयवर्णनं किमाशयमिति न ज्ञायते । कथमिदं सङ्गम्येतेति महान्तः प्रमाणम् । निष्कृष्टघटिकालाभार्त्थं स्फुटविधानमेव ह्यत्राप्यपेक्षितम् । तथाचेयमत्रापेक्षिता गणितप्रक्रिया—

एकस्मिंन् तिथौ सूर्यस्य चन्द्रस्य च गत्यन्तरं ७२० कला इति तावत्या सङ्ख्यया विभागे समतीतास्तिथयो लभ्यन्ते—

७२० ) ६०७८ ( ८ गतास्तिथयः
५७६०
३१८

तथाच नवमी तिथिरित्यायातम् । नवमीतिथौ चन्द्रेणाक्रान्ताः कलाः ३१८ इति च स्थितम् । तथाचास्मिन् तिथौ चन्द्रेणेतः परमाक्रन्तव्याः कलाः— ७२० – ३१८ = ४०२ इत्यायातम् । एतद्दिने ८३८ कलाः चन्द्रभुक्तिः, ६१ कलाः रविभुक्तिरिति चोक्तम् । तयोरन्तरमेव हि तद्दिने षष्टिघटिकासु स्फुटं गत्यन्तरम्–८३८–६१=७७७कलाः । तथाच षष्टिघटिकासु ७७७कलाश्चेत् ४०२ कलातिक्रमणार्त्थं कियत्यो घटिका अपेक्षिता इति निर्णये नवमीतिथेर्न्निष्कृष्टघटिकालाभः—

$\frac{४०२ \times ६०}{७७७}$ =

४०२ × ६०
७७७ ) २४१२० ( ३१ घटिकाः
२३३१
८१०
७७७
३३

३३ × ६०
७७७ ) १९८० ( २ विघटिकाः
१५५४
४२६

तथाच तद्दिने नवमीतिथिः ३१ घटिकापर्यन्तमिति सर्वं सुस्थम् ॥

३ इदानीं तिथिशुद्धौ सत्यां उपोषणशुद्धये वेधनिर्णयमाह–एका । तिथीनामतिवृद्धिर्वृद्धिः समत्वं ह्रास इति चतुष्टयी गतिर्भवति। यदि दशम्येकादशीद्वादश्यः उत्तरोत्तरं वर्द्धन्ते, सा च वृद्धिः चतुःपञ्चषड्घटिकात्मिका, तदा

[1]उदयव्यापिनी दर्शा पौर्ण्णमासी तु यामिका ।
मद्ध्याह्नव्यापिनी श्रोणा उपोष्या विष्णुतत्परैः ॥ २६ ॥

उपवासफलप्रेप्सुर्जह्याद् [2]भुक्तचतुष्टयम् ।
पूर्वापरे तु सायाह्ने सायम्प्रातस्तु मद्ध्यमे ॥ २७ ॥

[3]कलार्द्धं द्वादशीं दृष्ट्वा निशीथादूर्ध्वमेव तु ।
आमद्ध्याह्नाः क्रियाः सर्वाः कर्त्तव्याः शम्भुशासनात् ॥ २८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितः
तिथिनिर्ण्णयः समाप्तः

---

सा अतिवृद्धिरित्युच्यते । तद् यथा—४५ घटिकाः दशमी, ५०घटिकाः एकादशी, ५५घटिकाः द्वादशी— इत्यादि । यदि सा वृद्धिरेकद्विविघटिकात्मिका तदा केवलं वृद्धिः साम्यवृद्धिरिति चोच्यते । तद् यथा— २३घटिकाः दशमी, २४घटिकाः एकादशी, २५घटिका द्वादशी इत्यादि । यदा न वृद्धिर्न ह्रासस्तदा साम्यम् । तद्यथा—४६॥ घटिकाः दशमी, ४७घटिकाः एकादशी, ४६॥घटिकाः द्वादशी इत्यादि । तिथीनामुत्तरोत्तरं ह्रासो ह्रासः । तद् यथा—५५ घटिकाः दशमी, ५०घटिकाः एकादशी, ४०घटिकाः द्वादशी इत्यादि । तथाचायं श्लोकार्थः– अतिवृद्धौ नो चेत् अतिवृद्धावसत्यां एकद्वित्रिकघटिकात्मिकायां समवृद्धाविति यावत् । चतुष्कादुत्तरं 'चतस्रो घटिकाः प्रातः' इत्युक्त-घटिकाचतुष्टयात् प्राक् एका घटिका दशमीवेधरहिता चेदुपोष्या भवत्येकादशी । ततश्च वृद्धिपक्षे ५५घटिकातः परं दशमीसद्भावे सैकादशी विद्धा भवति । 'वृद्धौ तु षोडश' इत्यपरं वाक्यम् । वृद्धौ अतिवृद्धौ चतुरादिघटिकावृद्धा-विति यावत्, घटिकाचतुष्टयात् प्राक् षोडशलित्तयः दशमीवेधवर्जिताश्चेदेकादश्युपोष्या भवति । द्वादश लित्तय एका घटिका । पञ्चविघटिका एका लित्तिः । तथाच षोडश लित्तय इति एका घटिका विंशतिर्विघटिकाः । एवञ्च चतुरादिघटिकावृद्धिपक्षे ५४घ. ४०विघटिकातः परं दशमीस्पर्शे सैकादशी विद्धा भवति । समतिथिपक्षे द्वे लित्ती, दशविघटिकाः । इदमपि घटिकाचतुष्टयात् प्राक् । तथाच साम्यपक्षे ५५घ. ५०विघटिकातः परं दशमीस्पर्शे सैका-दशी विद्धा भवति । तिथिह्रासे तु चतुष्कादुत्तरं एका लित्तिः । पञ्च विघटिका इति यावत् । तथाच ह्रासपक्षे ५५ घ. ५५विघटिकातः परं दशमीस्पर्शे सैकादशी विद्धा भवतीति ।

१ इदानीं विष्णुपञ्चकोपवासिनां व्यवस्थामाह– उदयव्यापिनी । दर्शा अमावास्या उदयव्यापिनी चेदुपोष्या भवति । "एकत्रस्थितचन्द्रार्कदर्शनाद् दर्श उच्यते" इति प्राचीनम् । तिथिशब्दस्योभयलिङ्गत्वाद् दर्शस्तिथिः दर्शा तिथिरित्युभयथाऽपि भवति । पौर्ण्णमासी तु यामिका यामव्यापिनी ग्राह्या । याम इति ७॥ घटिकाः । श्रोणा श्रवणेत्यकोऽर्थः । भागवतादिषु प्रयोगात् ।

२ "भक्तचतुष्टयम्" इति पाठान्तरम् । भुक्तमिति भोजनम् ।

३ इदानीं साधनद्वादश्यां विधानमाह–कलार्द्धम् । २॥ विघटिकाः इति यावत् । तदानीं द्वादशीव्रतलोपनिवा-रणाय निशीथादूर्ध्वमेव आरभ्य सर्वाः क्रियाः कर्त्तव्याः । सूर्योदयात् परं आमद्ध्याह्नात् करणीया अपि तस्मिन् दिने सूर्योदयात् पूर्वमेवार्द्धरात्रात्परमारभ्य कृताश्चेन्न प्रत्यवायः, प्रत्युत द्वादशीव्रतनिष्ठानिमित्तं पुण्यमेव प्राप्नोतीत्यर्थः ।

---

# श्रीस्तुतिः*

[ प्रथमं स्तोत्रम् ]

ॐ ॥ विश्वस्थितिप्रळयसर्ग्गमहाविभूति-
वृत्तिप्रकाशनियमावृतिबन्धमोक्षाः ।
यस्या अपाङ्गलवमात्रत ऊर्जिता सा
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ १ ॥

ब्रह्मेशशक्ररविधर्म्मशशाङ्कपूर्व-
गीर्वाणसन्ततिरियं यदपाङ्गलेशम् ।
आश्रित्य विश्वविजयं विदधात्यचिन्त्या
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ २ ॥

धर्म्मार्त्थकामसुमतिप्रचयाद्यशेष-
सन्मङ्गलं विदधते यदपाङ्गलेशम् ।
आश्रित्य तत्प्रणतसत्प्रणता अपीडया
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ३ ॥

---

* यद्यपीयं स्तुतिः प्रचलितपाठे द्वादशस्तोत्रसप्तमाद्ध्यायतया पठ्यते । श्रीस्तुतिरिति नामापि न पठ्यते। तथाऽपि श्रीहृषीकेशतीर्त्थीये स्तोत्राणां याऽनुपूर्वी निर्दिष्टा सैवात्रानुसृता । एतेषां स्तोत्राणां पृथग् ग्रथितानामेक-ग्रन्थ्यकल्पना, एकैकस्य च स्तोत्रस्य तदद्ध्यायत्वपरिकल्पना चेतीदं सर्वमर्वाचीनमिति भाति। कोशेष्वेषां स्तोत्राणामेकानुपूर्वीविरह एवैकग्रन्थतां निवारयति । अद्ध्यायकल्पना च दूरापास्ता । स्तोत्रक्रमः प्रत्येकमपि कोशेषु भिन्नः । तत्र च "स्वजनोदधि–" इत्यादि स्तोत्रं नात्र प्रविष्टम् । किन्तु तत्वसङ्ख्यानान्ते पठ्यते । तेनै-तानि स्तोत्राणि सन्दर्भविशेषेषु पृथक्पृथगेव ग्रथितानीति स्फुटम् । अत्र पठितं तृतीयं स्तोत्रम्—"शङ्खचक्रगदा-पद्म–" इत्यादि प्र. पाठे न पठ्यते । "कुरु भुंक्ष्व" इत्यादि चाद्ध्यायद्वयत्वेन प्र. पाठे पठ्यमानमत्र नैकमेव-स्तोत्रम् । अथापि नखस्तुतिसङ्ग्रहेण स्तोत्राणां द्वादशत्वसंख्या पूर्यते ।

षड्वर्गनिग्रहनिरस्तसमस्तदोषा
ध्यायन्ति विष्णुमृषयो यदपाङ्गलेशम् ।
आश्रित्य यानपि समेत्य न याति दुःखं
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ४ ॥

शेषाहिवैरिशिवशक्रमनुप्रधान-
चित्रोरुकर्म्मरचनं यदपाङ्गलेशम् ।
आश्रित्य विश्वमखिलं विदधाति धाता
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ५ ॥

शक्रोग्रदीधितिहिमाकरसूर्य्यसूनु-
पूर्वं निहत्य निखिलं यदपाङ्गलेशम् ।
आश्रित्य नृत्यति शिवः प्रकटोरुशक्तिः
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ६ ॥

तत्पादपङ्कजमहासनतामवाप
शर्वादिवन्द्यचरणो यदपाङ्गलेशम् ।
आश्रित्य नागपतिरन्यसुरैर्दुरापां
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ७ ॥

नागारिरुग्रबलपौरुष आप विष्णु-
वाहत्वमुत्तमजवो यदपाङ्गलेशम् ।
आश्रित्य शक्रमुखदेवगणैरचिन्त्यं
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ८ ॥

---

यद्यपि विश्वपतितीर्थादिभिः सर्वैरपि व्याख्यातृभिरर्वाचीन एव पाठः समादृतः । अथापि श्रीविश्वपतितीर्थ-शिष्यैरेव लिखिते सर्वमूलकोशे 'श्रीद्वादशस्तोत्राणां मूलपाठः' इत्युल्लिख्य अनेनैव प्राचीनक्रमयोगेन स्तोत्राणां लेखनं कृतमित्येतद् गमनीयम् । तदेतत्पुस्तकं श्रीपेजावरमठेऽद्यापि सुरक्षितमस्ति ।

अस्य प्रथमस्तोत्रस्य श्रीस्तुतिरिति नामैव महान्तमर्थविशेषमाविष्करोति। त्रिभिश्चरणैः श्रियो माहात्म्यवर्ण्ण-नम्, चतुर्थचरणे तस्या अपि परमपुरुषाधीनत्ववर्ण्णनमिति भगवदुपसर्ज्जनतया भगवती श्रीः स्तुता । "अहं सुवे पितरमस्य मूर्द्धन्" इत्यादिना ब्रह्मादिसकलजीवोत्तमत्वमुक्त्वा "मम योनिः–" इति तस्या अपि भगवदधी-नत्वं हि प्रतिपादयन्तीं श्रुतिप्रक्रियामनया स्तुत्याऽनुसरन्नाचार्यः स्वस्य परमश्रौततां स्मारयति ।

अत्र स्तोत्राणां प्रचलितपाठक्रमोऽत्यन्तं विभिन्न इति तदनुसारेण समग्रः स्तोत्रपाठक्रमः प्रत्येकमन्ते मुद्रित इति नात्र प्रचलितपाठनिर्द्देशः ।

आनन्दतीर्थमुनिसन्मुखपङ्कजोत्थं
साक्षाद् रमाहरिमनःप्रियमुत्तमार्थम् ।
भक्त्या पठत्यजितमात्मनि सन्निधाय
यः स्तोत्रमेतदभियाति तयोरभीष्टम् ॥ ९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यकृता
[1]श्रीस्तुतिः समाप्ता

---

१ क्वचिदियं स्तुतिः सर्वेषां स्तोत्राणामन्ते पठ्यते ।

[ द्वितीयं स्तोत्रम् ]

ॐ ॥ वन्दे वन्द्यं सदानन्दं वासुदेवं निरञ्जनम् ।
इन्दिरापतिमाद्यादिवरदेशवरप्रदम् ॥ १ ॥

नमामि निखिलाधीशकिरीटाघृष्टपीठवत् ।
हृत्तमश्शमनेऽर्काभं श्रीपतेः पादपङ्कजम् ॥ २ ॥

जाम्बूनदाम्बराधारं नितम्बं[1] चिन्त्यमीशितुः ।
स्वर्णमञ्जीर[2]संवीतमारूढं जगदम्बया ॥ ३ ॥

उदरं चिन्त्यमीशस्य तनुत्वेऽप्यखिलम्भरम् ।
वलित्रयाङ्कितं नित्यमुपगूढं श्रियैकया ॥ ४ ॥

स्मरणीयमुरो विष्णोरिन्दिरावासमुत्तमैः ।
अनन्तमन्तवदिव भुजयोरन्तरं गतम् ॥ ५ ॥

[3]शङ्खचक्रगदापद्मधराश्चिन्त्या हरेर्भुजाः ।
पीनवृत्ता जगद्रक्षाकेवलोद्योगिनोऽनिशम् ॥ ६ ॥

सन्ततं चिन्तयेत् कण्ठं भास्वत्कौस्तुभभासकम् ।
वैकुण्ठस्याखिला वेदा उद्गीर्यन्तेऽनिशं यतः ॥ ७ ॥

स्मरेत यामिनीनाथसहस्रामितकान्तिमत् ।
भवतापापनोदीड्यं श्रीपतेर्म्मुखपङ्कजम ॥ ८ ॥

पूर्णानन्यसुखोद्भासि मन्दस्मितमधीशितुः ।
गोविन्दस्य सदा चिन्त्यं नित्यानन्दपदप्रदम् ॥ ९ ॥

---

१ अत्र नितम्ब इति कटिमात्रमुच्यते । तथाहि मेदिनी —"नितम्बः स्कन्धरोधसोः स्त्रियाः पश्चात् कटावद्रेः कटके कटिमात्रके" इति । "आरोहश्च नितम्बः कटी कटीरं त्रिकस्थानम्" इति च हलायुधः । तथाहि-प्रयोगः —"तरुण्यालिङ्गितः कण्ठे नितम्बस्थानमाश्रितः । गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः" इति । नितम्बमिति नपुंसकत्वमार्षम् । नमामीति पूर्वान्वयो वा ।

२ यद्यपि मञ्जीरमिति नूपुरमुच्यते पादभूषणम्, न कटिभूषणम् । तथाऽपि मञ्जति ध्वनिं करोतीति ध्वननगुणयोगेन किङ्किणीभिः क्वणन्ती काञ्ची च मञ्जीरमित्युच्यते । 'मजि ध्वनौ' इति हि धातुः । भगवतः पादयोर्नितम्बस्य च न भेदोऽस्तीति ध्वनयितुमीदृशः प्रयोगः । काञ्च्यां मञ्जीरशब्दप्रयोगश्च क्वचित्क्वचित् दृश्यते ।

३ "चक्रशङ्खगदा–" इति क्वचित् पठ्यते ।

[1]स्मरामि भवसन्तापहानिदामृतसागरम् ।
पूर्णानन्दस्य रामस्य सानुरागावलोकनम् ॥ १० ॥

ध्यायेदजस्रमीशस्य पद्मजादिप्रतीक्षितम् ।
भ्रूभङ्गं पारमेष्ठ्यादिपददायिविमुक्तिदम् ॥ ११ ॥

सन्ततं [2]चिन्तयेऽनन्तमन्तकाले विशेषतः ।
नैवोदापुर्गृणन्तोऽन्तं यद्गुणानामजादयः ॥ १२ ॥

---

१ हनुमदवतारेऽनुभूतं अस्मिन्नवतारेऽपि स्मरामि ।

२ अहमनन्तं सन्ततं चिन्तये । अत एवान्तकालेऽपि प्रतिभातपरावरो विशेषतश्चिन्तये । त्वं च, हे भक्तवर्ग, चिन्तय इनं तम् ।

[तृतीयं स्तोत्रम्]

ॐ ॥ शङ्खचक्रगदापद्मशार्ङ्गखड्गधरं सदा ।
नमामि पितरं नित्यं [1]वासुदेवं जगत्पतिम् ॥ १ ॥

सच्चिदानन्दरूपं तमनामयमनन्तरम् ।
एकमेकान्तमभयं विष्णुं विश्वहृदि स्थितम् ॥ २ ॥

[2]नानास्वभावमत्यन्तस्वभावेन विचारितम् ।
अविशेषमनाद्यन्तं प्रणमामि सनातनम् ॥ ३ ॥

कुन्देन्दुसन्निभं वन्दे सुधारसनिभं विभुम् ।
ज्ञानमुद्रापुस्तकारि(दि)[3]शङ्खाक्षायुधधारिणम् ॥ ४ ॥

आनन्दमजरं नित्यमात्मेशममितद्युतिम् ।
वन्दे विश्वस्य पितरं विष्णुं विश्वेश्वरं सदा ॥ ५ ॥

अमन्दानन्दसन्दोहसन्तोषितजगत्त्रयम् ।
नारायणमणीयांसं वन्दे देवं सदातनम् ॥ ६ ॥

सूर्यमण्डलमद्ध्यस्थं वराभयकरोद्यतम् ।
सूर्यामितद्युतिं वन्दे नारायणमनामयम् ॥ ७ ॥

विश्वं विश्वाकरं[4] वन्दे विश्वस्य प्रपितामहम् ।
नानारूपमजं नित्यं विश्वात्मानं प्रजापतिम् ॥ ८ ॥

---

१ "रमानाथं जगत्पतिम्" इति क्वचित् पाठान्तरम् ।

२ नानाविधाः, अथापि स्वरूपभूताः भावा अवतारा यस्य। यद्वा स्वतन्त्राद् स्वस्मादेव भगवतो भवन्तीति स्वभावा जीवाः । "भावा जीवाः समुद्दिष्टा भवन्त्येते यतो विभोः" इति माण्डूकभाष्यवचनात् । नानात्वेनैव प्रमिताः स्वभावा यस्मात् तम् । अतिशयेनान्ते विद्यमानः स्वभावः सर्वजीवाधिपतिर्ब्रह्मा । तेन विचारितम् । यद्वाऽत्यन्तं भगवदेकतानस्वभावः सज्जनसमुदायोऽत्यन्तस्वभावः । तेन विचारितम् । अथवा, नानास्वभावा या मतिः, सङ्कल्पविकल्पात्मकं मन इति यावत्, तस्या योऽन्तः निर्णयात्मकः स्वभावः व्यावसायात्मिका बुद्धिरिति यावत्, तेन विचारितम् ।

३ मूलकोशेऽत्र पदानि गलितानि। श्रीरघुवर्यतीर्थैर्लिखितेऽपि कोशे पाठसन्देहादिव कतिचिदक्षराणि विहाय "ज्ञानमुद्रापु . . . . रिणम्" इतीयदेव लिखितम् । परन्तु श्रीरघुरत्नतीर्थैर्लिखिते पुस्तकान्तरेऽयं पाठ उपलब्धः । तत्र "–पुस्तकादिशङ्खा–" इत्येव पठ्यते । "–पुस्तकारिशङ्खा–" इति पाठः स्यादिति सम्भाव्यते ।

४ विश्वस्य आकर इवाऽकरः आश्रय इति यावत् । आकर इत्याकारणा वा । विश्व इत्याक्रियते यतः । विश्वनामेति यावत् । विश्वाकारं वा । "स भूमिं विश्वतो वृत्वा" इति हि श्रूयते । सर्वत्र प्रवेशनाद् विश्वपदोदितमप्या-

[1]कालाकालविचारादिप्रकालितसदातनम् ।
पुरुषं प्रकृतिस्थं च वन्दे विष्णुमजोत्तमम ॥ ९ ॥

ब्रह्मणः पितरं वन्दे शङ्करस्य पितामहम ।
श्रियः पतिमजं नित्यमिन्द्रादिप्रपितामहम् ॥ १० ॥

प्रतिप्रति स्थितं विष्णुं नित्यामृतमनामयम् ।
शङ्खचक्रधरं वन्दे वराभयकरोद्यतम ॥ ११ ॥

प्रतापप्रविशेषेण दूरीकृतविदूषणम् ।
विदारितारिमत्यन्तप्रसन्नं प्रणमाम्यहम् ॥ १२ ॥

अप्रमेयमजं नित्यं विशालममृतं परम ।
[2]कृतनित्यालया(?) लोके नमस्यामि जगत्पतिम् ॥ १३ ॥

सुनित्यसुखमक्षय्यं शुद्धं शान्तं निरञ्जनम ।
[3]लोकालोकविचाराढ्यं नमस्यामि श्रियः पतिम् ॥ १४ ॥

अमन्दानन्दसन्दोहसान्द्रमिन्द्रानुजं परम् ।
नित्यावदातमेकान्तं प्रमाणातीतमक्षयम् ।
लोकालोकपतिं दिव्यं नमस्यामि रमापतिम् ॥ १५ ॥

---

त्मानं विश्वं विश्वजगदभिन्नस्वरूपं न करोतीति वा। अत एवोपरिष्टाद् वक्ष्यति विश्वात्मानमिति। विश्वान्तर्यामिणम्, विश्वस्वामिनम्।

१ जगत्कालनात् कालो भगवानिति संहर्तृत्वविचारः कालविचारः। अकाल इति संहारविरुद्धा सृष्टिरुच्यते। तद्यथा श्रुतौ असम्भूतिरिति संहार उच्यते। तथाचाकालविचार इति स्रष्टृत्वविचारः। आदिपदेन स्थितिनियतिज्ञानाज्ञानबन्धमोक्षविचारः। तथाच सृष्ट्याद्यष्टककर्तृत्वविचाररूपया मीमांसया ब्रह्मसूत्रादिभिः प्रकालितः प्रज्ञापितः सदातनो भगवान्। "कल सङ्ख्याने" सङ्ख्यानमिति साङ्ख्यं ज्ञानम्। तदेतदुक्तम्— "अन्धन्तमः प्रविशन्ति येऽसम्भूतिमुपासते। ततो भूय इव ते तमो य उ सम्भूत्यां रताः" इति, "सम्भूतिं च विनाशं च यस्तद्वेदोभयं सह। विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते" इति च।

२ सर्वत्र कोशेष्वेवमेव पाठः। अर्थस्तु न स्फुटः। "कृतनित्यालयं लोके" इति पाठः सम्भाव्यते।

३ लोक्यन्त इत्यमुक्ता लोकाः। मुक्ता अलोकाः। तेषामुभयेषां निरन्तरजिज्ञासयाऽऽढ्यम्। "कृष्णो मुक्तैरिज्यते वीतमोहैः" इति ह्युक्तम्।

[ चतुर्थं स्तोत्रम् ]

ॐ ॥ कुरु भुङ्क्ष्व च कर्म्म निजं नियतं
हरिपादविनम्रधिया सततम् ।
हरिरेव परो हरिरेव गुरु-
र्हरिरेव जगत्पितृमातृगतिः ॥ १ ॥

न ततोऽस्त्यपरं जगदीड्यतमं
परमात् परतः पुरुषोत्तमतः ।
तदलं बहुलोकविचिन्तनया
प्रवणं कुरु मानसमीशपदे ॥ २ ॥

यततोऽपि हरेः पदसंस्मरणे
सकलं ह्यघमाशु लयं व्रजति ।
स्मरतस्तु विमुक्तिपदं परमं
स्फुटमेष्यति तत् किमपाक्रियते ॥ ३ ॥

[1]शृणुतामलसत्यवचः परमं
शपथेरितमुच्छ्रितबाहुयुगम् ।
न हरेः परमो न हरेः सदृशः
परमः स तु सर्वचिदात्मगणात् ॥ ४ ॥

यदि नाम परो न भवेत हरिः
कथमस्य वशे जगदेतदभूत् ।
यदि नाम न तस्य वशे सकलं
कथमेव तु नित्यसुखं न भवेत् ॥ ५ ॥

नच [2]कर्म्मविमामलकालगुण-
प्रभृतीशमचित्तनु तद्धि यतः ।
चिदचित्तनु सर्वमसौ तु हरि-
र्यमयेदिति वैदिकमस्ति वचः ॥ ६ ॥

---

१ "कुरु भुङ्क्ष्व–", "प्रवणं कुरु मानसम्" इत्यादिना प्रातिस्विकः सन्देश इत्येकवचननिर्देशः । अत्र तु जनकोटिमध्ये घोषणापूर्वं प्रतिज्ञा क्रियत इति "शृणुत" इति बहुवचनम् ।

२ कर्म्मैव कारणमिति मीमांसकाः । विमा अज्ञानं, तत्कल्पितं जगदिति मायावादिनः । मलं कामादि । तदु-द्भवमिति चाविद्यावादिन एव वदन्ति, लोकायताश्च । तथाह्युक्तम् —"किमन्यत् कामहैतुकम्" इति । कालात् प्रसूतिं मन्यन्ते कालचिन्तकाः । त्रिगुणसम्भवमिति च साङ्ख्याः । प्रभृतीति—"अकस्माद्धीदमाविरासीत्", "प्रधानादिदमुत्पन्नम्", "जीवाद्भवन्ति भूतानि" इत्याद्यवैदिकवादपरिग्रहः ।

व्यवहारभिदाऽपि गुरोर्ज्जगतां
[1]नतु चित्तगता स हि चोद्यपरम् ।
बहवः पुरुषाः पुरुषप्रवरो
हरिरित्यवदत् स्वयमेव हरिः ॥ ७ ॥

चतुराननपूर्वविमुक्तगणा
हरिमेत्य तु पूर्ववदेव सदा ।
नियतोच्चविनीचतयैव निजां
स्थितिमापुरिति स्म परं वचनम् ॥ ८ ॥

स्मरणे हि परेशितुरस्य विभो-
र्म्मलिनानि मनांसि कुतः करणम् ।
विमलं हि पदं परमं स्वरतं
तरुणार्क्कसवर्ण्णमजस्य हरेः ॥ ९ ॥

विमलैः श्रुतिशाणनिशाततमैः
सुमनोसिभिराशु निहत्य दृढम् ।
[2]बलिनं निजवैरिणमात्मतमो-
भिदमीशमनन्तमुपेत[3] हरिम् ॥ १० ॥

स हि विश्वसृजो विभुशम्भुपुर-
न्दरपूर्वमुखानपरानपरान् ।
सृजतीड्यतमोऽवति हन्ति निजं
पदमापयति प्रणतान् स्वधिया ॥ ११ ॥

परमोऽपि रमेशितुरस्य समो
नहि कश्चिदभून्न भविष्यति च ।
क्वचिदप्यतनोऽपि न पूर्ण्णसदा-
ऽगणितेड्यगुणानुभवैकतनोः ॥ १२ ॥

---

१ "नहि" इति क्वचित् ।

२ बलिनं निजवैरिणं कामक्रोधादिरूपं सुमनःखड्गैराशु निहत्य आत्मतमोभिदं हरिमुपेत । यद्वा आत्म तमः, भिदमिति भिन्ने पदे । आत्मतमोरूपं बलिनं निजवैरिणं निहत्य भिदं सर्वस्माद् भिन्नं हरिमुपेत । "एको भिच्च ततो बहुः" इति हि श्रूयते ।

३ उपगमनमिति शरणागतिः । सुमनोसिभिरिति पूर्वं बहुवचननिर्द्देशात् व्यक्तिबहुत्व एव मनोबहुत्वमिति अत्राप्युपेतेति बहुवचननिर्द्देश इति सुश्लिष्टम् ।

निजपूर्णसुखामितबोधतनुः
 परशक्तिरनन्तगुणः परमः ।
अजरामरणः सकलार्त्तिहरः
 कमलापतिरीड्यतमोऽवतु नः ॥ १३ ॥

यदसुप्तिगतो वरिनः[1] सुखवान्
 सुखरूपिणमाहुरतो निगमाः ।
[2]स्वमतिप्रभवं जगदस्य यतः
 परबोधतनुं च ततः खपतिम् ॥ १४ ॥

बहुचित्रजगद्बहुधाकरणात्
 परशक्तिरनन्तगुणः परमः ।
सुखरूपममुष्य पदं परमं
 स्मरतस्तु भविष्यति तत् सततम् ॥ १५ ॥

[ [3]हरिस्तुतिः समाप्ता ]

---

१ क्वचित् कोशे "परिनः" (?) इति पठ्यते, क्वचिच्च "यदसुप्तिगतोऽपि हरेः स्तवनम्" (?) इति । "वरिनः" इत्येव हृषीकेशतीर्थीयः पाठः । 'वरिति ज्ञानमुच्यते", "सुवः सुबलरूपत्वात्", "पूर्णो भूतिवरोऽनन्तसुखः" इत्यादिवचनात् वः सुखं ज्ञानं बलं वा । तेषामिनः ।

२ "सुमतिप्रभवम्" इति क्वचित् ।

३ मूलकोशे त्वस्य स्तोत्रस्य नाम न निर्दिष्टम् । क्वचित् कोशे तु "हरिस्तुतिः समाप्ता" इति पठ्यते । क्वचिच्च तृतीयं चतुर्थं च स्तोत्रं व्यत्यासेन पठ्यते ।

[ पञ्चमं स्तोत्रम् ]

ॐ ॥ [ [1]रामोऽखिलानन्दतनुः स एव
भीमोऽतिपापेषु दुरन्तवीर्यः ।
कामः स एवाजितकामिनीषु
सोमः स एवाऽऽत्मपदाश्रितेषु ॥ * ॥ ]

[2]पान्त्वस्मान् पुरुहूतवैरिबलवन्मातङ्गमाद्यद्धटा-
कुम्भोच्चाद्रिविपाटनाधिकपटुप्रत्येकवज्रायिताः ।
[3]श्रीमत्कण्ठीरवास्यप्रततसुनखरा दारितारातिदूर-
प्रध्वस्तध्वान्तशान्तप्रविततमनसा भाविता भूरिभागैः ॥ * ॥

---

१ श्रीहृषीकेशतीर्थैर्लिखिते मूलकोशे स्तोत्राणां मद्ध्येऽयमप्येकः श्लोकः पठ्यते । आचार्यपादकृतिमद्ध्येऽन्य-दीयश्लोकनिवेशनस्याप्रसक्तत्वान्निश्चीयेत यदयमप्याचार्यकृत इति ।

२ नखस्तुतित्वेन प्रसिद्धयोः श्लोकयोर्मद्ध्ये अयमेक एव श्रीहृषीकेशतीर्थीये मूलकोश उपलभ्यते । नखस्तुति-रिति नाम च नोल्लिखितम् । परन्त्वितरत्र सर्वेष्वपि कोशेषु श्लोकद्वयमपि दृश्यते । तेन निश्चीयेत यदेतद् द्वयमपि भगवत्पादकृतमिति । किन्त्वस्यैकग्रन्थ्यं त्वर्वाचीनमिति भाति । "पान्त्वस्मान्" इति पद्यमेकस्मिन्नवसरे विरचि-तम् । "लक्ष्मीकान्त" इत्यादिकं त्वन्यदाऽवसरान्तरे । अनयोर्भिन्नविषयत्वं चैतदेव द्रढयति । आद्यपद्ये हि नख-राणां स्तुतिः श्रूयते । न द्वितीयपद्ये । आचार्यकृतयोरनयोः श्लोकयोर्वायुस्तुतेरादौ निवेशनानन्तरमेव सहपाठयोगेन एकग्रन्थत्वप्रवादोऽजनीति भासते । "पान्त्वस्मानितिपद्यस्य वन्देवन्द्यमिति स्तुतेः । अन्यथा मध्वकृतिता-निर्णयः किङ्कृतस्तव" इति वादिराजश्रीचरणानां वचनमप्येतमेवार्थं कटाक्षयतीव ।

३ प्रसिद्धादन्योऽप्यर्थः कश्चनात्र प्रतीयते । तद् यथा—श्रीमत्कण्ठीरवास्य, ते प्रततसुनखरा अस्मान् पान्तु । कीदृशः कण्ठीरवास्यः ? दारितारातिदूरप्रध्वस्तध्वान्तः । पुनः कीदृशः ? शान्तः । कीदृशा नखराः ? भूरिभागैः प्रविततमनसा भाविता इति । अथच प्रतिततमनसा इत्येदपि नृसिंहविशेषणम् । प्रविततमया नासया उपलक्षित। 'ब्रह्म ततमम्' इत्यादिवदेकतकारलोपः । तथाहि युक्तिमल्लिकायां वादिराजश्रीचरणाः "सिंहं नसन्त" इति श्रुति-व्याख्यानावसरे फलसौरभे—सिंहं नृसिंहं विवृतनसोऽन्तो यस्य तं सुपः । लोपे नसन्तेतिपदस्यार्थं दुर्जनसन्ततेः । हरिम् भक्तेषु शान्तत्वादरुषं रोषवर्जितम्" इति । तथाच श्रुतिगतहरिपदार्थः—दारितारातिदूरप्रध्वस्तध्वान्तेति। अरुषमित्यस्यार्थः शान्तेति । नसन्तपदार्थः प्रविततमनसेति ।

अत्र पूर्वार्द्धे शार्दूलविक्रीडितं छन्दः, उत्तरार्द्धे च स्रग्धरेति स्तम्भादवतीर्य शार्दूलविक्रीडितकेन हिरण्य-कशिपोरुरो विदार्य तदान्त्रस्रजं धारयतो भगवतो नृसिंहस्यावतारलीलां छन्दसैवाभिनीय दर्शयतीव भगवत्पादः ।

[लक्ष्मीकान्त समन्ततोऽपि कलयन् नैवेशितुस्ते समं
पश्याम्युत्तमवस्तु दूरतरतोऽपास्तं रसो योऽष्टमः ।
यद्रोषोत्करदक्षनेत्रकुटिलप्रान्तोत्थिताग्निस्फुरत्-
खद्योतोपमविस्फुलिङ्गभसिता ब्रह्मेशशक्रोत्कराः ॥ * ॥]

[[१]इति श्रीमदानन्दतीर्थभगवत्पादकृता
नृसिंहनखरस्तुतिः समाप्ता]

---

१ हृषीकेशतीर्थीये नेदं पठ्यते । परन्तु कचिन् कोशेषु पठ्यते ।

[ [1]षष्ठं स्तोत्रम् ]

[2]वन्दिताशेषवन्द्योरुवृन्दारकं
चन्दनाचर्च्चितोदारपीनांसकम् ।
इन्दिराचञ्चलापाङ्गनीराजितं
मन्दरोद्धारिवृत्तोद्भुजाभोगिनम् ॥ १ ॥

प्रीणयामो वासुदेवम्
देवतामण्डलाखण्डमण्डानम्[3]
प्रीणयामो वासुदेवम् ॥ * ॥

सृष्टिसंहारलीलाविलासाततं
पुष्टषाड्गुण्यसद्विग्रहोल्लासिनम् ।
दुष्टनिश्शेषसंहारकर्मोद्यतं
हृष्टपुष्टातिशिष्टप्रजासंश्रयम् ॥ २ ॥

प्रीणयामो वासुदेवम्— ॥ * ॥

---

१ क्वचित् कोशे इतः पूर्वं "केशवकेशव" इति स्तोत्रं पठ्यते । ततः परं "देवकिनन्दन" इत्यादि । तदनन्तरं "आनन्द मुकुन्द" इत्यादि द्वादशम् । तदनन्तरं "उदीर्णमजरम्–" इत्यादि । तदनन्तरं "अतिमत–" इत्यादि अष्टमम् । ततश्चेदं षष्ठं स्तोत्रं पठ्यते । ततः परं "अवन श्रीपतिः" इत्यादि । अन्ते च श्रीस्तुतिः ।

२ अन्तगुरुणा गणचतुष्टयेन चतुर्थं स्तोत्रं प्रवृत्तम् । तोटकं हि तत् । तदुक्तम्—"सैश्चतुर्भिस्तोटकं स्यात्" इति । इदानीं स्रग्विण्या प्रस्तौति, मध्यलघुना गणचतुष्टयेन । उक्तं हि—"स्रग्विणी रैश्चतुर्भिः स्यात्" इति । वस्तुतस्त्वियं वर्णच्छन्दःसमरूपा गीतिरेव । प्रीणयाम इति ध्रुववाक्यश्रवणात् । तथाचेयं व्यवस्था— आदौ पञ्चमात्रेण गणचतुष्टयेन चत्वारः पादाः । ततः ध्रुववाक्ये प्रीणयाम इति वासुदेवमिति सप्तभिस्सप्तभिर्विरामः । अथ पुना रगणात्मकं पञ्चमात्रं गणत्रयं चतुर्मात्रं गुरुद्वयं चैकम् । 'देवता–मण्डला–खण्डमं–डानम्' इति । पुनः सप्तभिस्सप्तभिरुपसंहारः ।

३ गानार्थमेवच मण्डनमित्येतत् मण्डानमिति पठ्यते । तदेतत् वेदेषु प्रसिद्धम्, संहितायां दैर्घ्यं पदपाठे ह्रस्वत्वमिति । पठ्यते हि "इन्द्रावरुण नू नु वाम्" इति संहितायाम् । 'इन्द्रावरुणा । नु । नु । वाम्' इति पदपाठे । तदेतत् परमवैदिकस्याऽऽचार्यस्य सुष्ठु शोभते । नचैतन्निरर्थकं गानपूरणमिति मन्तव्यम् । मण्डानमित्यतिशयितमण्डनमित्यर्थलाभात् । उक्तं हि "आधिक्येऽधिकमित्येव हरिणा सूत्रमीरितम्" इति । वेदेष्वपि संहितायां दैर्घ्यस्येदमेव निमित्तम् । तदुक्तमृग्भाष्ये—"संहितायां यत्र दैर्घ्यं पदे यत्र न दृश्यते । उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम्" इति । लौकिकप्रयोगेष्वप्येतत् समानम् । तथाहि वादिराजश्रीचरणाः– पालयाच्युत पालयाजित पालया कमलालया" इति । अत्र संहितापाठे दैर्घ्येऽपि 'पालय', 'कमलालय' इत्येव हि ह्रस्वान्तः पदपाठः । लोके भाषायामपि तात्पर्याधिक्यज्ञापनाय ह्रस्वं दीर्घतया दीर्घं च प्लुततया च व्याहरन्तीत्यनुभवसिद्धमेतत् । वैदिकपरिपाटीविदां सङ्गीतभङ्गीजुषां सर्वमेतत् सुस्पष्टम् ।

उन्नतप्रार्थिताशेषसंसाधकं
सन्नतालौकिकानन्ददश्रीपदम् ।
भिन्नकर्माशयप्राणिसम्प्रेरकं
तन्न किं नेति विद्वत्सु मीमांसितम ॥ ३ ॥

प्रीणयामो वासुदेवम्— ॥ ❋ ॥

विप्रमुख्यैः सदा वेदवादोन्मुखैः
सुप्रतापैः क्षितीशेश्वरैश्चार्चितम् ।
अप्रतर्क्योरुसंविद्गुणं निर्मलं
सत्प्रकाशाजरानन्दरूपं परम् ॥ ४ ॥

प्रीणयामो वासुदेवम् — ॥ ❋ ॥

अत्ययो यस्य केनापि न क्वापि हि
प्रत्ययो यद्गुणेषूत्तमानां परः ।
सत्यसङ्कल्प एको वरेण्यो वशी
मत्यनूनैः सदा वेदवादोदितः ॥ ५ ॥

प्रीणयामो वासुदेवम्— ॥ ❋ ॥

पश्यतां दुःखसन्ताननिर्मूलनं
दृश्यतान्दृश्यतामित्यजेशार्चितम् ।
नश्यतां दूरगं सर्वदाऽप्यात्मकं[1]
[2]वश्यतां स्वेच्छया सज्जनेष्वागतम ॥ ६ ॥

प्रीणयामो वासुदेवम्— ॥ ❋ ॥

अग्रजं यः ससर्जाजमग्र्याकृतिं
विग्रहो यस्य सर्वे गुणा एव हि ।
उग्र आद्योऽपि यस्याऽत्मजाग्र्यात्मजः
सद्गृहीतः सदा यः परं दैवतम् ॥ ७ ॥

प्रीणयामो वासुदेवम्— ॥ ❋ ॥

---

१ आत्मकमन्तर्यामिणम् । ''सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्'' इति सूत्रोक्तमर्थविशेषं ज्ञापयितुं सुखवाचिक-शब्दप्रयोगः । जीवेन सह देहस्थितोऽपि जीवान्तर्यामकोऽपि न जीववद् दुःखभाक् । किन्तु केवल सुखमय एवेति ।
२ यद्यपि मूलकोशे 'पश्यताम्' (?) इति पठ्यते । प्रमादपतितं सम्भाव्यते ।

अच्युतो यो गुणैर्नित्यमेवाखिलैः
प्रच्युतोऽशेषदोषैः सदा पूर्त्तितः ।
उच्यते सर्ववेदोरुवादैरजः
स्वर्च्यते ब्रह्मरुद्रेन्द्रपूर्वैः सदा ॥ ८ ॥

प्रीणयामो वासुदेवम् — ॥ * ॥

धार्यते येन विश्वं सदाऽजादिकं
वार्यतेऽशेषदुःखं निजध्यायिनाम् ।
पार्यते सर्वमन्यैर्न यत् पार्यते
कार्यते चाखिलं सर्वभूतैः सदा ॥ ९ ॥

प्रीणयामो वासुदेवम्— ॥ * ॥

सर्वपापानि यत्संस्मृतेः सङ्क्षयं
सर्वदा यान्ति भक्त्या विशुद्धात्मनाम् ।
शर्वगुर्वादिनिर्वाणसंस्थानदः
कुर्वते कर्म्म यत्प्रीतये सज्जनाः ॥ १० ॥

प्रीणयामो वासुदेवम्— ॥ * ॥

अक्षयं कर्म्म यस्मिन् परे स्वर्पितं
प्रक्षयं यान्ति दुःखानि यन्नामतः ।
अक्षरो योऽजरः सर्वदैवामृतः
कुक्षिगं यस्य विश्वं सदाऽजादिकम् ॥ ११ ॥

प्रीणयामो वासुदेवम्— ॥ * ॥

[१]नन्दितीर्थोरुसन्नामिनो नन्दिना
[२]सन्दधानाः सदाऽऽनन्ददेवे मतिम् ।

---

१ नन्दिरित्यानन्दः । "कौसल्यानन्दिवर्द्धनो रामः" इत्यादिप्रयोगात् । "नन्दिर्मृताङ्ग आनन्दे" इति च मेदिनी । तेन नन्दितीर्थो इत्यानन्दतीर्थाः ।

२ यद्यपि प्राचीनकोशे "सन्दधाना सदा–" इति विसर्गरहितं पठ्यते । स्खलनं सम्भाव्यते ।

मन्दहासारुणापाङ्गदत्तोन्नतिं
नन्दिताशेषदेवादिवृन्दं सदा ॥ १२ ॥

प्रीणयामो वासुदेवम् ॥
देवतामण्डलाखण्डमण्डानम्
प्रीणयामो वासुदेवम् ॥ ❋ ॥ ❋ ॥

---

[ सप्तमं स्तोत्रम् ]

[1]देवकिनन्दन नन्दकुमारा
[2]वृन्दवनाञ्जन गोकुलचन्द्र ॥ १ ॥

कन्दफलाशन सुन्दररूपा
नन्दितगोकुल वन्दितपाद ॥ २ ॥

इन्द्रसुतावक नन्दकहस्ता
चन्दनचर्च्चित सुन्दरिनाथ ॥ ३ ॥

[3]इन्दिवरोदरदळनयनाऽऽ
[4]मन्दरधारा गोविन्द वन्दे ॥ ४ ॥

[5]मत्स्यकरूप लयोदविहारिन्
वेदविनेत्र चतुर्म्मुखवन्द्य ॥ ५ ॥

---

१ अत्र भगणत्रयं गुरुद्वयं चेति स्तोत्रमिदं दोधकवृत्तनिबद्धमिति वदन्ति। "दोधकं भौ भगौ गः स्यात्" इति तल्लक्षणात्। वस्तुतस्तु नेदं दोधकम्। किन्तु बाहुल्येन दोधकमनुसरन्ती गीतिरेवेयम्। अवश्यं चैतदेवमभ्युपेयम्। अन्यथा "इन्दिवरोदरदळनयना" इत्यत्र, "मन्दरधारा गोविन्द वन्दे" इत्यत्र, "आनन्दतीर्थकृता हरिगाथा" इत्यत्र च लक्षणभङ्गप्रसङ्गात्। नहि तत्र भत्रयं गौ च श्रूयन्ते। तथाच चतुर्म्मात्रगणचतुष्टयैश्चरणवती गीतिरेवेयम्—"देवकि–नन्दन–नन्दकु–मारा" इत्यादि। 'इन्दिवरोदर–' इत्यत्र 'इन्दिव–रोदर–दळनय–नाऽऽ' इति चरमाक्षरस्य चतुर्मात्राकालमुच्चारणेन गीतिपूर्त्तिः सङ्गीतविदुषां नतिरोहितम्। एवं 'गोविन्द वन्दे' इत्यत्र, 'आनन्दतीर्थकृता' इत्यत्र च गोविन्देति आनन्देति च चतुर्म्मात्राकालम्। 'नन्दकुमारा'–'नन्दकहस्ता' इत्यादि चरणान्ते दैर्घ्यं तु गीतप्रयोजनमित्युक्तार्थम्। तथाच छन्दःसौष्ठवप्रतिकूलः 'देवकीनन्दन'– 'इन्दीवरोदर–' इत्यादिः प्रचलितः पाठः प्रमाद एव।

२ वृन्दावनमेव वृन्दवनम्। यथा हस्तिना कृतं पुरं हस्तिनपुरमिति च भवति। अथच यत्र हि वृन्दशो रोहन्ति तुलस्यादयस्तद् वनं वृन्दवनम्। यदिवा वृन्दस्य गोवृन्दस्य वनं सम्भजनं यस्मिन् तद् वृन्दवनम्। गोपगोपीगवां वृन्दैः वन्यते सेव्यत इति वा वृन्दवनम्। तथाहि नरहरितीर्थाः—"गोपगोपीगवां वृन्दस्यावनं यत्र वै हरेः। यद्वा तद्वृन्दसंसेव्यम्" इति। वृन्दवने अनक्ति श्लिष्यतीति वृन्दवनाञ्जनः।

३ "स्यादिन्दीवरमिन्दिवरम्" इति द्विरूपकोशात् इन्दीवरमेवेन्दिवरम्।

४ मन्दान् रमयतीति व्युत्पत्त्या गोवर्द्धनोऽप्यत्र मन्दर इति व्याचक्षते। कूर्म्मावतारे मन्दरोद्धारः, कृष्णावतारे गोवर्द्धनोद्धार इति स्थितेऽपि भगवद्रूपाणां परस्परमैक्यात् सर्वावतारेषु सर्वविशेषणान्यपि युक्तानीति प्रत्याययितुं एवं प्रयुङ्क्ते भगवानाचार्यः।

५ प्रारब्धकर्म्मसम्प्राप्तमत्स्यादिजनुषां जीवानामिव नास्य लीलामत्स्यस्य दुःखादिस्पर्श इत्याह—करूप। सुखरूप। एतेन कूर्म्मस्वरूपक, सूकररूपक इति व्याख्यातम्। अथच मत्स्यक, अल्पार्थे कन्, प्रियव्रतहस्ते परिमितः सन्नणुरूपतयाऽवतीर्णं मत्स्यपोत। ततः परं कूपे तटाकेऽप्यमिततया प्रवृद्धो भूत्वा लयोदविहारिन्।

कूर्म्मस्वरूपक मन्दरधारिन्
लोकविधारक देववरेण्य ॥ ६ ॥

सूकररूपक दानवशत्रो
भूमिविधारक यज्ञवराङ्ग ॥ ७ ॥

देव नृसिंह हिरण्यकशत्रो
[1]सर्वभयान्तक दैवतबन्धो ॥ ८ ॥

वामन वामन माणववेषा
[2]दैत्यकुलान्तक कारणभूत ॥ ९ ॥

रामभृगूद्वह सूर्जितदीप्ते
क्षत्रकुलान्तक शम्भुवरेण्य[3] ॥ १० ॥

राघव राघव राक्षसशत्रो
मारुतिवल्लभ जानकिकान्त ॥ ११ ॥

देवकिनन्दन सुन्दररूपा
रुग्मिणिवल्लभ पाण्डवबन्धो ॥ १२ ॥

दैत्यविमोहक नित्यसुखादे
देवसुबोधक बुद्धस्वरूप ॥ १३ ॥

दुष्टकुलान्तक कल्किस्वरूपा
धर्म्मविवर्द्धन मूलयुगादे ॥ १४ ॥

[4]आनन्दतीर्थकृता हरिगाथा[5]
पापहरा शुभनित्यसुखार्त्था ॥ १५ ॥

---

१ यद्यपि मूलकोशे "सर्व्वभयान्तक" इति पठ्यते। स्खलनं स्यादिति सम्भाव्यते।

२ दैत्यकुलस्यान्त एवान्तकः। तस्य कारणभूत। दैत्यकुलान्तकेति भिन्नं वा।

३ परशुरामः शङ्करशिष्यो भूत्वाऽस्त्रविद्यामधिजगाविति कथा श्रूयते। तत् कथमित्यत आह—शम्भुवरेण्य। लीलैवेयं भगवतः शिष्यत्वेनोपगमनम्। यत् क्वचित् शङ्करं प्रति तपोऽपि चरति। तथैवैतत्। यतोऽयं शम्भुनाऽपि वरणीयः।

४ अत्र "आनन्दतीर्थमुनीन्द्रकृता" इति प्र. पाठस्तु छन्दःशास्त्रादिगन्धविधुराणां पाठपरिक्लृप्तिविमुखानामर्वाचीनानां महान् प्रमाद एवेति सर्वथोपेक्षणीयः।

५ गाथालक्षणं तु मन्दारमरन्दे—"अन्यान्यसमवृत्तानि गाथाः प्राहुर्म्मनीषिणः" इति। छन्दःशास्त्रे उक्तलक्षणानि निर्दिष्टनामानि च विहाय अन्यानि, विशिष्य नामनिर्देशरहितानि सामान्यतो गाथा इत्युच्यन्ते इत्यर्थः।

[अष्टमं स्तोत्रम्]

ॐ ॥ [1]अतिमत तमोगिरिसमितिविभेदन
पितामहभूतिद गुणगणनिलयऽ।
शुभतमकथऽशय परम सदोदित
जगदेककारण रऽम रमऽरमणा ॥ १ ॥

विधिभवमुखसुरसततसुवन्दित
[2]रमऽमनोवल्लभ भव मम शरणम्।
शुभतम — ॥ २ ॥

---

१ षोडशमात्राचरणो गाथाप्रभेदोऽयम्। तत्राऽपि गणव्यवस्था— चतुर्मात्राः सर्वेह्रस्वास्त्रयो गणाः प्रथमम्, ततः परं भगणो विषमपादयोः। चतस्रो मात्राः, ततो भगणः, ततः पुनश्चतस्रो मात्राः, ततः सगणः समपादयोः। तथाहि—'अतिमत। तमोगिरि। समितिवि। भेदन' इत्ययुजि। 'जगदेक। कारण। रम रम। रमणा' इति युजि। अत्र यद्यपि 'तमोगिरि' इति द्वितीयगणे द्वितीयाक्षरस्य गुरुत्वात् सर्वह्रस्वत्वं भज्यते। एकमात्राधिक्यं च भवति। एवं 'जगदेक' इत्यत्रापि। अत्रेदं वस्तुतत्वम्—गानक्रियायां ह्रस्व एकारो ह्रस्व ओकारश्च स्तः। यथा कर्णाटकभाषायाम्। एकार ओकारश्च ह्रस्वोऽपि वेदेषु सामगायनैरङ्गीक्रियत इति महाभाष्येऽपि स्थितम्। तथाचात्राप्यनयोर्ह्रस्वतुल्यतयोच्चारणमिति कालक्रियामानं पूर्यते। तथात्र 'तमोगिरि' इत्येतत् 'ತಮೊಗಿರಿ' इतिवत्, 'जगदेक' इत्येतत् 'ಜಗದೆಕ' इतिवत् उच्चार्यते। एवमुत्तरत्रापि 'रममनो। वल्लभ', 'शरीरहे' इत्यादौ। यत्रैतादृशो ह्रस्व उच्चारस्तत्र तत्सूचनाय अधस्ताद् वक्ररेखा निर्दिष्टा। तद्यथा—'मो' 'दे', 'नो', 'हे', इत्यादि। एवं प्रथमपद्ये द्वितीयचरणे 'पितामह' इत्येतत् चतुर्मात्रम्। 'निलयऽ' इत्येतच्च। यद्यपि 'रमवर' इतिवत्, 'रममनोवल्लभ' इतिवत् 'पितमह' इति पठितुं शक्यते। 'रमणा' इतिवत् 'निलया' इति च। अत्र ह्रृषीकेशतीर्थपाठः कीदृश इति गलितत्वान्न ज्ञायते। अन्यत्र च तदनुसारिषु प्राचीनकोशेषु सर्वत्र 'पितामहभूतिद गुणगणनिलय' इत्येव पाठ इति स एव पाठोऽत्र स्वीकृतः। तदेतत् दीर्घस्य संहितायां ह्रस्वत्वं च वेदेषु स्थितम्। तद्यथा— "तोयेन जीवान् व्यससर्ज भूम्याम्", अत्र 'व्याससर्ज' इति वक्तव्ये छन्दःसौष्ठवाय 'व्यससर्ज' इत्युक्तमिति तत्वमञ्जर्यां स्थितम्। यथा वा 'इन्द्रावरुणा' इति वक्तव्ये "इन्द्रावरुण वामहम्" इति, "इन्द्रावरुण नू नु वाम्" इति। उक्तं चाऽचार्यैः ऋग्भाष्ये— "संहितायां यत्र दैर्घ्यं पदे यत्र न दृश्यते। उक्तार्थस्य महाधिक्यम्" इति। उपलक्षणमेतत्। संहितायां यत्र ह्रस्वत्वं पदे च यत्र न दृश्यते तत्राप्येतत् समानम्। तथाच यत्र दीर्घस्य ह्रस्वत्वं तत्र 'ऽ' इति संज्ञया निर्देशः कृतः। तद्यथा 'कथऽशय' 'रमऽरमणा' इत्यादि। तथाच प्रथमपद्येऽयं पदपाठः— "अतिमत। तमोगिरिसमितिविभेदन। पितामहभूतिद। गुणगणनिलय। शुभतमकथाशय। परम। सदोदित। जगदेककारण। राम। रमारमण" इति। एवमुत्तरत्राप्यूह्यम्। तथाच संहितापदपाठयोः साङ्कर्येणाधुनातनः स्तोत्रपठनक्रमः प्रवृत्त इत्यवगम्यते।

२ 'रमामनोवल्लभ' इति पदपाठः।

[1]अपरिमितगुणगणमयशरीर हे
विगतगुणेतर भव मम शरणम् ।
शुभतम— ॥ ३ ॥

अगणितसुखनिधिविमलसुदेह हे
विगतसुखेतर भव मम शरणम् ।
शुभतम— ॥ ४ ॥

प्रचलितलयजलविहरण शाश्वत
सुखमय मीन हे भव मम शरणम् ।
शुभतम— ॥ ५ ॥

सुरदितिजसुवलविलुळितमन्दर-
धर परकूर्म्म हे भव मम शरणम् ।
शुभतम— ॥ ६ ॥

सगिरिवरधरऽतळवह[2] सुसूकर
परमविबोध हे भव मम शरणम् ।
शुभतम— ॥ ७ ॥

अतिवलदितिसुतहृदयविभेदन
जय नृहरेऽमल भव मम शरणम् ।
शुभतम— ॥ ८ ॥

वलिमुखदितिसुतविजयविनाशन
जगदवनाजित भव मम शरणम् ।
शुभतम— ॥ ९ ॥

अविजितकुनृपतिसमितिविखण्डन
[3]रमऽवर वीरप भव मम शरणम् ।
शुभतम— ॥ १० ॥

---

१ अत्र यः प्र. पाठः अगणित–अपरिमितपदयोर्व्यत्यासेन "अगणितगुणगणमयशरीर हे" इति "अपरिमितसुख-निधिविमलसुदेह हे" इति च स तु च्छन्दःपरिज्ञानशून्यानां प्रमाद एव । तथाह्यत्र गणव्यवस्था– "अपरिमि । तगुणगु । णमयश । रीरहे" इति, "अगणित । सुखनिधि । विमलसु । देहहे" इति । प्रचलितपाठे तु तृतीयपद्ये मात्रान्यौन्यं भवति, चतुर्थपद्ये पुनर्म्मात्राधिक्यम् ।

२ "–धरातळवह" इति पदपाठ. ।

३ 'रमावर' इति पदपाठः ।

खरतरनिशिचरदहन परामृत
  रघुवर मानद भव मम शरणम् ।
शुभतम— ॥ ११ ॥

सुललिततनुवर वरद महाबल
  यदुवर पार्थप भव मम शरणम् ।
शुभतम— ॥ १२ ॥

दितिसुतविमोहन विमलविबोधन
  परगुण बुद्ध हे भव मम शरणम् ।
शुभतम— ॥ १३ ॥

कलिमलहुतवह सुभग महोत्सव
  शरणद 'कल्किऽश[1] भव मम शरणम् ।
शुभतम— ॥ १४ ॥

अखिलजनिविलय परसुखकारण
  पर पुरुषोत्तम भव मम शरणम् ।
शुभतम— ॥ १५ ॥

इति तव नुतिवरसततरतेर्भव
  सुशरणमुरुसुखतीर्थमुनेर्भगवन्[2] !
शुभतमकथऽशय परम सदोदित
  जगदेककारण रऽम रमऽरमणा ॥ १६ ॥

---

१ 'कल्कीश' इति पदपाठः । यद्वा शंरूपः सुखरूपः कल्की कलिहृदाः ।

२ पदपाठे ह्रस्वदीर्घकरणं स्फुटं ज्ञापयितुमेव अत्र 'रःम रमारमण' इतिवत् '-तीर्थमुनेर्भगवन्' इति दीर्घाक्षराण्येव निबघ्नन्धेति महदाचार्यस्य संविधानकौशलम् ।

[ नवमं स्तोत्रम् ]

ॐ ॥ [1]'केशव केशव शासक वन्दे
पाशधरार्चित शूर परेश ।
नारायणामरतारण वन्दे
कारणकारण पूर्ण्ण वरेण्य ॥ १ ॥

माधव माधव शोधक वन्दे
बाधक बोधक शुद्धसमाधे ।
गोविन्द गोविन्द पुरन्दर वन्दे
स्कन्दसनन्दनवन्दितपाद ॥ २ ॥

[2]'विष्णु सृजिष्णु[3] ग्रसिष्णु विवन्दे
कृष्ण सदुष्णवधिष्ण[4]' स्वधृष्णो ।

---

१ अयमपि षोडशमात्रो गाथाभेदः। भगणत्रयं गुरुद्वयं चेति सामान्यतोऽस्या गाथाया लक्षणम् । क्वचिच्च गानाविरोधेन मात्रागुरुलाघवं व्यत्यस्यते। तद् यथा—'नारायणामरतारण वन्दे' इति, 'गोविन्द गोविन्द पुरन्दर वन्दे' इति च। अत्रैवं गणविभागः—'गोविन्द । गोविन्द । पु । रन्दर । वन्दे' इति । तदेतदपि "विषमाक्षर-पादं वा पादैरसमम्" इति च्छन्दःशास्त्रकृद्भिरुरीकृतम् । इयं च द्रुतमध्यामोजेऽप्यनुकरोति। "द्रुतमध्या भत्रयं गात्रोजे" इति तल्लक्षणात्।

२ प्रातिपदिकमात्रनिर्देशः । विष्णोः सर्वस्वातन्त्र्याद्यर्थविशेषलाभाय प्रत्ययलोपः क्रियत इति महा-व्याकरणे स्थितमिति "इन्द्रावरुण नू नु वाम्" इति मन्त्रव्याख्याने ऋग्भाष्य उक्तम् । एवमत्र पादे द्वितीयगणः 'जिष्णुग्र' इति न तगणः, किन्तु भगण एव । रेफयुक्तात् पूर्ववर्णस्य विकल्पेन लघुत्वं च छन्दः-शास्त्रसम्मतम्। तथाहि मन्दारमरन्दे—"रहयुक्ताक्षरात् पूर्वं रयुक्तात् कुपुवर्णतः । पूर्वं वर्णं विकल्पेन गुरुं केचित् प्रचक्षते" इति । उपलक्षणं चैतत्। कुपुभ्योऽन्यत्रापि लघुत्वं भवति। तद्यथाऽत्रैवोत्तरत्र "श्रीधर श्रीधर" इति । रयुक्तादन्यत्रापि दृश्यते। तद्यथाऽत्रैव—"सदुष्णवधिष्ण स्वधृष्णो" इति । शास्त्रेष्वेतादृशः प्रयोगः प्रचुरो दृश्यते। अयमेव शिथिलद्वित्वसन्धिरिति कर्णाटभाषायामुच्यते ।

३ यद्यपि अलङ्करिष्णु, निराकरिष्णु, प्रजनिष्णु, उत्पचिष्णु, उत्पतिष्णु, उन्मदिष्णु, रोचिष्णु, अपत्रपिष्णु, वर्त्तिष्णु, वर्द्धिष्णु, सहिष्णु, चरिष्णु, भविष्णु, गेष्णु, देष्णु—इत्येत एव सूत्रेषु सुखत इष्णुजन्ता उदिताः। तत्कथमिदम् ? "भुवश्च" इति चकाराद् भवति। तेन भ्राजिष्णु, क्षयिष्णु इत्याद्यपि साधु भवति इति हि परैष्य-ङ्गीकृतम्। तेनैव न्यायेन सृजिष्णु, ग्रसिष्णु इत्याद्यपि भवत्येव । भवतु; तथाऽपि सृजिष्णुरिति सम्प्रसारणं तु कथम् ? यथा भ्रमेः क्रमेश्च सम्प्रसारणे भृमिरिति कृमिरिति च भवति तथात्रापि च्छान्दसं सम्प्रसारणं भवति । वेदवैदिकेषु बहुलमुपलम्भात् प्रामाणिकं चेदृशं सम्प्रसारणमिति ज्ञायते।

४ "सदुष्णवधिष्णु" इति क्वचित्। तथैव साध्यमिति भाति। यद्यपि नासादिष्णुच् सूत्रे विहितः। कृपालुरि-त्यादिवदुपलक्षणीयमिति सूत्रमात्रनिष्णातानामुत्तरं भवति। अथवा प्रत्ययान्तरमेव वैदिकमिदम्। वेदेषु वधर, वधना, वधस्ना इत्यादिरूपदर्शनात्। तेन वधिष्ण इत्यपि साधु स्यात्। नदीष्ण इतिवद् वधिष्ण इति वा।

[1]मधुसूदन दानवसादन वन्दे
दैवतमोदन वेदितपाद ॥ ३ ॥

[2]त्रिविक्रम निष्क्रम विक्रम वन्दे
सुक्रम सङ्क्रमहुङ्कृतवक्त्र ।
वामन वामन भामन वन्दे
[3]सामन सीमन शामन सानो ॥ ४ ॥

श्रीधर श्रीधर शन्धर वन्दे
भूर्द्धर वार्द्धर कन्धरधारिन्[4] ।
[5]हृषीकेश सुकेश परेश विवन्दे
[6]शरणेश कलेश बलेश सुखेश ॥ ५ ॥

पद्मऽनाभ शुभोद्भव वन्दे
सम्भृतलोकभराभर भूरे ।
[7]दामोदर दूरतरान्तर वन्दे
दारितपारक[8] पार परस्मात् ॥ ६ ॥

---

१ 'मधु । सूदन । दानव । सादन । वन्दे' इति गणविभागः ।

२ 'त्रि । विक्रम । निष्क्रम । विक्रम । वन्दे' इति गणविभागः ।

३ वेदानां सामवेदोऽस्मीति मुख्यतः सामनेतृत्वात् सामनः । संसारस्य सीमा अन्तः । तां नयतीति सीमनः मोक्षदः । अत एव संसारं शमयतीति शमन एव शामनः ।

४ कं जलं धारयतीति कन्धरोऽग्निः । 'अग्नेरापः' इति श्रुतेः । तस्य धारकः । एतेन विशेषणत्रयेण तेजोबन्नधारकत्वमुक्तं भवति । पृथिव्यप्तेजसां धारक । अथच कन्धरो मेघाश्रितजलाधारत्वाद् वायुराकाशश्च । तयोरपि धारक । तेन सर्वभूताधार ।

५ 'हृषी । केशसु । केशप । रेशवि । वन्दे । शर । णेशक । लेशब । लेशसु । खेश' इति गणविभागः ।

६ शरण, ईशकलेश इति वा । शरण सर्वाधार सर्वरक्षक । ईशानां श्रीब्रह्मरुद्रशेषादीनां कलेशः सुखलेशो यस्मात् स ईशकलेशः ! "विप्रुडानन्दभगिनः" इति ह्युक्तम् ।

७ 'दा । मोदर । दूरत । रान्तर । वन्दे' इति गणविभागः ।

८ "-पारग" इति क्वचित् । परस्मात्, ल्यब्लोपनिमित्ता पञ्चमी । परं प्राप्य, परानुग्रहादेव च, दारितसंसारपाराणां कं सुखं यस्मात् । अत एव संसारजलधेरुत्तरपार । पारयतीति वा । कपारः सुखसीमा वा । परस्मादपि पार पर । अतिशयेन पर एव पारः । आधिक्येऽधिकमिति वचनादिति वा ।

[1]आनन्दसुतीर्थमुनीन्द्रकृताऽऽ
हरिगीतिरियं परमादरतः ।
परलोकविलोकनसूर्यनिभा
हरिभक्तिविवर्द्धनशौण्डतमा ॥ ७ ॥

---

१ 'आ । नन्दसु । तीर्थमु । नीन्द्रकृ । ताऽऽ' इति गणविभागः । उत्तरं पादत्रयं तोटकवृत्तबद्धम् । उभयत्रापि षोडशमात्रत्वं समानम् । पान्त्वस्मानिति पद्ये शार्दूलविक्रीडितस्रग्धरयोरिव अपूर्वं रमणीयं चेदं छन्दसोर्म्मेलनम् ।

[ दशमं स्तोत्रम् ]

ॐ ॥ [1]अवन श्रीपतिरप्रतिरधिकेशादि भवादे ।
करुणापूर्ण्ण वरप्रद चरितं ज्ञापय मे ते ॥ १ ॥

सुरवन्द्याधिप सद्वर भरिताशेषगुणालम् ।
करुणापूर्ण्ण — ॥ २ ॥

सकलध्वान्तविनाशन परमानन्दसुधाहो[2] ।
करुणापूर्ण्ण— ॥ ३ ॥

[3]त्रिजगत्पोतसदार्चितचरणाशापतिधातो ।
करुणापूर्ण्ण— ॥ ४ ॥

त्रिगुणातीत विधारक परितो देहि सुभक्तिम् ।
करुणापूर्ण्ण— ॥ ५ ॥

मरणप्राणद पालक जगदीशाव सुभक्तिम् ।
करुणापूर्ण्ण — ॥ ६ ॥

शरणं कारण भावन भव मे तात सदाऽलम् ।
करुणापूर्ण्ण — ॥ ७ ॥

तरुणादित्यसवर्ण्णकचरणाब्जामलकीर्त्ते ।
करुणापूर्ण्ण — ॥ ८ ॥

---

१ द्वादशमात्रो गाथाप्रभेदोऽयम् । आदौ सगणः, ततो भगणद्वयं विषमपादयोः, सगणभगणौ गुरुद्वयं च समयोरिति ।

२ परमानन्दसुध अहो इति च्छेदः । आनन्द एव सुधा आस्वाद्यत्वेन, सा परमा यस्य । अद्भुतत्वादहो ! परमानन्दं सुष्ठु दधाति ददातीति वा, धाञ् दाने । परमानन्द, सुधाहो इति वा । सुधामधुरा आहूः आहूतिर्यस्य । "मधुरादपि यन्मधुरं मधुरानाथस्य नाम" इत्युक्तं हि । परमानन्दसुधाहो इत्येकं वा पदम् । परमानन्ददात्री आहूर्यस्य । यन्नाम मौक्तानन्ददं स भगवान् । सकलध्वान्तविनाशनी परमानन्दसुधा च आहूर्यस्येति समस्तमेकं वा पदम् ।

३ त्रिष्वपि जगत्सु ये पोता वत्सभूता ब्रह्माद्यास्तैः सदार्चितचरण । स किल जगत्पिता । त्रीण्यपि जगन्ति तस्य पोतस्थानीयानि । अथच, त्रिजगत्पोत, पोत इव पोतः, नौरिव तारक । आशापतयो दिक्पाला इन्द्रादयः तेषामपि धातुः धारकः । 'य उ त्रिधातु' इत्यादिवत् । अथच, 'प्राणो वा आशाया भूयान्' इत्युक्तेः आशापतिः प्राणः । तस्यापि धारकः ।

[1]सलिलप्रोत्थसरागकमणिवर्ण्णोच्चनखादे ।<br>
करुणापूर्ण्ण — ॥ ९ ॥

[2]कजतूणीनिभपावनवरजङ्घामितशक्ते ।<br>
करुणापूर्ण्ण — ॥ १० ॥

असनोत्फुल्लसुपुष्पकसमवर्ण्णावरणान्ते[3] ।<br>
करुणापूर्ण्ण— ॥ ११ ॥

शतमोदोद्भवसुन्दरवरपद्मोत्थितनाभे ।<br>
करुणापूर्ण्ण — ॥ १२ ॥

इभहस्तप्रभशोभनपरमोरुस्थरमाळे ।<br>
करूणापूर्ण्ण — ॥ १३ ॥

जगदागूहकपल्लवसमकुक्षे शरणादे ।<br>
करुणापूर्ण्ण— ॥ १४ ॥

[4]जगदम्बामलसुन्दरिगृहवक्षोवरयोगिन् ।<br>
करुणापूर्ण्ण— ॥ १५ ॥

दितिजान्तप्रदचक्रदरगदायुग्वरबाहो ।<br>
करुणापूर्ण्ण— ॥ १६ ॥

परमज्ञानमहानिधिवदनश्रीरमणेन्दो ।<br>
करुणापूर्ण्ण— ॥ १७ ॥

---

१ सलिलप्रोत्थं जलजं पद्ममिति यावत् । तेन समानरागो मणिः पद्मरागमणिः । तत्सवर्ण्णनखाग्रः । अथच सलिलप्रोत्थेति मत्स्यकूर्म्मवराहान्, दैत्यासृजा सरागकमणिवर्ण्णोच्चनखादे इति नारसिंहरूपं च स्फोरयति ।

२ कजः कामः । मनोजत्वात् । "को ब्रह्मात्मानिलार्क्काग्निचित्तधीयमकेकिषु" इति नानार्त्थरत्नमाला । कं सुखं जनयतीति च । केन परमात्मना जायत इति वा कजः कामः । तूणी तूणीरम् । अथच कः प्रजापतिरुद्दिष्ट इति वचनात् कः कश्यपप्रजापतिः । तज्जेति वामनावतारं स्फोरयति । तूणीभ्यां शत्रुक्षयाय पृष्ठे निबद्धाभ्यां नितरां भान्तीति भार्ग्गवराघवौ रामौ यादवः कृष्णश्च तूणीनिभाः । पावनवरजङ्घेति दैत्यमोहनार्त्थमनावृतजङ्घाद्यङ्गो बुद्धः । अमितशक्तिरिति युगान्ते लोकक्षयाय करकलितकरवाळः कल्की ।

३ अन्ते इति भिन्नं पदम् । अन्तिरन्तिकः । वक्ष्यति हि 'तदेवान्तिकमन्तिकात्' इति । अथच आवरणान्ते अविद्यावरणक्षये संसारनिरसन, पुनरुत्फुल्लनीलोत्पलसमवर्ण्णतया भक्तैर्न्निर्वर्ण्णित ।

४ अमलसुन्दरी जगदम्बा जगदम्बामलसुन्दरी । अथच अतिशयेन सुन्दरं सुन्दरि गृहम् । "तृतीयोऽतिशये" ।

निखिलाघौघविनाशकपरसौख्यप्रदहृष्टे ।
करुणापूर्ण्ण वरप्रद चरितं ज्ञापय मे ते ॥ १८ ॥

परमानन्दसुतीर्थसुमुनिराजो हरिगाथाम् ।
कृतवान् नित्यसुपूर्ण्णकपरमानन्दपदैषिन्[1] ॥ १९ ॥

---

१ परमानन्दपदैषिन् भक्तवर्ग त्वदर्थं मुनिराज इमां हरिगाथां कृतवान् । न तु स्वार्थम् । स्वस्य नित्यं भगवत्स्मरणशरणस्य प्रळयेऽपि प्रतिभातपरावरस्य कादाचित्कस्तुत्यनवसरात् । एकान्तत्वेन परमानन्दपदैषित्वाभावाच्च । "एकान्तानां न कस्यचिदर्थे नारायणो देवः" इति स्वयमेवाऽह हि । एतेन "परमानन्दपदैषी" इति प्र. पाठः प्रमाद एवेति भाति ।

[ [1]एकादशं स्तोत्रम् ]

ॐ ॥ उदीर्ण्णमजरं दिव्यममृतस्यन्द्यधीशितुः ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ १ ॥

सर्ववेदपदोद्गीतमिन्दिराधारमुत्तमम् ।
आनन्दस्य— ॥ २ ॥

सर्वदेवादिदेवस्य विदारितमहत्तमः ।
आनन्दस्य— ॥ ३ ॥

उदारमादरान्नित्यमनिन्द्यं सुन्दरीपतेः ।
आनन्दस्य— ॥ ४ ॥

इन्दीवरोदरनिभं सुपूर्ण्णं वादिमोहनम्[2] ।
आनन्दस्य— ॥ ५ ॥

दातृ सर्वामरैश्वर्यविमुक्त्यादेरहो वरम् ।
आनन्दस्य— ॥ ६ ॥

दूराद् दूरतरं यत्तु तदेवान्तिकमन्तिकात् ।
आनन्दस्य— ॥ ७ ॥

पूर्णसर्वगुणैकार्ण्णमनाद्यन्तं सुरेशितुः ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम ॥ ८ ॥

आनन्दतीर्थमुनिना हरेरानन्दरूपिणः ।
कृतं स्तोत्रमिदं पुण्यं पठन्नानन्दमाप्नुयात्[3] ॥ ९ ॥

---

१ यद्यपीदमुत्तरं च स्तोत्र सम्प्रति हृषीकेशतीर्थीये नोपलभ्यते । तावान् भागः गलितः । पुरात्वे त्वासीत् । पूर्वदर्शनस्मरणेन चात्र पाठः समुद्धृतः ।

२ "वादिमोहदम्" इति क्वचित् कोशेषु । ३ "–नन्दतामियात्" इति च कोशेषु ।

[द्वादशं स्तोत्रम्]

ॐ ॥ [1]आनन्द मुकुन्द अरविन्दनयन ।
आनन्दतीर्थपरानन्दवरद ॥ १ ॥

सुन्दरिमन्दिर गोविन्द वन्दे ।
आनन्द— ॥ २ ॥

[2]चन्द्रकमन्दिरनन्दक वन्दे ।
आनन्द— ॥ ३ ॥

[3]चन्द्रसुरेन्द्रसुवन्दित वन्दे ।
आनन्द— ॥ ४ ॥

वृन्दारवृन्दसुवन्दित वन्दे ।
आनन्द— ॥ ५ ॥

[4]मन्दिरस्यन्दनस्यन्दक वन्दे ।
आनन्द— ॥ ६ ॥

---

१ अयनपि षोडशमात्रो गाथाभेदः । क्वचिच्च चरणेषु एकमात्राधिक्यं न गानविरोधि ।

२ क्वचित्तु तृतीयं चतुर्थं च पद्यं व्यत्यासेन पठ्यते । चन्द्रसुरेन्द्रसुवन्दितेत्यादौ । ततः परं–चन्द्रकमन्दिर–इत्यादीति । चन्द्रकमन्दिरं मयूरबर्हम्, शिरसि धृतेन तेन नन्दक । चन्द्रकमन्दिर नन्दक इति भिन्ने वा पदे । चन्द्रस्य कस्य दक्षप्रजापतेश्चाऽश्रय । लोकनन्दक । तयोर्जामातृश्वशुरयोर्विरोधे स्वयमेव तत्र रक्षको बभूवेत्यर्थः । ननु दक्ष-शापाद् विमोचनं चन्द्रस्य रुद्रादिति श्रूयते । तत् कथं मुकुन्दो रक्षक इत्युच्यते ? अस्याप्युत्तरम्—चन्द्रकमन्दिर चन्द्रः के शिरसि यस्य स चन्द्रको रुद्रस्तस्यापि मन्दिरमाश्रयो नन्वयम् । चन्द्रक इत्यल्पश्चन्द्रः, चन्द्रकलेति यावत्, शिरसि तन्मन्दिरस्य शिवस्य नन्दकः इत्येकं वा पदम् । श्वशुरशापमोक्षणेन चन्द्रस्य कं सुखं यस्मादिति वा चन्द्रकः । ततः सर्वमन्दिर, सर्वनन्दक इति द्वे पदे । अथच मन्दिरस्य वरुणस्य जामातृत्वेन नन्दक । "मन्दिरो मकरावासे" इत्यभिधानात् ।

३ अत एव चन्द्रसुरेन्द्राभ्यां चन्द्रदक्षाभ्यां सुवन्दित । "दक्षश्चेन्द्रनामा सहीन्दुं राय यत् पुरा" इत्यन्यत्र स्वयमेवाऽह हि । अथच सुरेन्द्रः सुरगुरुः बृहस्पतिः । ताराविवादे चन्द्रसुरेन्द्राभ्यां सुवन्दित । अथच चन्द्रदेवेन्द्रादिसमस्तदेववन्दित । एतदेवोत्तरपद्येन 'वृन्दारवृन्दसुवन्दित वन्दे' इति स्फुटीक्रियते ।

४ कोशान्तरे "मन्दारस्यन्दितमन्दिर वन्दे" इति षष्ठं पद्यम् । मन्दिरं कुरुनगरं प्रति, तत्रापि विदुरगृहं प्रति स्वं स्यन्दनं स्यन्दयति दूत्यं निर्वोढुम् । "मन्दिरं नगरेऽगारे" इति मेदिनी । अथच यज्ञमन्दिरं प्रति स्यन्दनं स्यन्दयति । उक्तं हि— "या सुरथा रथीतमोभा देवा दिविस्पृशा । अश्विना ता हवामहे" इत्यृग्वेदे । "नहि वामस्ति दूरके यत्रा रथेन गच्छथः" इतिच ।

इन्दिरानन्दक सुन्दर वन्दे ।
आनन्द— ॥ ७ ॥

[1]मन्दारस्यन्दितमन्दिर वन्दे ।
आनन्द— ॥ ८ ॥

आनन्दचन्द्रिकास्यन्दक[2] वन्दे ।
आनन्दतीर्थपरानन्दवरद[3] ॥ ९ ॥

---

१ क्वचित् कोशे एतच्चरणस्थाने "मन्दिरस्यन्दनस्पन्दक" इति पाठः पठ्यते । मन्दारः पारिजातद्रुः सत्यभामार्थं येन स्वमन्दिरं प्रति स्यन्दितः आनीतः । "मन्दारः पारिभद्रे" इत्यभिधानम् । पारिभद्रः पारिजातः । अथच मन्दाराख्यकल्पतरोः कुसुमैः स्यन्दितमन्दिरः । यदङ्गणे कुसुमानि विकीर्णानीति यावत् ।

२ "–चन्द्रिकास्पन्दक" इति क्वचित् पाठान्तरम् ।

३ अस्य स्तोत्रनिकुरम्बस्य अध्यायक्रमः पाठक्रमश्च प्रचलितपाठे बहुधा भिन्न इति प्र. पाठः पूर्वं न निर्दिष्टः । अत्र पुनरन्ते अध्येतृसौकर्याय समग्रा प्रचलिताऽऽनुपूर्वी प्रदर्श्यते । तद्यथा—

ॐ ॥ वन्दे वन्द्यं सदानन्दं वासुदेवं निरञ्जनम् ।
इन्दिरापतिमाद्यादिवरदेशवरप्रदम् ॥ १ ॥
नमामि निखिलाधीशकिरीटाघृष्टपीठवत् ।
हृत्तमःशमनेऽर्काभं श्रीपतेः पादपङ्कजम् ॥ २ ॥
जाम्बूनदाम्बराधारं नितम्बं चिन्त्यमीशितुः ।
स्वर्णमञ्जीरसंवीतमारूढं जगदम्बया ॥ ३ ॥
उदरं चिन्त्यमीशस्य तनुत्वेऽप्यखिलम्भरम् ।
वलित्रयाङ्कितं नित्यमुपगूढं श्रियैकया ॥ ४ ॥
स्मरणीयमुरो विष्णोरिन्दिरावासमुत्तमम् ।
अनन्तमन्तवदिव भुजयोरन्तरं गतम् ॥ ५ ॥
चक्रशङ्खगदापद्मधराश्चिन्त्या हरेर्भुजाः ।
पीनवृत्ता जगद्रक्षाकेवलोद्योगिनोऽनिशम् ॥ ६ ॥
सन्ततं चिन्तयेत्कण्ठं भास्वत्कौस्तुभभासकम् ।
वैकुण्ठस्याखिला वेदा उद्गीर्यन्तेऽनिशं यतः ॥ ७ ॥
स्मरेत यामिनीनाथसहस्रामितकान्तिमत् ।
भवतापापनोदीड्यं श्रीपतेर्मुखपङ्कजम् ॥ ८ ॥

पूर्णानन्यमुखोद्भासि मन्दस्मितमधीशितुः ।
गोविन्दस्य सदा चिन्त्यं नित्यानन्दपदप्रदम् ॥ ९ ॥
स्मरामि भवसन्तापहानिदामृतसागरम् ।
पूर्णानन्दस्य रामस्य सानुरागावलोकनम् ॥ १० ॥
ध्यायेदजस्रमीशस्य पद्मजादिप्रतीक्षितम् ।
भ्रूभङ्गं पारमेष्ठ्यादिपददायि विमुक्तिदम् ॥ ११ ॥
सन्ततं चिन्तयेऽनन्तमन्तकाले विशेषतः ।
नैवोदापुर्गृणन्तोऽन्तं यद्गुणानामजादयः ॥ १२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे
प्रथमोऽध्यायः

सुजनोदधिसंवृद्धिपूर्णचन्द्रो गुणार्णवः ।
अमन्दानन्दसान्द्रो नः प्रीयतामिन्दिरापतिः ॥ १ ॥
रमाचकोरीविधवे दुष्टदर्पोदवह्नये ।
सत्पान्थजनगेहाय नमो नारायणाय ते ॥ २ ॥
चिदचिद्भेदमखिलं विधायाऽधाय भुञ्जते ।
अव्याकृतगृहस्थाय रमाप्रणयिने नमः ॥ ३ ॥
अमन्दगुणसारोऽपि मन्दहासेन वीक्षितः ।
नित्यमिन्दिरयाऽऽनन्दसान्द्रो यो नौमि तं हरिम् ॥ ४ ॥
वशी वशे न कस्यापि योऽजितो विजिताखिलः ।
सर्वकर्ता न क्रियते तं नमामि रमापतिम् ॥ ५ ॥
अगुणाय गुणोद्रेकस्वरूपायाऽदिकारिणे ।
विदारितारिसङ्घाय वासुदेवाय ते नमः ॥ ६ ॥
आदिदेवाय देवानां पतये सादितारये ।
अनाद्यज्ञानपाराय नमो वरवराय ते ॥ ७ ॥
अजाय जनयित्रेऽस्य विजिताखिलदानव ।
अजादिपूज्यपादाय नमस्ते गरुडध्वज ॥ ८ ॥
इन्दिरामन्दसान्द्राग्र्यकटाक्षप्रेक्षितात्मने ।
अस्मदिष्टैककार्याय पूर्णाय हरये नमः ॥ ९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे
द्वितीयोऽध्यायः

कुरु भुंक्ष्व च कर्म निजं नियतं हरिपादविनम्रधिया सततम् ।
हरिरेव परो हरिरेव गुरुर्हरिरेव जगत्पितृमातृगतिः ॥ १ ॥

न ततोऽस्त्यपरं जगतीड्यतमं परमात्परतः पुरुषोत्तमतः ।
तदलं बहुलोकविचिन्तनया प्रवणं कुरु मानसमीशपदे ॥ २ ॥
यततोऽपि हरेः पदसंस्मरणे सकलं ह्यघमाशु लयं व्रजति ।
स्मरतस्तु विमुक्तिपदं परमं स्फुटमेष्यति तत्किमपाक्रियते ॥ ३ ॥
शृणुतामलसत्यवचः परमं शपथेरितमुच्छ्रितबाहुयुगम् ।
न हरेः परमो न हरेः सदृशः परमः स तु सर्वचिदात्मगणात् ॥ ४ ॥
यदि नाम परो न भवेत्स हरिः कथमस्य वशे जगदेतदभूत् ।
यदि नाम न तस्य वशे सकलं कथमेव तु नित्यसुखं न भवेत् ॥ ५ ॥
न च कर्म्मविमामलकालगुणप्रभृतीशमचित्तनु तद्धि यतः ।
चिदचित्तनु सर्वमसौ तु हरिर्यमयेदिति वैदिकमस्ति वचः ॥ ६ ॥
व्यवहारभिदाऽपि गुरोर्ज्जगतां न तु चित्तगता स हि चोद्यपरम् ।
बहवः पुरुषाः पुरुषप्रवरो हरिरित्यवदत्स्वयमेव हरिः ॥ ७ ॥
चतुराननपूर्वविमुक्तगणा हरिमेत्य तु पूर्ववदेव सदा ।
नियतोच्चविनीचतयैव निजां स्थितिमापुरिति स्म परं वचनम् ॥ ८ ॥
आनन्दतीर्थसन्नाम्ना पूर्णप्रज्ञाभिधायुजा ।
कृतं हर्यष्टकं भक्त्या पठतः प्रीयते हरिः ॥ ९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे
तृतीयोऽध्यायः

निजपूर्णसुखामितबोधतनुः परशक्तिरनन्तगुणः परमः ।
अजरामरणः सकलार्त्तिहरः कमलापतिरीड्यतमोऽवतु नः ॥ १ ॥
यदसुप्तिगतोऽपि हरिः सुखवान् सुखरूपिणमाहुरतो निगमाः ।
स्वमतिप्रभवं जगदस्य यतः परबोधतनुं च ततः खपतिम् ॥ २ ॥
बहुचित्रजगद्बहुधाकरणात्परशक्तिरनन्तगुणः परमः ।
सुखरूपममुष्य पदं परमं स्मरतस्तु भविष्यति तत्सततम् ॥ ३ ॥
स्मरणे हि परेशितुरस्य विभोर्म्मलिनानि मनांसि कुतः करणम् ।
विमलं हि पदं परमं स्वरतं तरुणार्कसवर्णमजस्य हरेः ॥ ४ ॥
विमलैः श्रुतिशाणनिशाततमैः सुमनोऽसिभिराशु निहत्य दृढम् ।
बलिनं निजवैरिणमात्मतमोभिदमीशमनन्तमुपास्स्व हरिम् ॥ ५ ॥
स हि विश्वसृजो विभुशम्भुपुरन्दरसूर्यमुखानपरानमरान् ।
सृजतीड्यतमोऽवति हन्ति निजं पदमापयति प्रणतान्सुधिया ॥ ६ ॥
परमोऽपि रमेशितुरस्य समो न हि कश्चिदभून्न भविष्यति च ।
क्वचिदद्यतनोऽपि न पूर्णसदागणितेड्यगुणानुभवैकतनोः ॥ ७ ॥

इति देववरस्य हरेः स्तवनं कृतवान् मुनिरुत्तममादरतः ।
सुखतीर्थपदाभिहितः पठतस्तदिदं भवति ध्रुवमुच्चसुखम् ॥ ८ ॥

इति श्रीमदानन्दतीर्थभगत्पादाचार्यविरचिते द्वादशस्तोत्रे
चतुर्थोऽध्यायः

वासुदेवापरिमेयसुधामन् शुद्धसदोदित सुन्दरिकान्त ।
धराधरधारि(र)णवेधुरधर्तः सौधृतिदीधितिवेधृविधातः ॥ १ ॥
अधिकबन्धं रन्धय बोधाच्छिन्धि पि(वि)धानं बन्धुरमद्धा ।
केशव केशव शासक वन्दे पाशधरार्चि(च्यु)त शूरवरेश ॥ २ ॥
नारायणामलकारण वन्दे कारणकारण पूर्णवरेण्य ।
माधव माधव साधक वन्दे बाधक बोधक शुद्धसमाधे ॥ ३ ।
गोविन्द गोविन्द पुरन्दर वन्दे स्कन्दसुनन्दनवन्दितपाद ।
विष्णो सृजिष्णो ग्रसिष्णो विवन्दे कृष्ण सदुष्णवधिष्णो सुधृष्णो ॥ ४ ॥
मधुसूदन दानवसादन वन्दे दैवतमोदन(दित) वेदितपाद ।
त्रिविक्रम विक्रम निष्क्रम वन्दे सुक्रम संक्रमहुङ्कृतवक्त्र ॥ ५ ॥
वामन वामन भामन वन्दे सामन सीमन सामन सानो ।
श्रीधर श्रीधर शन्धर वन्दे भूधर वार्धर कन्धरधारिन् ॥ ६ ॥
हृषीकेश सुकेश परेश विवन्दे शरणेश बलेश कलेश सुखेश ।
पद्मनाभ शुभोद्भव वन्दे सम्भृतलोकभराभर भूरे ॥ ७ ॥
दामोदर दूरतरान्तर वन्दे दारितपारगपार परस्मात् ॥ ८ ॥
आनन्दतीर्थमुनीन्द्रकृता हरिगीतिरियं परमादरतः ।
परलोकविलोकनसूर्यनिभा हरिभक्तिविवर्धनशौण्डतमा ॥ ९ ॥

इति श्रीमदानन्दतीर्थभगत्पादाचार्यविरचिते द्वादशस्तोत्रे
पञ्चमोऽध्यायः

देवकिनन्दन नन्दकुमार वृन्दावनाञ्चन गोकुलचन्द्र ।
कन्दफलाशन सुन्दररूप नन्दितगोकुलवन्दितपाद ॥ १ ॥
इन्द्रसुतावक नन्दकहस्त चन्दनचर्चित सुन्दरिनाथ ।
इन्दीवरोदरदलनयन मन्दरधारिन् गोविन्द वन्दे ॥ २ ॥
चन्द्रशतानन कुन्दसुहास नन्दितदैवतानन्दसुपूर्ण ।
मत्स्यकरूपलयोदविहारिन् वेदविनेतृचतुर्मुखवन्द्य ॥ ३ ॥
कूर्म्मस्वरूपक मन्दरधारिन् लोकविधारक देववरेण्य ।
सूकररूपक दानवशत्रो भूमिविधारक यज्ञवराङ्ग ॥ ४ ॥
देव नृसिंह हिरण्यकशत्रो सर्वभयान्तक दैवतबन्धो ।
वामन वामन माणववेष दैत्यवरान्तक कारणरूप ॥ ५ ॥

राम भृगूद्वह सूर्ज्जितदीप्ते क्षत्रकुलान्तक शम्भुवरेण्य ।
राघव राघव राक्षसशत्रो मारुतिवल्लभ जानकि(की)कान्त ॥ ६ ॥
देवकि(की)नन्दन सुन्दररूप रुक्मिणि(णी)वल्लभ पाण्डवबन्धो ।
दैत्यविमोहक नित्यसुखादे देव सुबोधक बुद्धस्वरूप ॥ ७ ॥
दुष्टकुलान्तक कल्किस्वरूप धर्म्मविवर्धन मूलयुगादे ।
नारायणामलकारणमूर्त्ते पूर्णगुणार्णव नित्यसुबोध ॥ ८ ॥
आनन्दतीर्थ(सुख)मुनीन्द्रकृता हरिगाथा
पापहरा शुभा नित्यसुखार्था ॥ ९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे
षष्ठोऽध्यायः

विश्वस्थितिप्रलयसर्ग्गमहाविभूतिवृत्तिप्रकाशनियमावृतिबन्धमोक्षाः ।
यस्या अपाङ्गलवमात्रत ऊर्ज्जिता सा श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ १ ॥
ब्रह्मेशशक्ररविधर्म्मशशाङ्कपूर्वगीर्वाणसन्ततिरियं यदपाङ्गलेशम् ।
आश्रित्य विश्वविजयं विसृजत्यचिन्त्या श्रीर्यत्— ॥ २ ॥
धर्मार्त्थकामसुमतिप्रचयाद्यशेषसन्मङ्गलं विदधते यदपाङ्गलेशम् ।
आश्रित्य तत्प्रणतसत्प्रणता अपीड्याः श्रीर्यत्— ॥ ३ ॥
षड्वर्ग्गनिग्रहनिरस्तसमस्तदोषा ध्यायन्ति विष्णुमृषयो यदपाङ्गलेशम् ।
आश्रित्य यानपि समेत्य न याति दुःखं श्रीर्यत्— ॥ ४ ॥
शेषाहिवैरिशिवशक्रमनुप्रधानचित्रोरुकर्म्मरचनं यदपाङ्गलेशम् ।
आश्रित्य विश्वमखिलं विदधाति धाता श्रीर्यत्— ॥ ५ ॥
शक्रोग्रदीधितिहिमाकरसूर्यसूनुपूर्वं निहत्य निखिलं यदपाङ्गलेशम् ।
आश्रित्य नृत्यति शिवः प्रकटोरुशक्तिः श्रीर्यत्— ॥ ६ ॥
तत्पादपङ्कजमहासनतामवाप शर्वादिवन्द्यचरणो यदपाङ्गलेशम् ।
आश्रित्य नागपतिरन्यसुरैर्दुरापां श्रीर्यत्— ॥ ७ ॥
नागारिरुग्रबलपौरुष आप विष्णोर्वाहत्वमुत्तमजवो यदपाङ्गलेशम् ।
आश्रित्य शक्रमुखदेवगणैरचिन्त्यं श्रीर्यत्— ॥ ८ ॥
आनन्दतीर्त्थमुनिसन्मुखपङ्कजोत्थं साक्षाद्रमाहरिमनःप्रियमुत्तमार्त्थम् ।
भक्त्या पठत्यजितमात्मनि सन्निधाय यः स्तोत्रमेतदभियाति तयोरभीष्टम् ॥ ९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे
सप्तमोऽध्यायः

वन्दिताशेषवन्द्योरुवृन्दारकं चन्दनाचर्च्चितोदारपीनांसकम् ।
इन्दिराचञ्चलापाङ्गनीराजितं मन्दरोद्धारिवृत्तोद्भुजाभोगिनम् ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनं प्रीणयामो वासुदेवम् ॥ १ ॥

सृष्टिसंसारलीलाविलासाततं पुष्टषाड्गुण्यसद्विग्रहोल्लासिनम् ।
दुष्टनिश्शेषसंहारकर्म्मोद्यतं हृष्टपुष्टानुशिष्टप्रजासंश्रयम् ।
प्रीणयामो— ॥ २ ॥

उन्नतप्रार्त्थिताशेषसंसाधकं सन्नतालौकिकानन्ददश्रीपदम् ।
भिन्नकर्म्माशयप्राणिसम्प्रेरकं तन्न किं नेति विद्वत्सु मीमांसितम् ।
प्रीणयामो— ॥ ३ ॥

विप्रमुख्यैः सदा वेदवादोन्मुखैः सुप्रतापैः क्षितीशेश्वरैश्चार्च्चितम् ।
अप्रतर्क्योरुसंविद्गुणं निर्म्मलं सु(स)प्रकाशाजरानन्दरूपं परम् ।
प्रीणयामो— ॥ ४ ॥

अत्ययो यस्य केनापि न क्वापि हि प्रत्ययो यद्गुणेषूत्तमानां परः ।
सत्यसङ्कल्प एको वरेण्यो वशी मत्यनूनैः सदा वेदवादोदितः ।
प्रीणयामो— ॥ ५ ॥

पश्यतां दुःखसन्ताननिर्म्मूलनं दृश्यतां दृश्यतामित्यजेशार्च्चितम् ।
नश्यतां दूरगं सर्वदाऽप्यात्मगं वश्यतां स्वेच्छया सज्जनेष्वागतम् ।
प्रीणयामो— ॥ ६ ॥

अग्रजं यः ससर्ज्जाजमग्र्याकृतिं विग्रहो यस्य सर्वे गुणा एव हि ।
उग्र आद्योऽपि यस्याऽत्मजाग्र्यात्मजः सद्गृहीतः सदा यः परं दैवतम् ।
प्रीणयामो— ॥ ७ ॥

अच्युतो यो गुणैर्न्नित्यमेवाखिलैः प्रच्युतोऽशेषदोषैः सदापूर्त्तितः ।
उच्यते सर्ववेदोरुवादैरजः स्वर्च्चितो ब्रह्मरुद्रेन्द्रपूर्वैः सदा ।
प्रीणयामो— ॥ ८ ॥

धार्यते येन विश्वं सदाऽजादिकं वार्यतेऽशेषदुःख निजध्यायिनाम् ।
पार्यते सर्वमन्यैर्न्न यत्पार्यते कार्यते चाखिलं सर्वभूतैः सदा ।
प्रीणयामो— ॥ ९ ॥

सर्वपापानि यत्संस्मृतेः संक्षयं सर्वदा यान्ति भक्त्या विशुद्धात्मनाम् ।
शर्वगुर्वादिगीर्वाणसंस्थानदः कुर्वते कर्म्म यत्प्रीतये सज्जनाः ।
प्रीणयामो— ॥ १० ॥

अक्षयं कर्म्म यस्मिन् परे स्वर्प्पितं प्रक्षयं यान्ति दुःखानि यन्नामतः ।
अक्षरो योऽजरः सर्वदेवामृतः कुक्षिगं यस्य विश्वं सदाजादिकम् ।
प्रीणयामो— ॥ ११ ॥

नन्दितीर्त्थोरुसन्नामिनो नन्दिनः सन्दधानाः सदानन्ददेवे मतिम् ।
मन्दहासारुणापाङ्गदत्तोन्नतिं न(व)न्दिताशेषदेवादिवृन्दं सदा ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनं प्रीणयामो वासुदेवम् ॥ १२ ॥

इति श्रीमदानन्दतीर्त्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे
अष्टमोऽध्यायः

अतिमततमोगिरिसमितिविभेदन पितामहभूतिद गुणगणनिलय ।
शुभतमकथाशय परम सदोदित जगदेककारण राम रमारमण ॥ १ ॥
विधिभवमुखसुरसततसुवन्दित रमामनोवल्लभ भव मम शरणम् ।
शुभतम— ॥ २ ॥
अगणितगुणगणमयशरीर हे विगतगुणेतर भव मम शरणम् ।
शुभतम— ॥ ३ ॥
अपरिमितसुखनिधिविमलसुदेह हे विगतसुखेतर भव मम शरणम् ।
शुभतम— ॥ ४ ॥
प्रचलितलयजलविहरण शाश्वतसुखमय मीन हे भव मम शरणम् ।
शुभतम— ॥ ५ ॥
सुरदितिजसुबलविलुलितमन्दरधर वरकूर्म्म हे भव मम शरणम् ।
शुभतम— ॥ ६ ॥
सगिरिवरधरातलवह सुसूकर परम विबोध हे भव मम शरणम् ।
शुभतम— ॥ ७ ॥
अतिबलदितिसुतहृदयविभेदन जय नृहरेऽमल भव मम शरणम् ।
शुभतम— ॥ ८ ॥
बलिमुखदितिसुतविजयविनाशन जगदवनाजित भव मम शरणम् ।
शुभतम— ॥ ९ ॥
अविजितकुनृपतिसमितिविखण्डन रमावर वीरप भव मम शरणम् ।
शुभतम— ॥ १० ॥
खरतरनिशिचरदहन परामृत रघुवर मानद भव मम शरणम् ।
शुभतम— ॥ ११ ॥
सुललिततनुवर वरद महाबल यदुवर पार्थप भव मम शरणम् ।
शुभतम— ॥ १२ ॥
दितिसुतविमोहन विमलविबोधन परगुणबुद्ध हे भव मम शरणम् ।
शुभतम— ॥ १३ ॥
कलिमलहुतवह सुभग महोत्सव शरणद कल्कीश हे भव मम शरणम् ।
शुभुतम— ॥ १४ ॥
अखिलजनिविलय परसुखकारण परपुरुषोत्तम भव मम शरणम् ।
शुभतम— ॥ १५ ॥
इति तव नुतिवरसततरतेर्भव सुशरणमुरुसुखतीर्थमुनेर्भगवन् ।
(शुभतम—) ॥ १६ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे
नवमोऽध्यायः

अवन श्रीपतिरप्रतिरधिकेशादिभवादे ।
करुणापूर्ण्ण वरप्रद चरितं ज्ञापय मे ते ॥ १ ॥
सुरवन्द्याधिप सद्वरभरिताशेषगुणालम् ।
करुणापूर्ण्ण — ॥ २ ॥
सकलध्वान्तविनाशक परमानन्दसुधाहो ।
करुणापूर्ण्ण— ॥ ३ ॥
त्रिजगत्पोतसदार्चितचरणाशापतिधातो ।
करुणापूर्ण्ण — ॥ ४ ॥
त्रिगुणातीतविधारक परितो देहि सुभक्तिम् ।
करुणापूर्ण्ण— ॥ ५ ॥
मरणप्राणद पालक जगदीशाव सुभक्तिम् ।
करुणापूर्ण्ण — ॥ ६ ॥
शरणं कारणभावन भव मे तात सदालम् ।
करुणापूर्ण्ण — ॥ ७ ॥
तरुणादित्यसवर्ण्णकचरणाब्जामलकीर्त्ते ।
करुणापूर्ण्ण— ॥ ८ ॥
सलिलप्रोत्थसरागकमणिवर्ण्णोच्चनखादे ।
करुणापूर्ण्ण— ॥ ९ ॥
खजतूणीनिभपावनवरजङ्घामितशक्ते ।
करुणापूर्ण्ण— ॥ १० ॥
इभहस्तप्रभशोभनपरमोरुस्थरमाले ।
करुणापूर्ण्ण— ॥ ११ ॥
असमो(नो)त्फुल्लसुपुष्पकसमवर्ण्णावरणान्ते ।
करुणापूर्ण्ण— ॥ १२ ॥
शतमोदोद्भवसुन्दरवरपद्मोत्थितनाभे ।
करुणापूर्ण्ण— ॥ १३ ॥
जगदागूहकपल्लवसमकुक्षे शरणादें ।
करुणापूर्ण्ण— ॥ १४ ॥
जगदम्बामलसुन्दरगृहवक्षोवरयोगिन् ।
करुणापूर्ण्ण — ॥ १५ ॥
दितिजान्तप्रद चक्रदरगदायुग्वरबाहो ।
करुणापूर्ण्ण— ॥ १६ ॥
परमज्ञानमहानिधिवदनश्रीरमणेन्दो ।
करुणापूर्ण्ण— ॥ १७ ॥

निखिलाघौघविनाशक परसौख्यप्रदहृष्टे ।
करुणापूर्ण — ॥ १८ ॥
परमानन्दसुतीर्थमुनिराजो हरिगाथाम् ।
कृतवान्नित्यसुपूर्णकपरमानन्दपदैषी ॥ १९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे
दशमोऽध्यायः

उदीर्णमजरं दिव्यममृतस्यन्द्यधीशितुः ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ १ ॥
सर्वदेव(वेद)पदोद्गीतमिन्दिरावासमुत्तमम् । आनन्दस्य — ॥ २ ॥
सर्वदेवादिदेवस्य विदारितमहत्तमः । आनन्दस्य— ॥ ३ ॥
उदारमादरान्नित्यमनिन्द्यं सुन्दरीपतेः । आनन्दस्य— ॥ ४ ॥
इन्दीवरोदरनिभं सुपूर्णं वादिमोहन(द)म् । आनन्दस्य— ॥ ५ ॥
दातृ सर्वामरैश्वर्यविमुक्त्यादेरहो वरम् । आनन्दस्य— ॥ ६ ॥
दूराद्दूरतरं यत्तु तदेवान्तिकमन्तिकात् । आनन्दस्य— ॥ ७ ॥
पूर्णसर्वगुणैकार्णमनाद्यन्तं सुरेशितुः । आनन्दस्य— ॥ ८ ॥
आनन्दतीर्थमुनिना हरेरानन्दरूपिणः ।
कृतं स्तोत्रमिदं पुण्यं पठन्नानन्दतामियात् ॥ ९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे
एकादशोऽध्यायः

आनन्द मुकुन्द अरविन्दनयन । आनन्दतीर्थपरानन्दवरद ॥ १ ॥
सुन्दरीमन्दिर गोविन्द वन्दे । आनन्द-- ॥ २ ॥
चन्द्रसुरेन्द्रसुवन्दित वन्दे । आनन्द— ॥ ३ ॥
चन्द्रकमन्दिर नन्दक वन्दे । आनन्द— ॥ ४ ॥
वृन्दारकवृन्दसुवन्दित वन्दे । आनन्द— ॥ ५ ॥
मन्दारसूनसुचर्चित वन्दे । आनन्द— ॥ ६ ॥
(मन्दारस्यन्दितमन्दिर वन्दे । आनन्द—) (॥ ७ ॥)
इन्दिरानन्दक सुन्दर वन्दे । आनन्द— ॥ ७ ॥
मन्दिरस्यन्दितस्यन्दक वन्दे । आनन्द — ॥ ८ ॥
आनन्दचन्द्रिका(स्यन्दक)स्पन्दक(न) वन्दे ।
आनन्दतीर्थपरानन्दवरद ॥ ९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे
द्वादशोऽध्यायः

[[1]श्रीकृष्णपद्यम्]

ॐ ॥ [2]अम्बरगङ्गाचुम्बितपादः
पदतलविदलितगुरुतरशकटः ।
कालियनागक्ष्वेळनिहन्ता
सरसिजनवदलविकसितनयनः ॥

कालघनालीकर्बुरकायः
शरशतशकलितरिपुशतनिवहः ।
सन्ततमस्मान् पातु मुरारिः
सततगसमजवखगपतिनिरतः[3] ॥ * ॥

[इति श्रीमदानन्दतीर्थभगवत्पादविरचितं
श्रीकृष्णपद्यम् समाप्तम्]

---

१ "कन्दुकस्तुतिः" इति प्रचलितं नाम ।

२ इदमपूर्वं छन्दोनिबन्धनं न छन्दःशास्त्रेषु कृतनामनिर्देशमिति गाथाविशेष एव । प्रतिपादं षोडशमात्रत्वं नियतम् । परन्तु समविषमयोः पादयोर्गुरुलाघवनियतिर्विभिन्ना । प्रथममादिगुरुर्गणश्चतुर्मात्रः । ततो द्विगुरुः । ततः पुनरादिगुरुः । ततश्च गुरुद्वयमिति षोडशमात्राः विषमपादेषु । अथवा भगणमगणसगणा गुरुश्च विषमपादेषु । सर्वलघवश्चतुर्मात्रास्त्रयो गणाः, अन्तगुरुश्चतुर्थ इति षोडशमात्राः समपादेषु । अथवा नगणचतुष्टयं सगणश्चेति व्यवस्था । यदि प्रसिद्धेषु छन्दस्स्वेव कुत्रचिदन्तर्भावाग्रहः तर्हि पादाकुलकमित्युच्येत । तथाहि तल्लक्षणं मन्दारमरन्दे—"कथं वा द्व्यष्टमात्राभिः पादाकुलकमुच्यते" इति कथं वा गुरुलघुनियतिं विना यथाकथञ्चित् षोडशमात्राभिः पादाकुलकं छन्द इति ।

इदं पद्यं बहुषु मूलकोशेषु न दृश्यते । एकस्मिन् सोदामठीये प्राचीनकोशे तु उपलभ्यते । श्रीकृष्णपद्यमिति च नाम दृश्यते । कन्दुकस्तुतिरिति च प्रसिद्धिः । आचार्याः बाल्ये कन्दुकक्रीडावेलायां कन्दुकप्लुतिं तालैरनुकुर्वदिदं पद्यं विरचयामासुरिति चैतिह्यं श्रूयते । अत एव च कन्दुकस्तुतिरित्यन्वर्थं नाम । आचार्यैः बाल्ये कृतमिति हेतोरेव अस्य तत्कृतग्रन्थेष्वपरिगणनं च सम्भाव्यते । कन्नडभाषायां 'रगळे' इति प्रसिद्धं छन्दोऽनुकुर्वदिदमाचार्योपज्ञमपूर्वं छन्दः 'कन्दुकक्रीडितकम्' इति नूतनेनापि नाम्नाऽऽक्रियेत । यथा वादिराजश्रीचरणकृता मत्तेभच्छन्दोनिबद्धा "प्रोष्ठीशविग्रह—" इत्यादिका दशावतारस्तुतिः अश्वधाटीति । ततश्च भगवत्पादकृतोऽयं नूतनश्छन्दोवतार एव भवति ।

ये पुनरस्य आर्योपगीतिश्छन्द इति भ्रान्तास्ते शोच्या एव । नहि षोडशमात्रः पादः क्वचन आर्याया उपगीतेस्तत्सङ्करस्य वा भवति । षोडशमात्रं मात्राश्छन्दःप्रभेदमजानतां छन्दःशास्त्रगन्धविधुराणामेवैतादृशानि भ्रान्तिविलसितानि सम्भवन्ति ।

३ "–पतिनिलयः" इति केचित् पठन्ति ।

## श्रीकृष्णामृतमहार्णवः

## ह



---

## श्रीतन्त्रसारसङ्ग्रहः